श्रीजानकीजानये नमः ।

श्रीमद्वराहमिहिराचार्यकृतं

# लघुजातकम्

भट्टोत्पल-विन्ध्येश्वरीप्रसादद्विवेदिकृतटीकोपेतम् ।

प्रकाशक

भार्गव पुस्तकालय,

गायघाट, बनार

विक्रमसंवत् १९८

प्रथमावृत्तिः । मूल्य[redacted]१)

श्रीजानकीजानये नमः।

श्रीमद्वराहमिहिराचार्यकृतं

# [ल]घुजातकम्

भट्टोत्पल-विन्ध्येश्वरीप्रसादद्विवेदिकृतटीकोपेतम्।

[क]ाशीस्थभार्गवपुस्तकालयाध्यक्षेण

श्रीमता बाबूकाशीप्रसादभार्गवेण

स्वीये 'भार्गवभूषण'मुद्रणालये मुद्रयित्वा प्रकाशितम्।

विक्रमसंवत् १९८७

प्रथमावृत्तिः। मूल्य

न्तिका को छोड़
विशद टीका करने
नाम संस्कृतटीका द्वा
ग्रन्थान्तरों से मत भेद
रह गई हैं। इससे १९
शालीयज्योतिषमध्यम
कारण तत्तत्स्थलों में उ
समझने में जो
प्रतिपादन कर
अभिप्राय
नाटि
का प्रका
प्रत्यन्तर्दशा
तत्तत्स्थलमें
नहीं
जा

# भूमिका

त्रिस्कन्ध ज्यौतिषशास्त्र के विशेष मर्मज्ञ श्रीमान् वराहमिहिराचार्य रचित यह 'लघुजातक' नामक ग्रन्थ जातकस्कन्ध के जानने वालों के लिये परमोपयोगी है यह बात किसी भी सहृदय दैवज्ञ से छिपी नहीं है। इस में प्रतिपादित गूढ़ विषयों को पञ्चसिद्धान्तिका को छोड़ कर वराहमिहिराचार्य के बनाये सम्पूर्णग्रन्थों पर विशद टीका करने वाले श्रीमान् दैवज्ञप्रवर भट्टोत्पल ने 'शिष्यहिता' नाम संस्कृतटीका द्वारा स्पष्ट कर दिया है। तथापि जहाँ कहीं ग्रन्थान्तरों से मत भेद इत्यादि है, वहाँ ग्रन्थान्तर देखने की अपेक्षा रह गई है। इससे १९३१ ई० से काशिकराजकोयप्रधानसंस्कृतपाठशालीयज्योतिषमध्यमपरीक्षा के पाठ्यग्रन्थों में निर्धारित हो जाने के कारण तत्तत्स्थलों में ज्यो०म० परीक्षा के परीक्ष्य छात्रों को ग्रन्थाशय समझने में जो कठिनाइयाँ पड़ती हैं, उनको ग्रन्थान्तरों के मत का प्रतिपादन करते हुए आचार्य के आशय को स्पष्ट करने के अभिप्राय से मैंने अपनी अल्प बुद्धि के अनुसार इस बालबोधिनी नामिका संस्कृतटीका को लिखा है। स्वदेशीय लग्न, ग्रहस्पष्ट करने का प्रकार, नष्टजातक का उदाहरण और विंशोत्तरीय दशा, अन्तर्दशा, प्रत्यन्तर्दशा इत्यादि के बनाने की विधि इत्यादि विषयों का भी तत्तत्स्थलमें सन्निवेश कर दिया है। जो संस्कृत भाषा का विशेषज्ञान नहीं रखते उनको भी सम्पूर्ण विषयों का ज्ञान भलीभाँति हो जाने के लिये सरल हिन्दीटीका भी कर दिया है।

भूल होना मनुष्यमात्र का धर्म है। इसलिये गहन विषयों के प्रतिपादन में मेरी अल्पबुद्धिके भ्रमवश जो त्रुटियाँ रह गई हों उनको सज्जन विज्ञ क्षमा करें। और तदितरविज्ञ भी मेरी मन्द बुद्धि पर उपहास करते हुए प्रसन्न होने की कृपा करें।

मेरे भ्रम तथा प्रेस के कण्टकादि दोष से जो अशुद्धियाँ रह गई हों उनको सुधारने के अभिप्राय से सहृदय जन मुझे सूचित करें, ताकि दूसरे बार सुधार दी जायँ।

ब्रह्मपुर,
पो०बाजारगोसाईं (आजमगढ़)
ता० १५-१२-३०

सज्जनों का सेवक-
विन्ध्येश्वरीप्रसादद्विवेदी।

# लघुजातकस्य

## विषयानुक्रमणिका ।


| विषयाः | पृ० |
|---|---|
| राशिप्रभेदाऽध्यायः १ । | |
| ग्रन्थकारकृतमङ्गलाचरणम् | १ |
| ग्रन्थप्रयोजनकथनम् | २ |
| होराशास्त्रव्युत्पत्तिः(टी०) | २ |
| कालपुरुषाङ्गविभाग | ५ |
| „ मतान्तरेण ( टी० ) | ६ |
| राशिवर्णज्ञानम् | ७ |
| राशीनां चरादिसंज्ञा दिग्विभागश्च | ८ |
| राशिसंज्ञाबोधकचक्रम् | ११ |
| राशिनवांशाधिपाः | ११ |
| ताराग्रहाणां राशिद्वयाधीशत्वप्रतिपादनम् ( टी० ) | १२ |
| नवांशचक्रम् | १४ |
| होरा-द्रेष्काण-द्वादशांश-त्रिंशांशाधिपाः | १४ |
| यवनाचार्यमतेन होराद्रेष्काणेशाः (टी०) | १६ |
| द्वादशांशचक्रम् | १७ |
| द्रेष्काणचक्रम् | १८ |
| होराचक्रम् | १८ |
| त्रिंशांशाधीशाः | १६ |
| त्रिशांशचक्रम् | २० |
| दिक्कालबलं द्विपदादिसंज्ञाच | २० |

| विषयाः | पृ० |
|---|---|
| राशिबलज्ञानम् | २३ |
| तन्वादिभावसंज्ञा | २४ |
| ग्रन्थान्तरोक्ततन्वादिसंज्ञा | २४ |
| चतुर्थपञ्चमनवमभावानां सं० | २५ |
| तृतीयपञ्चमसप्तमाष्टमद्वादशभावानां संज्ञा | २६ |
| उपचयवर्गोत्तमयोर्लक्षणम् | २७ |
| राशीनां दिनरात्रिबलत्वशीर्षोदयत्वपृष्ठोदयत्वादि० | २८ |
| उच्चनीचमूलत्रिकोणलक्षणम् | ३० |
| उच्चनीचमूलत्रिकोणराशिचक्रम् | ३२ |
| षड्वर्गः | ३३ |
| ग्रहाणां बलाबलाऽध्यायः२। | |
| ग्रहाणामात्माचित्तत्वादिज्ञानम् | ३४ |
| „ पूर्वादिदिक्स्वामित्वं शुभाशुभसंज्ञा च | ३६ |
| „ पुरुषस्त्रीक्लीवसंज्ञा | ३८ |
| „ ब्राह्मणादिवर्णेशसंज्ञा | ३६ |
| „ बलाबलज्ञानम् | ४० |
| „ दीप्ताद्यवस्था (टी०) | ४० |
| „ „ प्रकारान्तरेण „ | ४१ |
| „ दिग्बलं चेष्टाबलं च | ४१ |

| विषयाः | पृ० |
|---|---|
| ग्रहाणां कालबलम् | ४३ |
| ,, नैसर्गिकबलम् | ४४ |
| ,, स्थानबलम् | ४५ |
| ,, दृष्टिविचारः | ४६ |
| मित्रामित्राध्यायः ॥ ३ ॥ | |
| यवनोक्तनिसर्गतत्काल-मित्राणि | ४९ |
| यवनोक्तनैसर्गिकमैत्रीचक्रम् | ५० |
| सत्याचार्योक्तनैसर्गिकमैत्री | ५१ |
| सत्योक्तनैसर्गिकमैत्रीचक्रम् | ५२ |
| पञ्चधामैत्रीलक्षणम् | ५३ |
| पञ्चधामैत्रीचक्रम् | ५५ |
| ग्रहयोनिप्रभेदाध्यायः ॥४॥ | |
| सूर्यस्वरूपम् | ५७ |
| चन्द्रस्वरूपम् | ५८ |
| भौमस्वरूपम् | ५९ |
| बुधस्वरूपम् | ६० |
| गुरुस्वरूपम् | ६० |
| शुक्रस्वरूपम् | ६१ |
| शनिस्वरूपम् | ६२ |
| स्वरूपप्रयोजनम् | ६३ |
| ग्रहाणामवस्थावर्षाणि (टी०) | ६३ |
| आधानाध्यायः ॥५॥ | |
| आधाने मैथुनप्रकारज्ञानम् | ६५ |
| ,, दीपज्ञानम् | ६७ |
| आधानात्सूतिकालज्ञानम् | ६८ |
| आधानात्पित्रोः शुभाशुभज्ञानं | ६९ |
| आधानाद्गर्भावयवोत्पत्तिज्ञानं मासाधिपतयस्तत्प्रयोजनं च | ७१ |
| गर्भसम्भवाऽसंभवज्ञानम् | ७४ |
| गर्भसम्भवयोगनिष्फलत्वम् | ७५ |
| गर्भे पुरुषस्त्रीज्ञानम् | ७६ |

| विषयाः | पृ० |
|---|---|
| यमलसम्भवयोगः | ७७ |
| अन्यो योगः | ७१ |
| सूतिकाध्यायः ॥ ६ ॥ | |
| जातस्य सत्वगुणादिज्ञानं मूर्तिज्ञानं च | ८१ |
| ग्रहाणां सत्वादिगुणाः | ,, |
| जातकस्वरूपज्ञानम् | ८४ |
| जातस्य पितुःपरोक्षेऽपरोक्षे वा जन्मज्ञानम् | ८५ |
| परजातयोगः | ८६ |
| सूतिकागृहद्वारज्ञानं दीपज्ञानं च | ८७ |
| सूतिकागृहस्वरूपम् | ८९ |
| गृहभूमिकाशालाज्ञानम् | ९१ |
| सूतिकाखट्वाज्ञानम् | ९३ |
| नालवेष्टितादिज्ञानम् | ९५ |
| सूतिकागृहे द्रव्यज्ञानम् | ९६ |
| उपसूतिकाज्ञानम् | ९७ |
| अरिष्टाध्यायः ॥७॥ | |
| चन्द्रादरिष्टज्ञानम् | १०० |
| अरिष्टान्तरम् | १०१ |
| अरिष्टान्तरम् | १०३ |
| अरिष्टयोगद्वयम् | १०४ |
| अरिष्टान्तरम् | १०६ |
| अन्यच्चारिष्टयोगद्वयम् | १०७ |
| अरिष्टान्तरम् | १०७ |
| अन्यच्च | १०८ |
| अरिष्टान्तरम् | १०९ |
| अन्यच्च | ११० |
| अरिष्टयोगाः ( टी० ) | १११ |
| अरिष्टकालज्ञानम् | १११ |

| विषयाः | पृ० |
|---|---|
| **आरिष्टभङ्गाध्यायः ॥८॥** | |
| अरिष्टभङ्गो गुरुकृतः | ११३ |
| लग्नेशकृतारिष्टभङ्गः | ११४ |
| अन्ये च | ११५-११६ |
| चन्द्रकृतारिष्टभङ्गयोगाः | ११७-११८ |
| गुरुकृतारिष्टभङ्गः | ११९ |
| सौम्यग्रहकृतारिष्टभङ्गः | ११९ |
| चन्द्रराशीशकृतारिष्टभङ्ग | १२० |
| अन्यच्च | १२० |
| राहुकृतारिष्टभङ्गयोगः | १२० |
| अन्यो योगः | १२१ |
| अन्ये योगाः | १२१ |
| **ग्रहायुर्दायाध्यायः ॥९॥** | |
| आयुर्दायभेदाः (टी०) | १२४ |
| ग्रहस्फुटीकरणप्रकारः ,, | १२५ |
| भयातभभोगानयनम् ,, | १२६ |
| चन्द्रस्पष्टीकरणप्रकारः ,, | १२६ |
| लंकोदयमानम् ,, | १२७ |
| पलभाचरखण्डसाधनम् ,, | १२८ |
| स्वदेशीयोदयानयनम् ,, | १२८ |
| अयनांशानयनप्रकारः ,, | १२८ |
| लग्नानयनम् ,, | १२८ |
| भोग्यप्रकारेणोदाहरणम् ,, | १२९ |
| भुक्तप्रकारेण चोदाहरणम् ,, | १२९ |
| ग्रहाणामंशायुर्दायः | १२९ |
| लग्नायुर्दायः | १३० |
| आयुर्दाये विशेषः | १३२ |
| शत्रुक्षेत्रे ग्रहायुर्हानिः | १३४ |
| चक्रपातेनायुर्हानिः | १३५ |
| **अथान्तर्दशाध्यायः ॥१०॥** | |
| ग्रहाणां दशाप्रमाणम् | १३९ |
| ,, दशाक्रमः | १४० |
| दशाशुभाशुभज्ञानम् | १४२ |
| लग्नदशाफलम् | १४४ |
| अन्तर्दशाक्रमः | १४५ |
| विशेषान्तर्दशाक्रमः | १४७ |
| **अष्टकवर्गाध्यायः ॥११॥** | |
| सूर्याष्टकवर्गः | १५१ |
| चन्द्राष्टकवर्गः | १५२ |
| भौमाष्टकवर्गः | १५४ |
| बुधाष्टकवर्गः | १५६ |
| गुरोरष्टकवर्गः | १५८ |
| शुक्राष्टकवर्गः | १६० |
| शनेरष्टकवर्गः | १६२ |
| अष्टकवर्गफलम् | १६४ |
| **प्रकीर्णाध्यायः ॥१२॥** | |
| अनफादि ४ योगाः | १६ |
| अनफासुनफयोः फलानि | १६ |
| दुरुधराकेमद्रुमयोःफलानि | १७० |
| योगकर्तृकग्रहफलानि | १७१ |
| सूर्ययोगः | १७२ |
| द्विग्रहयोगाः | १७५ |
| त्रिग्रहयोगश्च | १७६ |
| प्रव्रज्यायोगः | १७८ |
| सूर्यादीनां प्रव्रज्याः | १७९ |
| तत्र विशेषः | १८१ |
| राशिशीलप्रकरणम् | १८३ |
| प्रत्येकराशिगतचन्द्रफलम् (टी०) | १८५ |
| दृष्टिफलप्रकरणम् | १८८ |
| भावफलप्रकरणम् | १९० |
| लग्नगते चन्द्रे फलम् | १९१ |
| लग्नगते सूर्ये फलम् | १९२ |

| विषयाः | पृ० |
|---|---|
| भावशुभाशुभफलम् | १६४ |
| मेषादिनवांशफलम् | १६६ |
| स्वक्षेत्रगतग्रहफलम् | १६७ |
| उच्चगतग्रहफलम् | १६६ |
| तत्र विशेषः | २०१ |
| नीचगतग्रहफलम् | २०२ |
| राजयोगाः | २०३ |
| राजयोगान्तरम् | २०४ |
| प्रकरणसंग्रहः | २०६ |
| **नाभसयोगाध्यायः ॥१३॥** | |
| नाभसयोगानां भेदाः (टी) | २०८ |
| रज्जुमुशलानलयोगाः | २०६ |
| दलयोगौ | २१० |
| गदादियोगाः फलं च | २११ |
| वज्रादियोगाः | २१४ |
| वज्रादियोगानां फलानि | २१६ |
| नौकादियोगाः | २१८ |
| नौकादियोगानां फलानि | २२१ |
| गोलादिसप्तसंख्या योगाः | २२२ |
| गोलादियोगानां फलानि | २२३ |
| **स्त्रीजातकाध्यायः ॥१४॥** | |
| स्त्रिया आकारलक्षणम् | २२५ |
| तन्निदर्शनम् | २२७ |
| स्त्रिया पतिस्वरूपम् | २२८ |
| ,, विधवादियोगः | २३० |
| ब्रह्मवादिनीस्त्रीलक्षणम् | २३१ |
| स्त्रियाः फलासंभवे भर्तुः फलम् | २३२ |
| **निर्याणाध्यायः ॥१५॥** | |
| अष्टमस्थग्रहवशान्मृत्युज्ञानम् | २३३ |
| ग्रहदृष्ट्या मृत्युज्ञानम् | २३५ |
| देवलोकादिगतिज्ञानम् | २३६ |
| मोक्षगतियोगः | २४० |
| जातो जंतुः कस्माल्लोकादागत इति ज्ञानम् | २४१ |
| **नष्टजातकाध्यायः ॥१६॥** | |
| राशीनां ग्रहाणांचगुणकाङ्काः | २४२ |
| नक्षत्रानयनम् | २४४ |
| वर्षर्तुमासाद्यानयनम् | २४५ |
| जन्मकालादिज्ञानम् | २४८ |
| उदाहरणम् | २४६ |

विंशोत्तरीय दशाऽन्तर्दशाद्यानयनम् ।

टीकाकर्तुःपरिचयः ।


श्रीगुरवः शरणम् ।

* श्रीजानकीजानये नमः *



# लघुजातकम्



भट्टोत्पल-विन्ध्येश्वरीप्रसादकृत-टीकासहितम् ।



* ग्रन्थकारकृतं मङ्गलाचरणम् *

**यस्तोदयास्तसमये सुरमुकुटनिघृष्टचरणकमलोऽपि ।**
**कुरुतेऽञ्जलिं त्रिनेत्रः स जयति धाम्नां निधिः सूर्यः ॥१॥**

भट्टोत्पलः—

प्रणिपत्य महादेवं भुवनगुरुं च त्रिलोकेशम् ।
भट्टोत्पलो लघुतरां जातकटीकां करोति शिष्यहिताम् ॥१॥

सतामयमाचारो यच्छास्त्रप्रारम्भेऽभिमतदेवतानमस्कारं कुर्वन्ति । तदयमावन्तिकाचार्यवराहमिहरोऽर्कलब्धवरप्रसादो ज्योतिःशास्त्रसंग्रहं कृत्वा तदेव भीरूणां कृते सङ्क्षिप्तगणितसङ्ग्रहं कृत्वा होराशास्त्रं सङ्क्षिप्तं वक्ष्यमाणोऽशेषविघ्नोपशमायाभिमतसूर्यस्यादौ प्रणाममाह—स सूर्य आदित्यो जयति सर्वोत्कर्षेण वर्तते । कथंभूतो धाम्नां निधिः । यस्योदयकालेऽस्तकाले च त्रिनेत्रो महेशः अञ्जलिं कुरुते नमस्कारं करोतीत्यर्थः । कीदृशः सुरमुकुटनिघृष्टचरणकमलो देवचूडामणिनिघृष्टपादपद्म इत्यर्थः । यतःसर्वे देवा भगवतो नारायणस्य महादेवस्य पादवन्दनं कुर्वन्ति । अपिशब्दाद्यस्य महादेवोऽपि अञ्जलिं करोति तस्य सेन्द्राः सुराः महर्षयश्च वन्दनं कुर्वन्ति ॥ १ ॥

विन्ध्येश्वरीप्रसादः-

भक्ताभीष्टप्रदातारं रामं त्रैलोक्यनायकम् ।
महेशमानसामोदकरं दाशरथिं नुमः ॥१॥
श्रीशारदां सकलमङ्गलसौख्यदात्रीं
ब्रह्मेशविष्णुमघवादिसुरौघसेव्याम् ।
सद्भूमिदेवजनवन्दितपादपद्मां
वन्दामहे सुमतिकीर्तिसुलब्धिसिध्यै ॥२॥
नत्वा गुरोरङ्घ्रिसरोजयुग्मं
स्मृत्वा तदीयां हृदये सदुक्तिम् ।
वक्ष्ये सुटीकां लघुजातकस्य
मनोविनोदाय सुहृज्जनानाम् ॥३॥

श्रीगणकचक्रचूडामणिरावन्तिको वराहमिहराचार्योऽर्कोल्लब्धवरप्रसादः 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुख' मित्यादिमङ्गलस्य विघ्नौघविनाशकतया चिकीर्षितस्य लघुजातकाभिधग्रन्थस्य निर्विघ्नपरिसमाप्तये 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषाणि' इत्यादि भाष्यप्रामाण्येनादावेव लोकत्रयाधारभूतस्य भगवतः श्रीसूर्यस्य स्वकीयाभीष्टदेवस्य नमस्काररूपं मङ्गलमाचरति —

**यस्येति**—यस्य सूर्यस्य उदयास्तसमये उदयश्चास्तश्च उदयास्ते तयोः समयस्तस्मिन्नुदयकालेऽस्तमनकाले चेत्यर्थः । सुरमुकुटनिघृष्टचरणकमलः सुराणामिन्द्रादीनां मुकुटैः किरीटैर्निघृष्टे सङ्घर्षिते चरणकमले यस्य स देवचूडामणिनिघृष्टचरणसरोजस्त्रिनेत्रः, त्रीणि नेत्राणि यस्य स महादेवोप्यञ्जलिं कुरुते नमस्कारं करोति । प्रातःसायंसन्ध्यासम्पादनावसरे यस्य भगवतः सूर्यस्योपस्थानं करोतीत्यर्थः । स धाम्नां तेजसां निधिः सूर्यो जयति सर्वोत्कर्षेण वर्तत इति । आर्याच्छन्दः ।

यस्याः प्रथमे पादे द्वादशमात्रास्तथा तृतीयेऽपि ।
अष्टादशद्वितीये चतुर्थके पञ्चदश साऽऽर्या ॥ इति ॥१॥

जिस के उदय और अस्त के समय, देवताओं के मुकुट से घिसे गये चरण वाले महादेवजी भी ( जिस सूर्यनारायण को ) अञ्जलि प्रदान ( प्रणाम ) करते हैं। वह तेज के राशि सूर्य भगवान् सब से उत्कर्ष पूर्वक वर्तमान हैं ॥ १ ॥

ग्रन्थप्रयोजनम्।

होराशास्त्रं वृत्तैर्मया निबद्धं निरीक्ष्य शास्त्राणि।
यत्तस्याप्यार्याभिः सारमहं सम्प्रवक्ष्यामि ॥ २ ॥

भट्टोत्पलः—होराशास्त्रं वक्ष्यामीत्याह । होराशास्त्रं जातकं मया वृत्तैर्नानाविधैर्निबद्धं रचितम् । किं कृत्वा शास्त्राण्यन्यानि निरीक्ष्य विलोक्य यत्तस्य सारमार्याभिः सम्प्रवक्ष्यामि कथयिष्यामीत्यर्थः ॥ २ ॥

वि० प्र०—पूर्वं ज्योतिःशास्त्राङ्गभूतं बृहज्जातकं रचितमिदानीं तत्सारमादाय स्वल्पं वक्ष्यामीत्याह—होरेति। मया वराहमिहिराचार्येण शास्त्राणि स्कन्धत्रयात्मकज्योतिःशास्त्राणि निरीक्ष्य पर्यालोचनपूर्वकमवलोक्य होराशास्त्रं बृहज्जातकाख्यं वृत्तैः शार्दूलविक्रीडितादिभिर्नानाछन्दोभिर्निबद्धं विनिर्मितम् । होराशास्त्रव्युत्पत्तिरुक्ता कल्याणवर्मणा सारावल्याम्—

आद्यन्तवर्णलोपाद्धोराशास्त्रं भवत्यहोरात्रात् ।
तत्प्रतिपिद्धः सर्वो ग्रहभगणश्चिन्त्यते यस्मात् ॥
होरेति शास्त्रसंज्ञा लग्नस्य तथार्द्धराशेश्च ।
जातकमिति प्रसिद्धं यल्लोके तदिह कीर्त्यते होरा ॥ इति ।

यत्तस्य पूर्वोदितस्य जातकस्य सारमहं आर्याभिरार्याख्यच्छन्दोभिः संप्रवक्ष्यामि कथयिष्यामि ॥ आर्यालक्षणं प्रागुक्तम् ॥ २ ॥

हम ( वराहमिहिराचार्य ) ने अनेक शास्त्रों को देख कर शार्दूलविक्रीडित इत्यादि छन्दोंसे जिस होराशास्त्र (बृहज्जातक) को बनाया है। उसी के सार को आर्या इत्यादि छन्दो द्वारा अच्छी तरह वर्णन करता हूँ ॥ २ ॥

**यदुपचितमन्यजन्मनि शुभाऽशुभं तस्य कर्मणःप्राप्तिम्।**
**व्यञ्जयति शास्त्रमेतत्तमसि द्रव्याणि दीप इव ॥३॥**

**भट्टोत्पलः**–शास्त्रोपयोगित्वमाह । प्राणिनां यदन्यजन्मनि शुभमशुभं वा कर्मार्जितं सञ्चितं तस्य कर्मणः प्राप्तिमेतच्छास्त्रं व्यञ्जयति प्रकटीकरोतीत्यर्थः। यस्मिन् काले शुभफलं यस्मिंश्चातोऽशुभफलमिति। क इव दीप इव। यथा दीपस्तमसि अन्धकारे द्रव्याणि विद्यमानानि व्यञ्जयति व्यवहारार्थम् ॥ ३ ॥

वि०प्रं०–इदानीं जातकशास्त्रोपयोगित्वमाह–**यदिति**।यदन्यजन्मनि पूर्वजन्मनि शुभाशुभं शुभमशुभं मिश्रं वोपचितमर्जितं सञ्चित-प्रारब्धरूपं। कर्मेति शेषः । तस्य प्राक्तनसञ्चितकर्मणः पक्तिं पाकमेतच्छास्त्रं जातकाख्यं तमसि घोरान्धकारे द्रव्याणि घटपटादीनि दीप इव व्यञ्जयति प्रकाशयति व्यवहारसिद्धय इति। प्राक्तनैः कर्मणां वैचित्र्यमुक्तम्। तथाहि– कानिचित्कर्माणि दृढमूलानि कानिचिददृढमूलानि । तत्र दृढमूलानि स्थिराभिधानि अदृढमूलानि तूत्पाताख्यानि । यदाह वृद्धयवनः–

यद्यद्विधानं नियतं प्रजानां ग्रहर्क्षयोगप्रभवं प्रसूतौ ।
भोग्यानि तानीत्यभिशब्दयन्ति वार्तानियोगेति दशा नराणाम् ॥
यद्यप्यभिज्ञैर्द्विविधं निरुक्तं स्थिराख्यमौत्पातिकसंज्ञितञ्च ।
कालक्रमाज्जातकनिश्चितं यत्क्रमोपशर्पि स्थिरमुच्यते तत् ॥
सप्त ग्रहाणां प्रथितानि यानि स्थानानि जन्मप्रभवानि सद्भिः ।
तेभ्यः फलं चारग्रहाः क्रमस्था दद्युर्यदौत्पातिकसज्ञितं तत् ॥ इति ॥

तत्राऽदृढमूलानि ग्रहशान्त्यादिप्रबलप्रयत्नेन निवारयितुं शक्यन्ते। यदाह व्यासः–'हन्यते दुर्बलं दैवं पुरुषेण विपश्चिते'ति। दृढमूलानि त्ववश्यमेव भोक्तव्यानि भवन्ति। उक्तञ्च-'अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभ'मिति॥ ३ ॥

**पूर्वजन्म में शुभ वा अशुभ सञ्चित कर्म की लब्धि ( प्राप्ति को**

यह जातकशास्त्र, अन्धकार में रखे हुए घट पटादि वस्तुओं को दीपक के नाईं, ( व्यवहार के लिये ) प्रकाशित करता है ॥ ३ ॥

कालपुरुषाङ्गविभागः ।

कालनरस्यावयवान् पुरुषाणां चिन्तयेत्प्रसवकाले ।
सदसद्ग्रहसंयोगात् पुष्टाः सोपद्रवास्ते च ॥ ४ ॥
शीर्षमुखबाहुहृदयोदराणि कटिबस्तिगुह्यसंज्ञानि ।
ऊरू जानू जङ्घे चरणाविति राशयोऽजाद्याः ॥ ५ ॥

भट्टोत्पलः—कालपुरुषस्य मेषादिराशिपूर्वकमङ्गविभागमाह-अजाद्या राशयः कालस्याङ्गानि । राशय इति फलितोऽर्थः । अस्य कालपुरुषस्य मेषः शिरः, वृषो मुखं, मिथुनं बाहू, कर्कटो हृदयं, सिंह उदरं, कन्या कटिः, तुला बस्तिर्नाभेरधोभागः, वृश्चिको गुह्यं, धनुरूरुयुग्मं, मकरो जानुयुगलं, कुम्भो जङ्घे, मीनश्चरणौ । प्रयोजनं—जन्मकाले पुरुषादिराशिषु शुभग्रहाक्रान्तेषु मनुष्याणां शीर्षादिकानामारोग्यता पापाक्रान्तेषु रोगित्वं सङ्ग्रामादिप्रविष्टस्य व्रणादिज्ञानम् ॥ ४–५ ॥

वि०प्र०—अथ कालपुरुषस्य मेषादिराशिक्रमेण शिरःप्रभृत्यङ्गविभागं सहेतुकमार्याभ्यामाह—**कालनरस्येति**। अजो मेषस्तदाद्या राशयः कालपुरुषस्य शिरःप्रभृत्यङ्गानि अवयवा भवन्ति । यथा कालपुरुषस्य मेषः शीर्षं शिरः, वृषो मुखम्, मिथुनं बाहू भुजौ, कर्कटो हृदयम्, । हृदयलक्षणं केनचिदुक्तम्—

नाभेरूर्ध्वं वितस्तिं च कण्ठाधस्तात्षडङ्गुलम् ।
हृदयं तद्विजानीयाद्बिश्वस्यायतनं महत् ॥ इति ॥

सिंह उदरं जठरः, कन्या कटिः श्रोणी, तुला बस्तिर्नाभेरधोभागः 'वास्तिर्नाभेरधोद्वयोः' इत्यमरः । वृश्चिको गुह्यं गुप्तस्थानं लिङ्गमिति

यावत्, धनुरूरू ऊरुयुगलं, मकरः जानू जानुद्वयं, कुम्भो जङ्घे जङ्घाद्वयं, मीनश्चरणौ पादौविति । तथा च वादरायणः—

मेषः शिरोऽथ वदनं वृषभो विधातुर्वक्षो भवेन्नृमिथुनं हृदयं कुलीरः ।
सिंहस्तथोदरमथो युवती कटिश्च वस्तिस्तुलाभृदथ मेहनमष्टमं स्यात् ॥

धन्वी स्यादूरुयुगं मकरो जानुद्वयं धातुः ।
जङ्घाद्वितयं कुम्भः पादौ मत्स्यद्वयं चेति ॥

अत्र कालपुरुषस्य वक्षस्थले मिथुनराशिरुक्तः परन्तु सूर्यजातक-सारावलीप्रभृतिपुस्तकेषु मिथुनराशिर्बाहावेव कथित इति विज्ञैर्विवेचनीयम् ।

केचिज्जन्मलग्नत एव शिरःप्रभृतीन्यङ्गानि कालपुरुषस्याहुः—यथा शम्भुहोराप्रकाशे—

शीर्षाख्यं वदनं च बाहुयुगलं हृच्चोदरं कट्यथो
वस्तिर्गुह्यमुरू च जानुजघने पादद्वयं वै क्रमात् ।
मेषाद्याः किल राशयः समुदिताः पूर्वैः सुबोधायये
त्वेके लग्नमतश्च काद्यवयवा ज्ञेयास्तु निःसंशयम् ॥ इति ॥

अथास्य प्रयोजनम्-प्रसवकाले जन्मसमये कालनरस्य कालपुरुषस्य अवयवान् शिरःप्रभृतीन्यङ्गानि चिन्तयेत् । ते कालावयवाः पुरुषाणां जनानां सदसद्ग्रहसंयोगात् शुभाशुभग्रहसंयोगवशात् पुष्टाः सोपद्रवा उपद्रवसहिता विकलाश्च भवन्ति । जन्मसमये यो राशिः शुभानां पूर्णचन्द्रबुधगुरु-शुक्राणामन्यतमेन द्वाभ्यां सर्वैर्वाऽऽक्रान्तः स कालपुरुषस्य यस्मिन्नङ्गे भवति पुरुषाणां तस्मिन्नङ्गे पुष्टिरेवं पापाक्रान्तो यो राशिः स कालपुरुषस्य यस्मिन्नङ्गे स्थितस्तदङ्गे जातकस्य वैकल्यं वाच्यमिति । ग्रहाणां शुभाशुभ-संज्ञा द्वितीयाध्याये ग्रन्थकृता स्वयमेवोक्ता ॥ ४—५ ॥

मेषादि राशियाँ कालपुरुष के शिर इत्यादि अङ्ग होती हैं । काल पुरुष का मेष शिर, वृष मुख, मिथुन ( दोनों ) बाँह, कर्कराशि हृदय, सिंह पेट, कन्या कटि (कमर), तुला वस्ति ( नाभि और लिङ्गके बीच का स्थान=पेडू), वृश्चिक लिङ्ग, धनु ऊरु (जाँघ), मकर जानु (ठेहुन)

कुम्भ जङ्घा ( घुटना के नीचे का भाग=पेंडुरी ),मीन ( दोनों )पैर होते हैं। इनका प्रयोजन यह है कि—जन्म समयमें जो राशि शुभग्रह से युक्त या दृष्ट हो वह काल पुरुष के जिस अङ्ग की हो, मनुष्य का वह अङ्ग बड़ापुष्ट होता है। और यदि राशि पापग्रह से युक्त या दृष्ट हो उस राशि के अङ्ग में पीड़ा, घाव इत्यादि होता है। यदि मिश्रग्रह (शुभाशुभग्रह) से दृष्ट युक्त हो तो उन के बलादि के तारतम्य से उस उस अङ्ग में अच्छा वा बुरा फल कहना ॥ ४-५ ॥

राशिवर्णज्ञानम् ।

**अरुणासितहरितपाटलपाण्डुविचित्राः सितेतरपिशङ्गौ ।**
**पिङ्गलकर्बुरबभ्रुकमलिना रुचयो यथासङ्ख्यम् ॥६॥**

भट्टोत्पलः—व्याधितस्य पीडाज्ञानाय तिलकादिचिह्नज्ञानाय च राशिवर्णज्ञानमाह । अजाद्या इत्यनुवर्तते । अजादयो राशयो वर्णयुता भवन्ति । तत्र मेषोऽरुण ईषद्रक्तः, वृषः श्वेतः, मिथुनं हरितः शुकाभः, कर्कटः पाटलः ईषच्छ्वेतरक्तः, सिंहः पाण्डु-धूम्राभः ईषच्छुक्लः, कन्याराशिर्विचित्रो नानावर्णः, तुला सितेतरः कृष्णः, वृश्चिकः पिशङ्गः सुवर्णवर्णः, धन्वी पिङ्गल ईषत्कपिलः ,मकरः कर्बुरःशुक्लकपिलो मिश्रवर्णः, कुम्भो बभ्रुः कपिलः, मीनो मलिनो मत्स्यवर्णः । एता राशीनां रुचयो वर्णाः । प्रयोजनं हृतनष्टादिषु द्रव्यवर्णज्ञानम् ॥ ६ ॥

वि०प्र०—मेषादिराशिवर्णज्ञानम्—अरुणेति। अजाद्या इत्यनुवर्तते। मेषाद्या राशयोऽरुणसितादिरुचयो यथासंख्यं यथाक्रमं भवन्ति।मेषोऽरुणो रक्तवर्णः,वृषः श्वेतवर्णः,मिथुनं हरितः शुककान्तिः, कर्कटः पाटल ईषद्रक्तश्वेतवर्णः 'श्वेतरक्तस्तु पाटल' इत्यमरः, सिंहः पाण्डुरीषच्छ्वेतपीतवर्णः, कन्या विचित्रो नानावर्णः, तुला सितेतरः कृष्णवर्णः, वृश्चिकः पिशङ्गः सुवर्णवर्णाभः "कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ" इत्यमरः । धनुः पिङ्गलवर्णः, मकरः कर्बुरश्चित्रवर्णः "चित्रं किर्मीर कल्माष शवलैताश्च कर्बुरे" इत्यमरः । कुम्भः बभ्रुः पिङ्गलवर्णः "बभ्रुस्यात्पिङ्गले त्रिषु" इत्य-

मरः । मीनः मलिनः स्ववर्णसदृशो मत्स्यवर्ण इतियावत् । बृहज्जातके वराहेण सिंहस्य धूम्रपाण्डुरीषच्छुक्लवर्ण उक्तः । सारावल्यां कल्याणवर्मणाऽपि-

लोहितसितशुकहरिताः पाटलपरि धूम्रपाण्डुचित्राश्च ।
कृष्णकनकाभपिङ्गा कर्बुरबभ्रुत्वजादिवर्णाः स्युः ॥ इति ।
प्रयोजनम् । सूतिकावस्त्रादिपरिज्ञानम् ॥ ६ ॥

मेषादि राशियों के अरुण,सित—इत्यादि वर्ण होते हैं। मेष का लाल, वृषका श्वेत, मिथुन का हरा ( शुगे की तरह कान्तिवाला ) कर्क का गुलाबी, सिंह का पाण्डु ( कुछ सफेदी लिये पीतवर्ण ) कन्या का नानावर्ण, तुला का कृष्ण वर्ण,वृश्चिक का सुवर्ण की तरह कान्ति, धनु का पिङ्गलवर्ण, मकर का कर्बुर ( चित्रवर्ण ) कुम्भ का पिङ्गल वर्ण, मीन का मलिन ( मछली के सदृश ) वर्ण ( रङ्ग ) होता है। इस का प्रयोजन सूतिका वस्त्र नष्टवस्तु स्वरूप तथा वियोनि प्रभेदाध्याय में वर्ण इत्यादि का परिज्ञान है ॥ ६ ॥

## राशिसंज्ञादिग्विभागः ।

**पुंस्त्रीक्रूरौऽक्रूरौ चरस्थिरद्विस्वभावसंज्ञाश्च ।**
**अजवृषमिथुनकुलीराः पञ्चमनवमैः सहेन्द्राद्याः॥७॥**

भट्टोत्पलः—राशिसंज्ञादिदिग्विभागं चाह । पुंस्त्रीति-मेषः पुमान्वृषः स्त्री, मिथुनं पुमान्, कर्कटः स्त्री एवं सर्वत्र । तथा क्रूराऽक्रूरौ मेषः क्रूरः, वृषोऽक्रूरः सौम्यः एवं सर्वत्र । चरस्थिरद्विस्वभावसंज्ञाश्चेति । ततो मेषश्चरः, वृषः स्थिरः, मिथुनं द्विस्वभावः एवं सर्वत्र कर्कटादिषु । प्रयोजनं-पुरुषशीलज्ञानादि । अजवृषमिथुनकुलीरा इति । अजो मेषस्तस्य ,पञ्चमनवमाभ्यां सह पूर्वदिग्वृषस्य स्वपञ्चमनवमाभ्यां सह दक्षिणा दिक् । मिथुनस्य स्वपञ्चमनवमाभ्यां सह पश्चिमा दिक् । कुलीरः कर्कटस्तस्य पञ्चमनवमाभ्यां सहोत्तरादिक् । प्रयोजनं तु चोरादेर्दिग्गमनादिज्ञानम् ॥ ७ ॥

वि०प्र०—अथ राशीनां पुरुषादिसंज्ञां दिगधीशत्वञ्चाह—**पुंस्त्रीति** । अत्राप्यजाद्या इत्यनुवर्तते । मेषाद्या राशयो क्रमेण पुंस्त्रीसंज्ञका भवन्ति । मेषः पुरुषः, वृषः स्त्री, मिथुनं पुमान्, कर्कटः स्त्री एवमग्रेऽपि । एवमत्र षट्विषमा राशयः पुरुषसंज्ञकाः, षट् समसंख्याका राशयः स्त्रीसंज्ञका भवन्ति । तथा मेषाद्याः क्रूराऽक्रूरसंज्ञकाः क्रमेण भवन्ति । यथा मेषः क्रूरः, वृषः अक्रूरः सौम्यः, मिथुनःक्रूरः, कर्कटः सौम्य, एवमग्रेपि । अर्थान्मेषाद्या विषमाः षड्राशयः क्रूराः, समाः सौम्या भवन्ति । एतत्प्रयोजनं क्रूरराशिषु जाताः क्रूरस्वभावाः सौम्येषु सौम्यस्वभावास्तथा स्त्रीराशिषु जाताः कोमलस्वभावाः पुरुषेषु तेजस्विन इत्याह सत्याचार्यः—

ओजाः पुरुषा ज्ञेया मेषात्स्त्रीसंज्ञका युग्माः ।
उग्रे पूग्राः पुरुषाः सौम्याः सौम्येषु भवनेषु ॥ इति ॥

एवं मेषाद्याश्चरस्थिरद्विस्वभावसंज्ञका भवन्ति । मेषश्चरः, वृषः स्थिरः, मिथुनं द्विस्वभावः, कर्कश्चरः, सिंहः स्थिरः, कन्या द्विस्वभाव एवं सर्वत्र योज्यम् । तथा हि चरादिसंज्ञां तत्प्रयोजनञ्चाह सत्यः—

चरसंज्ञा स्थिरसंज्ञा मेषाद्विःप्रकृतिराशयः क्रमशः ।
राशिस्वभावतुल्या ज्ञेया प्रकृतिः प्रसूतानाम् ॥ इति ॥

तथा च प्रश्नज्ञाने भट्टोत्पलः—

स्थिरराशौ लग्नगते स्थानप्राप्तिं वदेन्न चागमनम् ।
रोगोपशमो नाशो द्रव्याणां स्यात्पराभवो चाऽत्र ॥
चरराशौ विपरीतं मिश्रं वाच्यं द्विमूर्त्युदये ।
स्थिरवत्प्रथमेऽर्द्धे स्यादपरे चरराशिवत्सर्वम् ॥ इत्यादि ॥

**अज वृषेति** । अजो मेषराशिः स्वपञ्चमनवमाभ्यां सिंहधनुर्भ्यां सह (मेषसिंहधनुष इति ) पूर्वदिक्स्वामी । वृषः स्वपञ्चमनवमाभ्यां कन्यामकराभ्यां सह दक्षिणादिक्स्वामी । एवं मिथुनतुलाकुम्भाः

पश्चिमदिगधीशाः । कर्कवृश्चिकमीना उत्तराया अधिपा भवन्ति। प्रयोजनं तु हृतनष्टादिषु चौरादेर्दिग्ज्ञानं, सूतिकागारद्वारज्ञानम्, यात्रायां शुभाशुभत्वज्ञान मित्यादि । तथाहि–

"दिग्वाच्या केन्द्रगतैरसम्भवे वा वदेद्विलग्नर्क्षात्" इति ।

तथा च–यातव्यदिङ्मुखगतस्य सुखेन सिद्धि-

र्व्यर्थश्रमो भवति दिग्प्रतिलोमलग्ने ॥ इति ॥ ७ ॥

मेषादि राशियों की पुरुष, स्त्री; क्रूर, सौम्य; चर, स्थिर, द्विस्वभाव संज्ञा होती है। मेष की पुरुष, वृषकी स्त्री, मिथुन की पुरुष, कर्क की स्त्री इत्यादि। मेष की क्रूर, वृषकी सौम्य, मिथुन की क्रूर कर्क की सौम्य इत्यादि अर्थात् विषम संख्यक (मेष, मिथुन, सिंह...) राशियों की पुरुष और क्रूर संज्ञा; समराशियों की स्त्री और सौम्य संज्ञा होती है। इसका प्रयोजन । क्रूरसंज्ञक राशि में उत्पन्न जातक क्रूर स्वभाव का, सौम्य राशि में सौम्यस्वभाव का होता है। एवं पुरुष संज्ञक राशि में उत्पन्न बालक तेजस्वी, स्त्री राशिके लग्न में उत्पन्न कोमल स्वभाव ( भीरु ) होता है। एवं मेष की चर, वृष की स्थिर, मिथुन की द्विस्वभाव, कर्क की चर, सिंह की स्थिर, कन्या की द्विस्वभाव इत्यादि संज्ञा आगे भी जानना। इसका प्रयोजन। चर संज्ञक राशि के लग्न में उत्पन्न बालक चञ्चल स्वभाव का, स्थिर में उत्पन्न गम्भीर स्वभाव का एवं द्विस्वभाव के पूर्वार्द्ध में स्थिर स्वभाव का उत्तरार्द्ध में चञ्चल प्रकृति का होता है। मेष, वृष, मिथुन, कर्क ये राशियाँ अपनेसे पाचवें और नववें राशिके साथ पूर्वादि दिशाओं के स्वामी होती हैं। अर्थात् मेष, सिंह, धनु पूर्वका; वृष, कन्या, मकर दक्षिण का; मिथुन, तुला, कुम्भ पश्चिम दिशा का और कर्क, वृश्चिक, मीन उत्तर दिशा का स्वामी हैं। इसका प्रयोजन। खोई हुई वस्तु के दिशा का ज्ञान यात्रा में शुभाशुभ का विचार इत्यादि है॥ ७ ॥

राशीनां वर्णादिसंज्ञाबोधकचक्रम् ।

| राशयः | वर्णाः | पुरुष स्त्री | क्रू. सौ | च. स. | दि. वा |
|---|---|---|---|---|---|
| मे. | रक्त | पुरुष | क्रूर | चर | पूर्व |
| वृ. | श्वेत | स्त्री | सौम्य | स्थिर | दक्षि. |
| मि. | हरित | पुरुष | क्रूर | द्विस्व | पश्चि. |
| क. | श्वे. र. | स्त्री | सौम्य | चर | उत्तर |
| सि. | धूम्र | पुरुष | क्रूर | स्थिर | पूर्व |
| क. | विचि. | स्त्री | सौम्य | द्विस्व | दक्षि. |
| तु. | कृष्ण | पुरुष | क्रूर | चर | पश्चि. |
| वृ. | स्वर्ण. | स्त्री | सौम्य | स्थिर | उत्तर |
| ध | पीत | पुरुष | क्रूर | द्विस्व | पूर्व |
| म | कर्बुर | स्त्री | सौम्य | चर | दक्षि. |
| कुं. | नकुल | पुरुष | क्रूर | स्थिर | पश्चि. |
| मी | मलिन | स्त्री | सौम्य | द्विस्व | उत्तर |

राश्यंशाधिपाः ।

कुजशुक्रज्ञेन्द्वर्कज्ञशुक्रकुजजीवसौरियमगुरवः ।
भेशा नवांशकानामजमकरतुलाकुलीराद्याः ॥ ८ ॥

भट्टोत्पलः–राश्यंशाऽधिपानाह । कुजादयो मेषादीनामधिपाः । तत्र मेषस्य भौमोऽधिपतिः, वृषस्य शुक्रः, मिथुनस्य बुधः,

कर्कस्य चन्द्रः,सिंहस्यादित्यः,कन्याया बुधः,तुलायाः शुक्रः, वृश्चिकस्य भौमः,धन्विनो जीवः, मकरस्य मन्दः,कुम्भस्य शनिः,मीनस्य बृहस्पतिः । तथा नवांशकानामजमकरतुलाकुलीराद्या इति येषां नवांशकानां ते अजमकरतुलाकुलीराद्याः । मेषस्य मेषाद्या नवांशा धन्व्यन्ताः,वृषस्य मकराद्या कन्यान्ताः, मिथुनस्य तुलाद्या मिथुनान्ताः, कर्कटस्य कर्कटाद्या मीनान्ताः, मेषवत् सिंहधन्विनोः, वृषवत् कन्यामकरयोः, मिथुनवत्तुलाकुम्भयोः, कर्कटवद्वृश्चिकमीनयोर्नवांशकानां राश्यधिपा एव अधिपतयो ज्ञेयाः ॥८॥

वि०प्र०—अथ राश्यंशानामधिपानाह—कुजेति । कुजो भौमः, शुक्रः प्रसिद्धः, ज्ञो बुधः, इन्दुश्चन्द्रः, अर्कः सूर्यः, जीवो बृहस्पतिः, सौरिः शनिः, यमोऽपि शनिः, अन्ये प्रसिद्धाः । एते ग्रहाः क्रमेण भेशा मेषादिराशीनामीशाः स्वामिनो भवन्ति । मेषस्य भौमः,वृषस्य शुक्रः,मिथुनस्य बुधः । कर्कटस्य चन्द्रः, सिंहस्य रविः, कन्याया बुधः, तुलराशेःशुक्रः,वृश्चिकस्य मङ्गलः, धनुषो गुरुः, मकरस्य शनिः, कुम्भस्य शनिः, मीनस्य गुरुरिति । उक्तञ्च होराप्रकाशे—

कुजः सितो बुधो विधुर्भृगुज्ञशुक्रभूमिजाः ।
सुरेज्यमन्दसूर्यजा गुरुः क्रियाच भेश्वराः ॥ इति ॥

रविचन्द्रावेकैकराश्यधिपावन्ये राशिद्वयस्येत्यस्य कारणमुक्तं होरामकरन्दे—

कण्ठीरवं विक्रमिणं विलोक्य स्वीयं पदं तत्र चकार सूर्यः ।
मैत्र्या तदासन्नतया कुलीरे निजं ववन्धालयमेणलक्ष्मा ॥

अन्ये ग्रहा ग्रहयिवाधिपया क्रमेण
शीतांशुतिग्ममहसो सदनं समीयुः ।
प्राप्तक्रमेण ददतुर्भवनानि तौ तु
ताराग्रहा द्विभवनास्तत एव जाताः ॥ इति ।

**नवांशकानामिति ।** अजमकरतुलाकर्काद्या नवांशकानामधिपाः । मेषस्य मेषाद्या मेषवृषमिथुनकर्कटसिंहकन्यातुलावृश्चिकधनुषां सम्बधिनो नवांशाः । वृषस्य मकराद्या मकरकुम्भमीनमेषवृषमिथुनकर्कसिंहकन्यासम्बन्धिनो नवांशाः । मिथुनस्य तुलाद्यास्तुलावृश्चिकधनुर्मकरकुम्भमीनमेषवृषमिथुनसम्बन्धिनो नवांशाः । कर्कटस्य कर्काद्याः कर्कसिंहकन्यातुलावृश्चिकधनुर्मकरकुम्भमीनसम्बन्धिनो नवांशा भवन्ति । एवं सिंहस्य मेषवत्, कन्याया वृषवत्, तुलाया मिथुनवत्, वृश्चिकस्य कर्कटवत् । पुनरपि धनुषो मेषवत्, मकरस्य वृषवत्, कुम्भस्य मिथुनवत्, मीनस्य कर्कटवदिति । उक्तञ्च शम्भुहोराप्रकाशे—

मेषे हरौ चापधरेष्वजाद्याः कन्योक्षनक्रेषु मृगान्नवांशाः ।
युग्मे घटे वैणिकमे तुलाद्याः कर्कालिमीनेषु च कर्कटाद्याः ॥इति॥

प्रयोजनम्-चौर्यें अंशकाज्ज्ञायते द्रव्य' मित्यादि । एतत्स्वरूपाणि सारावल्यां ५० अध्याये द्रष्टव्यानि ॥ ८ ॥

**क्रम से मेषादि राशियों के कुज शुक्रादि स्वामी होते हैं। मेष के भौम, वृष के शुक्र, मिथुन के बुध, कर्क के चन्द्रमा, सिंह के सूर्य, कन्या के बुध, तुला के शुक्र, वृश्चिक के मङ्गल, धनु के वृहस्पति, मकर के शनि, कुम्भ के शनि, मीन के वृहस्पति स्वामी होते हैं। मेषादि राशियों मे मेष, मकर, तुला और कर्क इन राशियों का क्रम से नवमांश होताहै। जैसे मेष, सिंह और धनु में यथाक्रम मेष से धनु तक, वृष, कन्या, मकर में मकर से कन्या तक, मिथुन, तुला और कुम्भ में तुला से मिथुन तक एवं कर्क, वृश्चिक और मीन में कर्क से मीन तक का नवमांश होता है। ३ अंश २० कला एक एक नवमांश का भोग होता है ॥ ८ ॥**

**नवांशचक्रम् ।**

| अंशाः | मे· | वृ· | मि | क· | सि | क· | तु· | वृ. | ध. | म. | कुं· | मी |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ३।२० | मे· | म· | तु· | क· | मे· | म· | तु· | क· | मे· | म· | तु· | क· |
| ६।४० | वृ· | कुं· | वृ· | सिं | वृ· | कुं· | वृ· | सि· | वृ. | कुं· | वृ. | सि· |
| १०।० | मि· | मी | ध | क· | मि· | मी· | ध. | क· | मि· | मी· | ध. | क· |
| १३।२० | क· | मे· | म· | तु· | क· | मे· | म· | तु· | क· | मे· | म· | तु· |
| १६।४० | सि· | वृ· | कुं· | वृ· | सि· | वृ· | कुं· | वृ. | सिं | वृ. | कुं· | वृ. |
| २०।० | क· | मि· | मी· | ध. | क· | मि | मी· | ध. | क· | मि· | मी | ध. |
| २३।२० | तु· | क· | मे. | म· | तु· | क· | मे· | म· | तु· | क· | मे· | म· |
| २६।४० | वृ· | सिं | वृ· | कुं· | वृ· | सि· | वृ. | कुं· | वृ. | सि· | वृ· | कुं· |
| ३०।० | ध· | क· | मि | मी· | ध· | क· | मि· | मी· | ध. | क· | मि· | मी |

## होराद्रेष्काणद्वादशांशाधिपाः—

**स्वगृहाद्द्वादशभागा द्रेष्काणाः प्रथमपञ्चनवपानाम् ।**
**होरे विषमेऽर्केन्द्वोः समराशौ चन्द्रतीक्ष्णांश्वोः ॥६॥**

**भट्टोत्पलः**—द्वादशभागद्रेष्काणहोराधिपातिज्ञानमाह । स्वगृहात् आरभ्य द्वादशभागाः २।३० गणनीयाः । मेषस्य मेषाद्या मीनान्ताः, वृषस्य वृषाद्या मेषान्ताः, एवं सर्वत्र । द्वादशांशकानां राश्यधिपा एवाऽधिपतयः । द्रेष्काणाः प्रथमपञ्चनवपानामिति । द्रेष्काणो राशित्रिभागः । एवं यथाक्रमं प्रथमपञ्चनवपानां सम्बन्धिनो भवन्ति । तथा मेषस्य प्रथमोऽङ्गारकः तस्य सम्बन्धी, द्वितीयः पञ्चमस्याधिपस्यार्कस्य सम्बन्धी, तृतीयो नवमाधिपस्य

जीवस्य सम्बन्धी एवं वृषादीनामपि । होरे विषमे इति । होरा राश्यर्धं १५ तत्र विषमराशीनां मेषमिथुनसिंहादीनां प्रथमहोरादित्यस्य द्वितीयहोरा चन्द्रमसः । समराशीनां वृषकर्कटकन्यादीनां प्रथमा चन्द्रमसः, द्वितीयार्कस्य ॥ ६ ॥

वि० प्र० अथ द्वादशांश-द्रेष्काण-होराधीशानाह—**स्वगृहादिति** । स्वगृहादारभ्य द्वादशभागाः सार्द्धद्वयंशमितस्यैकैकं गणनीयाः। यथामेषराशौ प्रथमो द्वादशांशो मेषस्य,द्वितीयो वृषस्य,तृतीयो मिथुनस्य एवमग्रेऽपि । वृषराशौ प्रथमो वृषस्य, द्वितीयो मिथुनस्य, तृतीयः कर्कटस्य इत्यादि मेष पर्यन्तस्य द्वादश द्वादशांशाः । एवं मिथुने मिथुनाद्या वृषान्ताः, कर्कटे कर्कटाद्या मिथुनान्ताः, सिंहे सिंहाद्याः कर्कान्ताः, कन्यायां कन्याद्याः सिंहान्ताः, तुले तुलाद्याः कन्यान्ताः, वृश्चिके वृश्चिकाद्यास्तुलान्ताः, धनुषि धनुराद्या वृश्चिकान्ताः, मकरे मकराद्या धनुरन्ताः, कुम्भे कुम्भाद्या मकरान्ताः, मीने मीनाद्याः कुम्भान्ता द्वादशभागाः यथाक्रमं भवन्ति । एतत्प्रयोजनम् बृहज्जातके निषेकाध्याये—'तात्कालिकेन्दुसहितो द्विरसांशको यः' इत्यादि ॥ **द्रेष्काणा इति** । प्रथमपञ्चमनवाधिपानां द्रेष्काणा राशित्रिभागा भवन्ति । तद्यथा । मेषराशौ प्रथमो द्रेष्काणो मेषाधिपस्य भौमस्य, द्वितीयः तत्पञ्चमराश्यधिपस्य सूर्यस्य, तृतीयो नवमराश्यधिपस्य गुरोः । वृषराशौ प्रथमो द्रेष्काणो वृषाधिपस्य शुक्रस्य,द्वितीयः कन्याधीशस्य बुधस्य, तृतीयो मकराधीशस्य शनेः । एवं, मिथुनादिराशीष्वपि बोध्यम् । एतत्प्रयोजनमुक्तं पृथुयशसा—

आदिमध्यावसानेषु द्रेष्काणेषु विलग्नतः ।
द्वारदेशे तथा मध्ये गृहान्ते च वदेद्धनम् ॥ इति ॥

'द्रेष्काणैस्तस्कराः स्मृताः' इति । बृहज्जातके द्रेष्काणस्वरूपाण्यप्युक्तानि । तत्तत्रैव द्रष्टव्यानि । **होरेति** । विषमे विषमराशौ मेष-मिथुन-सिंह-तुला-धनुःकुम्भेष्वित्यर्थः । अर्केन्द्वोरर्कश्चेन्दुश्च तौ तयोस्तथोक्तयोर्होरे

यथाक्रमं भवतः। यथा मेषराशौ प्रथमहोरा सूर्यस्य, द्वितीया चन्द्रमसः। मिथुने प्रथमाऽर्कस्य द्वितीयेन्दोः। एवं सिंहादिष्वपि ज्ञेयम्। समराशौ वृष-कर्क-कन्या-वृश्चिक-मकर-मीनेष्वित्यर्थः। चन्द्रः प्रसिद्धस्तीक्ष्णांशुः सूर्यः तीक्ष्णास्तीव्रा अंशवो किरणा यस्य स तथोक्तः। चन्द्रश्च तीक्ष्णांशुश्च तौ तयोश्चन्द्रभान्वोर्होरे क्रमेण भवतः। होरा राश्यर्द्धं भार्द्धमित्येकपर्यायाः "होरेति लग्नं भवस्य चार्ध" मित्युक्तेः। समराशौ प्रथमा होरा चन्द्रस्य, द्वितीया रवेरितिस्फुटार्थः। यथाह नारदः—

स्युर्द्रेष्काणा लग्नपञ्चनवराशीश्वराः क्रमात्।
होरा रवीन्द्वोरोजर्क्षे समभे चन्द्रसूर्ययोः॥ इति॥

प्रयोजनं होरास्वरूपञ्च कल्याणवर्मणोक्तं द्रष्टव्यमष्टचत्वारिंशदध्याये। केचिद्यवनेश्वरादय प्रथमां होरां राश्यधिपस्य द्वितीयां लाभाधिपस्य वर्णयन्ति। एवं स्वद्वादशैकादशराशीशानां द्रेष्काणमपि कथयन्ति यथाचोक्तम् यवनाचार्येण—

आद्या तु होरा भवनस्य पत्युरेकादशक्षेत्रपतेर्द्वितीया।
स्वद्वादशैकादशराशिपानां द्रेष्काणसंज्ञाः क्रमशस्त्रयोऽत्र॥ इति।
परन्त्वेतदाचार्यस्य नाभिप्रेतम्॥ ९॥

**अपने २ गृह से २ अंश ३० कला का एक एक द्वादशांश होता है। जैसे मेष में प्रथम द्वादशांश (२।३०) तक मेष का, दूसरा (५।०) तक वृष का, तीसरा (७।३०) तक मिथुन का, चौथा (१०।०) तक कर्क का, इत्यादि आगे भी। एवं वृष में प्रथम द्वादशांश वृष का, द्वितीय मिथुन का, तृतीय कर्क का, चतुर्थ सिंह का इत्यादि मेष पर्यन्त। मिथुन में प्रथम मिथुन का, द्वितीय कर्क का, तृतीय सिंह का इत्यादि वृष तक। एवं कर्क में कर्क से मिथुन तक, सिंह में सिंह से कर्क तक, कन्या में कन्या से सिंह तक, तुला में तुला से कन्या तक, वृश्चिक में वृश्चिक से तुला तक, धनु में धनु से वृश्चिक तक, मकर में मकर से धनु तक, कुम्भ में कुम्भ से मकर तक, मीन में मीन से कुम्भ तक का द्वादशांश ढाई २ अंश का होता है।**

| द्वादशांशचक्रम् । | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अंश. | मे· | वृ. | मि. | क· | सिं | क· | तु· | वृ. | ध. | म· | कुं· | मी |
| २\|३० | मे. | वृ. | मि. | क· | सिं | क· | तु· | वृ. | ध. | म· | कुं· | मी |
| ५\|० | वृ· | मि· | क· | सिं | क· | तु· | वृ. | ध. | म· | कुं· | मी· | मे· |
| ७\|३० | मि· | क· | सिं | क· | तु· | वृ. | ध. | म· | कु· | मी | मे. | वृ. |
| १०\|० | क· | शि· | क· | तु· | वृ. | ध. | म· | कुं· | मी | मे. | वृ. | मि. |
| १२\|३० | सिं· | क· | तु· | वृ. | ध. | म· | कुं· | मी | मे. | वृ. | मि· | क |
| १५\|० | क· | तु· | वृ. | ध. | म· | कुं· | मी | मे· | वृ. | मि· | क· | सिं |
| १७\|३० | तु· | वृ. | ध. | म· | कुं· | मी | म· | वृ. | मि. | क· | सिं· | क· |
| २०\|० | वृ· | ध· | म· | कुं· | मी | मे· | वृ. | मि. | क· | सिं | क· | तु· |
| २२\|३० | ध. | म· | कुं· | मी | मे· | वृ. | मि. | क· | सिं· | क· | तु· | वृ. |
| २५\|० | म· | कुं· | मी· | मे· | वृ. | मि. | क· | सिं | क· | तु· | वृ. | ध. |
| २७\|३० | कुं· | मी· | मे. | वृ. | मि. | क· | सिं | क· | तु· | वृ. | ध. | म· |
| ३०\|० | मी· | मे. | वृ. | मि | क· | सिं | क· | तु· | वृ. | ध. | म· | कुं· |

प्रत्येक राशि से प्रथम पञ्चम और नवम राशि के स्वामियों का द्रेष्काण दश, दश अंश का होता है । जैसे मेष में पहला द्रेष्काण दश अंश तक मङ्गल का, दूसरा द्रेष्काण सूर्य का, तीसरा द्रेष्काण वृहस्पति का। वृष में प्रथम द्रेष्काण शुक्र का, द्वितीय द्रेष्काण बुध का, तृतीय द्रेष्काण शनिका । एवं मिथुनादि में भी जानना चाहिये। मेष, मिथुन, सिंह, तुला, धनु, कुम्भ इन (विषम) राशियों में पहले १५ अंश तक सूर्य का, फिर १६ अंश से ३० तक चन्द्रमा का होरा होता है। एवं सम [ वृष, कर्क, कन्या, वृश्चिक, मकर मीन ] राशियों में प्रथम १५ अंश तक चन्द्रमा का बाद १६ अंश से ३० अंश तक सूर्य का होरा होता है ॥ ६ ॥

द्रेष्काणचक्रम् ।

| रा. अं. | मे· | वृ· | मि· | क· | सिं | क· | तु· | वृ. | ध. | म· | कुं· | मी |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १० | मं· | शु. | बु· | चं· | सू· | बु. | शु. | मं· | वृ. | श. | श. | वृ. |
| २० | सू· | बु· | शु. | मं· | वृ. | श. | श. | वृ. | म· | शु. | बु. | चं· |
| ३० | वृ, | श· | श. | वृ. | मं. | शु. | बु. | चं· | सू· | बु. | शु. | म· |

होराचक्रम् ।

| लग्नं | मे· | वृ. | मि· | क· | सिं | क· | तु· | वृ· | ध. | म· | कुं· | मी |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १५अं. | सू. | चं· | सू. | चं. | सू. | चं. | सू. | चं. | सू. | चं. | सू. | चं. |
| ३०अं | चं. | सू. | चं. | सू. | चं. | सू. | चं. | सू. | चं. | सू. | चं. | सू. |

त्रिशांशाधिपतिः ।

**कुजयमजीवज्ञसिताः पञ्चेन्द्रियवसुमुनीन्द्रियांशानाम् ।**
**विषमेषु समर्क्षेषूत्क्रमेण त्रिंशांशकाः कल्प्याः ॥ १० ॥**

भट्टोत्पलः—त्रिशांशाधिपानाह । विषमराशिषु यथाक्रमेण कुजादीनां पञ्चादयो भागाः त्रिशांशकाः कल्प्याः । तत्रादावेवाङ्गारकस्य पञ्च, ततः परं मन्दस्य पञ्च, ततो जीवस्याष्टौ, ततः परं बुधस्य सप्त,ततः शुक्रस्य पंच, । एवं समराशिषूत्क्रमेण यथा प्रथमाः पंच शुक्रस्य, ततः सप्त बुधस्य, ततोऽष्टौ जीवस्य, ततः पंच सौरस्य, ततः पंच भौमस्य ॥ १० ॥

वि०प्र०—अथ त्रिंशांशाधीशानाह—**कुजेति** । विषमेषुमेष-मिथुन-सिंह-तुला-धनुःकुम्भराशिषु कुजो भौमः यमः शनिः,जीवो बृहस्पतिः, ज्ञो बुधः,

सितः शुक्र एते क्रमेण, पञ्च प्रसिद्धं, इन्द्रियाणि पञ्च, वसवः अष्टौ, मुनयः सप्त,इन्द्रियाणि पञ्च एषामशानां त्रिंशांशा धिपाः कल्पाः । यथा विषमराशिषु प्रथमस्त्रिंशांशः पञ्चांशमितः कुजस्य, द्वितीयः पञ्चांशमितः शनेः, तृतीयोऽष्टांवशमितो गुरोः, चतुर्थः सप्तांशमितो बुधस्य, पञ्चमः पञ्चांशमितः शुक्रस्य । समर्क्षेषु वृष-कर्क-कन्या-वृश्चिक-मकर-मीनेपूत्क्रमेण वैपरीत्येन त्रिंशांशकाः कल्प्याः । तथाहि--प्रथमस्त्रिंशांशः पञ्चाशमितः शुक्रस्य, द्वितीयः सप्तांशमितः विदः, ततोऽष्टांवशमितो गुरोः, ततः पञ्चांशमितः शनेः, तत पञ्चांशमितो भौमस्य । ननु "समेपूत्क्रमेण त्रिंशाशपाः" इति पदोपादानादंशानामेव वैपरित्यं नतु ग्रहाणामिति तदयुक्तम्—

पञ्चाथ पञ्च चाष्टौ सप्त च पञ्चैव चोजभवनेषु ।
धरणिसुत-मन्द-सुरगुरु-बुध-शुक्राणां क्रमेणांशाः ॥
पञ्चैव सप्त चाष्टौ पञ्च च पञ्चाथ युग्मभवनेषु ।
भागाः भार्गवशशिसुतसुरेज्यशनिभूमिपुत्राणाम् ॥इतिश्रुतिकीर्त्युक्तेः१०

विषमराशि अर्थात् मेष–मिथुन–सिंह–तुला–धनु–कुम्भराशियों में क्रमसे पहले पाँच अंश तक मङ्गल का, उसके बाद पाँच अंश शनि का, फिर आठ अंश तक बृहस्पति का, फिर सात अंश तक बुध का, फिर पाँच अंश तक शुक्र का त्रिंशाश होता है । सम-राशियों ( वृष–कर्क–कन्या–वृश्चिक–मकर–मीन ) में इससे विपरीत ( उलटा ) अर्थात् पहले पाँच अंश शुक्रका, फिर सात अंश बुध का, फिर आठ अंश बृहस्पति का, तदन्तर पाँच अंश शनि का उसके बाद पाँच अंश तक मङ्गल का त्रिंशाश होता है । इसकी स्पष्टता के लिये चक्र देखिये ॥ १० ॥



| विषमत्रिंशांशचक्रम् | | | | | | | समत्रिंशांशचक्रम् | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अं | मे· | मि· | सि· | तु· | ध. | कुं· | वृ· | क. | क. | वृ· | म· | मी· | अं. |
| ५ | मं· | मं· | मं· | मं· | मं· | मं. | शु. | शु. | शु | शु. | शु. | शु. | ५ |
| ५ | श. | श. | श. | श. | श. | श. | बु. | बु. | बु. | बु. | बु. | बु. | ७ |
| ८ | बृ. | बृ. | बृ. | बृ. | बृ. | बृ. | बृ. | बृ. | बृ. | बृ. | बृ. | बृ. | ८ |
| ७ | बु. | बु. | बु. | बु. | बु. | बु. | श. | श. | श. | श. | श. | श. | ५ |
| ५ | शु. | शु. | शु. | शु. | शु. | शु. | मं. | मं. | मं. | मं. | मं. | मं. | ५ |

द्विपदादिसंज्ञा ।

नृचतुष्पदकीटाप्या बलिनः प्राग्दक्षिणापरोत्तरगाः
सन्ध्याद्युरात्रिबलिनः कीटा नृचतुष्पदाश्चैवम् ॥११॥
मेषवृषधन्विसिंहाश्चतुष्पदा मकरपूर्वभागश्च ।
कीटः कर्कटराशिः सरीसृपो वृश्चिकः कथितः ॥१२॥
मकरस्य पश्चिमार्द्धं ज्ञेयो मीनश्च जलचरः ख्यातः ।
मिथुनतुलाघटकन्या द्विपदाख्या धन्विपूर्वभागश्च १३

भट्टोत्पलः—राशीनां दिक्कालबलमाह । नृराशया मिथुनकन्यातुलाकुंभधन्विपूर्वार्द्धमेते पूर्वस्था बलिनः । लग्नगता इत्यर्थः । चतुष्पदा मेषवृषसिंहधन्विपरार्द्ध मकरपूर्वार्द्धं एते दक्षिणस्था बलिनो दशमस्थानगता इत्यर्थः । कीटो वृश्चिकः स पश्चिमस्थो बली सप्तमस्थ इत्यर्थः । कर्कटमकरपरार्धमीना आप्याः एते चोत्तरस्था बलिनश्चतुर्थस्थानगता इत्यर्थः । सन्ध्याद्युरात्रिबलिन इति । अत्र जलराशयोऽपि कीटग्रहणेन गृह्यन्ते । एवं कीटः सन्ध्याकाले बली नरराशयो दिवाकाले बलिनश्चतुष्पदा रात्रौबलिनः ११–१३

वि० प्र०—अथ राशीनां दिक्कालबलं क्रमप्राप्तं चतुष्पदादिसंज्ञाश्चाह—नरिति । नृचतुष्पदकीटाप्या राशयः क्रमेण प्रागादिषु दिक्षु बलिनः स्युः । यथा नृराशयः अनन्तरोक्ता मनुष्य राशयः पूर्वस्था लग्नगता बलिनः स्युः । चतुष्पदाः चतुष्पदसंज्ञराशयो दक्षिणदिग्गता दशमभवनगता बलिनो भवन्ति। कीटः पश्चिमगतोऽर्थात्सप्तमस्थानस्थो बली भवति। एवमाप्या जलचरराशय उत्तरगाश्चतुर्थस्थानस्थिता बलिनो भवन्ति उक्तञ्च राशीनां संज्ञापूर्वकं दिग्बलत्वं जातकपारिजाते—

चापापरार्द्धहरिगोमकरादिमेषा
मानस्थिता बलयुताश्च चतुष्पदाख्याः ।
कन्यानृयुग्मघटतौलिशरासनाद्या
लग्नान्विता यदि नरा द्विपदा बलाढ्याः ॥
मृगापरार्द्धान्त्यकुलीरसंज्ञा
जलाभिधाना बलिनश्चतुर्थे ।
जलाश्रयो वृश्चिकनामधेयः
स सप्तमस्थानगतो बली स्यात् ॥ इति ॥

एवं कीटा नृचतुष्पदाश्च यथाक्रमं सन्ध्याद्युरात्रिबलिनो भवन्ति । कीटाः सन्ध्याकाले प्रातःसायंसन्ध्याद्वय इत्यर्थः । बलिनः स्युः । नृराशयः द्विपदराशयो दिवाबलिनः । चतुष्पदराशयो रात्रिबलिनो भवन्ति। अत्र बहुवचनपदोपादानात्कीटशब्देन जलचरस्यापि ग्रहणम् । तथाहि स्फुटमाह देवकीर्तिः—

मिथुनतुलकुम्भकन्या दिवाबला धन्विनश्च पूर्वार्द्धम् ।
अजवृषसिंहा रात्रौ मृगहययोः पूर्वपश्चार्द्धे ॥
वृश्चिकमीनकुलीरा मकरान्त्यार्द्धं च सन्ध्यायाम् ॥ इति ॥

जातकपारिजातेतु केन्द्रस्था एवैते बलिन इति विशेष उक्तः—

केन्द्रं गतोहि द्विपदो बलाढ्यः
चतुष्पदा केन्द्रगता रजन्याम् ।

कीटास्तु सर्वे यदि कण्टकस्थाः
सन्धिद्वये वीर्ययुता भवन्ति ॥ इति ॥

मेषेति । मेषवृषधन्विसिंहाः प्रसिद्धा मकरस्य पूर्वभागः पूर्वार्द्धं मे राशयश्चतुष्पदाश्चत्वारिपदानि येषां ते तथोक्ताश्चतुष्पदसंज्ञक भवन्ति । कर्कटराशिः कीटः कीटसंज्ञकः, वृश्चिकः सरीसृपः सर्प कथितः । मकरस्य पूर्वार्द्धं मीनश्च जलचराः ख्याताः । मिथुनः प्रसिद्ध स्तुलाधरस्तुलाराशिः कन्या प्रसिद्धा धन्विपूर्वभागो धन्विनः धनुर्धरराशे पूर्वार्द्धमेते द्विपदाख्या द्विपदसंज्ञका मनुष्यसंज्ञका इति यावत् । भवन्ति क्वचित्पुस्तके"मकरस्य पश्चिमार्द्धं कुम्भोमीनश्च जलचरः ख्यातः । मिथु-नतुलाधरकन्या द्विपदाख्या" इतिपाठोऽवलोक्यते । तेन कुम्भस्य जलचर-त्वमुक्तं भवति । पूर्वपाठे तु कर्कटस्य कीटत्वं कुम्भस्य द्विपदत्वं मिति परन्तु गर्गदेवकीर्तिसत्याचार्ययवनेश्वरादिभिः कर्कस्य जलचरत्वं कुम्भस्य द्विपदत्वं वृश्चिकस्य कीटत्वमुक्तं तत्तत्रचिन्त्यम् । प्रयोजनमुक्तं ग्रन्थकर्त्रा . राशिशीलाध्याये–'ग्रामारण्यजलोद्भवराशिषु जाता भवन्ति तच्छीलाः' इति ॥ ११—१३ ॥

मनुष्य राशियाँ पूर्वदिशा में अर्थात् लग्न में, चतुष्पद राशियाँ दक्षिणदिशा अर्थात् दशम में, कीट संज्ञकराशि पश्चिम अर्थात् सप्तम में और जलचर संज्ञक राशियाँ उत्तर अर्थात् चतुर्थ स्थान में रहने पर बलवती होती हैं। कीट–जलचर राशियाँ सन्ध्या समय में, मनुष्यराशियाँ दिन में, चतुष्पद राशियाँ रात्रि में बलवती होती हैं। अब राशियों की चतुष्पदादि संज्ञा को लिखते हैं । मेष, वृष, धनु, सिंह और मकर का पूर्वार्द्ध इनकी चतुष्पद संज्ञा है। कर्क की कीट,वृश्चिक की सरीसृप सर्प मकरका पश्चिमार्द्ध (उत्तरार्द्ध)मीन इनकी जलचर और मिथुन, तुला, कन्या कुम्भ और धनु का पूर्वार्द्ध इनकी द्विपद संज्ञा (पुरुषसंज्ञा) है ॥ यहाँ ग्रन्थकार ने कर्क कीकीट संज्ञा वृश्चिककी सरीसृप (सर्प) संज्ञाकी है। परन्तु अन्य ग्रन्थकारों ने कर्क की जलचर, वृश्चिक की कीट संज्ञा बतलाई है ॥११-१३॥

## राशिबलज्ञानम् ।

**अधिपयुतो दृष्टो वा बुधजीवनिरीक्षितश्च यो राशिः ।**
**स भवति बलवान्न यदा युक्तो दृष्टोऽपि वा शेषैः॥१४॥**

भट्टोत्पलः–अथ राशिबलज्ञानार्थमाह अधिपयुतः स्व। स्वामिना युतो दृष्टो वा राशि र्बलवानेव। बुधजीवयोरन्यतमेन युक्तो दृष्टो वा बलवानेव। यदाऽन्यैर्ग्रहैरयुतो नाऽपि वीक्षितः। अनुक्तदृष्टो युतो वास्वस्वामिना युक्तो राशिर्बलवान् भवति। स्वामिना दृष्टः अन्यैः उक्तानुक्तैर्दृष्टो राशिर्मध्यबलो भवति। स्वस्वामिना बुधजीवव-र्ज्यमन्यैर्युतदृष्टो बलहीन एव ॥ १४ ॥

वि० प्र०–अथ राशेर्बलाबलत्वमाह– अधिपेति। यो राशिः अधिपयुतः स्वस्वामिना युक्तः वा स्वस्वामिना दृष्टः, अथवा बुधजीवनिरीक्षितो बुध-गुर्वोरन्यतमेन वा द्वाभ्यां निरीक्षितः पूर्णदृशाऽवलोकितः वा युक्तः उत्तरार्धे 'युक्तो दृष्टोपि वा शेषै' इति पदोपादानादत्रापि युक्त इति योजनीयम्। यदा शेषैः स्वाधिपबुधगुरुवर्ज्यमन्यैर्ग्रहैर्न युक्तो न च दृष्टस्तदा बलवान्भवति। अन्यथा नेत्यर्थात् सिद्धम्। यदोक्तानुक्तैर्मिश्रै-र्युक्तो वा दृष्टस्तद। मध्यबली भवतीति तदाधिक्यस्य तारतम्याद्धयेयम् उक्तं च पराशरजातके—

लग्नादिव्ययपर्यन्तं भावसंज्ञाऽनुरूपतः।
फलदा शुभसंदृष्टा युक्ता वा शोभनप्रदाः॥
पापदृष्टयुता भावा कल्प्टासोत्तरदायकाः।
नितरां शत्रुनीच स्थैर्न मित्रोच्चगतैश्च तैः॥

शम्भुहोराप्रकाशेपि–

स्वस्वामिना वीक्षितसंयुतो वा बुधेन वाचस्पतिना प्रदिष्टः।
स एव राशिर्बलवान् किल स्याच्छेषैर्यदा दृष्टयुतो न चात्र॥
राशिर्यदा खेटयुतो न दृष्टः स्वीयस्वभात्स्वफलं ददाति।
दृष्टोऽथ युक्तः सदसद्ग्रहेण पापोपि सौम्यः शुभदोपि पापः॥१४॥

जो मेषादिक राशि अपने स्वामी वा,बुध,अथवा बृहस्पतिसेयुक्त या दृष्ट हो और इन उक्तग्रहों के अतिरिक्त ग्रहों से युक्त या दृष्ट न हो तो बलवान् होती है। यदि उक्त और अनुक्त दोनों ग्रहों से युक्त या दृष्ट हो तो मध्य बली एवं उक्त से अतिरिक्त ग्रह से युक्त या दृष्ट हो तो निर्बल होती है ॥ १४ ॥

## तन्वादिभावसंज्ञा ।

**तनुधनसहजसुहृत्सुतरिपु जायामृत्युधर्मकर्माख्याः ।**
**व्यय इति लग्नाद्भावाश्चतुरस्राख्येऽष्टमचतुर्थे ॥१५॥**

भट्टोत्पलः—लग्नादीनां तन्वादिभावाश्रयत्वं व्यवहारार्थमाह। लग्नादारभ्यामी तन्वादयो भावाः । तत्र लग्नं प्रथमं पुरुषस्य शरीरं द्वितीयं धनस्थानं तृतीयं सहजं चतुर्थं सुहृत् भ्रातृमित्रसंज्ञं वा पंचमं सुतः षष्ठं शत्रुः सप्तमं जाया भार्या अष्टमं मृत्युः नवमं धर्मः दशमं कर्म एकादशं आयः द्वादशं व्ययः । प्रयोजनं लग्नादीनां यथोक्तभावानां . शुभपापग्रहसंयोगात्सम्पत्तिविपत्ती चिन्तनीये इति। चतुरस्राख्येऽष्टमचतुर्थे लग्नादष्टमस्थानस्य चतुर्थस्थानस्यचतुरस्र इत्याख्या ॥१५॥

वि० प्र०—अथ लग्नादीनां तन्वादिसंज्ञामाह—तन्विति । लग्नादारम्भ यथाक्रमं तन्वादयो द्वादशसंज्ञा भवन्ति । लग्नस्य तनुरिति नाम, द्वितीयस्य धनम्, तृतीयस्य सहजो भ्राता, चतुर्थस्य सुहृन्मित्रम्, पञ्चमस्य सुतः, षष्ठस्य रिपुः शत्रुः, सप्तमस्य जाया स्त्री, अष्टमस्य मृत्युः, नवमस्य धर्मः, दशमस्य कर्म, एकादशस्य आयः, द्वादशस्य व्यय इति । तन्वादीनां विशेषसंज्ञाप्युक्ता ग्रन्थान्तरे—

लग्नं मूर्तिः कल्पमाद्यं वपुः स्यादङ्गं देहश्चोदयाख्यं तनुश्च ।
स्वं,कोशार्थाख्यं कुटुम्बं धनं च प्रान्त्यं रिष्फंचान्त्यमाख्यं व्ययःस्यात् ।
अम्बा तुर्यं वाहनं वेश्म बन्धुर्गेहं पातालं हिबुकं सुहृच्चक्षेत्रम् ।
भूर्द्दं नीरमम्बुजलाख्यमापः संज्ञाः प्रोक्ता स्तुर्यभावस्य तज्ज्ञैः ॥

दुश्चिक्यविक्रमपराक्रमभं तृतीयं भ्रातुस्ततः सहजभं गदितं पुराणैः ।
स्यादष्टमं निधनजीवितमायुरन्ध्रं छिद्रं ततो लयपदं मृतियाम्यसंज्ञम्।
व्यापारमेषूरण मध्य कर्ममाना स्पदाज्ञा जनकं च राज्यम् ।
खमम्बरं वै गगनं नभश्च व्योमाख्यमुक्तं दशमं पुराणैः ॥
विद्यात्मजाख्यं तनयं तनूजं वाग्बुद्धिसंज्ञं किल पञ्चमं स्यात् ।
गुर्वाख्यमुक्तं नवमं तपश्च भाग्याभिधं धर्म यशश्च पुण्यम् ॥
जामित्रमस्तसदनं द्युनं द्यूनं स्मरं मदः ।
स्त्रीकामाख्यमिति प्रोक्तं सप्तमं पूर्वसूरिभिः ॥
षष्ठं शत्रूरिपुद्वेष्यः सपत्नाख्यं च वैरिभम् ।
भवलाभ.गमप्राप्तिमायमेकादशं स्मृतम् ॥ इति ॥
जन्मलग्नाच्चतुर्थाष्टमौ चतुरस्रसंज्ञकौ भवतः ॥ १५ ॥

लग्न की तनु, द्वितीय स्थान की धन, तृतीय की भ्राता, चतुर्थ की सुहृत् ( मित्र ), पञ्चम की सुत ( पुत्र ), षष्ठ की रिपु, सप्तम की जाया, अष्टम की मृत्यु, नवम की धर्म, दशम की कर्म, एकादश की आय, द्वादश की व्यय संज्ञा है । तथा आठवें और चौथे स्थान की चतुरस्र संज्ञा है ॥ १५ ॥

### चतुर्थपंचमनवमानां संज्ञा ।

**पातालहिबुकवेश्मसुखबन्धुसंज्ञाश्चतुर्थभावस्य ।**
**नवपञ्चमे त्रिकोणे नवमर्क्षं त्रित्रिकोणं च ॥ १६ ॥**

**भट्टोत्पलः**—चतुर्थनवमपंचमानां संज्ञान्तरमाह । लग्नाच्चतुर्थभवनस्य पातालसंज्ञा सुखसंज्ञा वेश्मसंज्ञा हिबुकसंज्ञा बन्धुसंज्ञा च । तथाच नवमस्य पंचमस्य च त्रिकोण इत्याख्या । नवमस्य त्रित्रिकोणमित्यपि च ॥ १६ ॥

वि० प्र०—अथ चतुर्थपञ्चम नवमभावानां संज्ञाविशेषमाह—पातालेति । चतुर्थभावस्य लग्नाच्चतुर्थस्थानस्य पातालः, हिबुकः, वेश्म,

सुखं वन्धु एताः संज्ञा भवन्ति । नवमस्य पञ्चमस्य चेति स्थानद्वयस्य त्रिकोणसंज्ञा । केवलं नवमस्य त्रित्रिकोणसंज्ञा ज्ञेया ॥ १६ ॥

चतुर्थ ( चौथे ) स्थान को पाताल, हिवुक, वेश्म, ( घर के सम्पूर्ण पर्यायवाची शब्द), सुख, और वन्धु नामहै। एवं नववें और पाचवें इन दोनों स्थानोको त्रिकोण, और केवल नवम को त्रित्रिकोण कहते हैं ॥ १६ ॥

### तृतीयपंचमसप्तमाष्टमद्वादशानां संज्ञा ।

**धीः पंचमं तृतीयं दुश्चिक्यं सप्तमं तु यामित्रम् ।**
**द्यूनं द्युनं च तद्वच्छिद्रमष्टमं द्वादशं रिःफम् ॥१७॥**

भट्टोत्पलः—पंचमतृतीयसप्तमाष्टमद्वादशस्थानानां संज्ञान्तरमाह-लग्नात्पञ्चमस्थानं धीसंज्ञं तृतीयं दुश्चिक्यसंज्ञं सप्तमं यामित्रसंज्ञं द्यूनं द्युनं च तत्तदेव सप्तमस्थानं सप्तमं यामित्रसंज्ञंद्युनसंज्ञं द्यूनसंज्ञं च अष्टमस्थानं छिद्रसंज्ञं छिद्रं च्नतपर्यायं लग्नाद्द्वादशं रिःफसंज्ञम् ॥ १७ ॥

वि० प्र०—अथ तृतीयपञ्चमसप्तमाष्टमद्वादशभावानां नामान्तरमाह—धीरिति स्पष्टार्थः ॥ १७ ॥

पञ्चम को धी ( वुद्धि वाची शब्द ), तृतीय को दुश्चिक्य, सप्तम को यामित्र, द्यून, द्युन, आठवें भाव को छिद्र, द्वादश ( वारहवें ) को रिस्फ कहते हैं ॥ १७ ॥

### केन्द्रादिसंज्ञा ।

**केन्द्रचतुष्टयकण्टकलग्नाऽस्तदशमचतुर्थानाम् ।**
**संज्ञा परतः पणफरमापोक्लीमं च तत्परतः ॥ १८ ॥**

भट्टोत्पलः—स्थानानां संज्ञान्तरमाह । लग्नचतुर्थसप्तमदशमानां चतुर्णां स्थानानां प्रत्येकस्य संज्ञात्रयं केन्द्रं चतुष्टयं कण्टकं-

मिति। तत्सर्वस्मात्केन्द्रात्परस्य पणफरमित्याख्या । सर्वस्मा-त्पणफरात्परस्यापोल्किमित्याख्या ॥ १८ ॥

वि० प्र०—अथ द्वादशभावानां संज्ञान्तरमाह—केन्द्रेति । लग्न-सप्तम-दशम-चतुर्थानां चतुर्णांचतुर्णां भावानां प्रत्येकस्य कण्टकं,केन्द्रं च-तुष्टयमितिसंज्ञात्रयं भवति । परतः प्रत्येक केन्द्रात्परेषां द्वितीय-पञ्चमाष्टमै-कादशानां प्रत्येकस्य पणफरसंज्ञा ततपरतःपणफरात्परेषां तृतीय-षष्ठ-नवम-द्वादशभा वानामापोक्लिमसंज्ञा ज्ञेया ॥ १८ ॥

लग्न, सातवाँ, दशवाँ, और चौथा इन स्थानों को, केन्द्र, चतु-ष्टय और कण्टक कहते हैं। केन्द्र के बाद ( द्वितीय, पञ्चम, अष्टम, एकादश ) पणफर होता है। उसके बाद के स्थान ( तीसरा,छठवाँ, नववाँ और बारहवा इन ) को आपोक्लिम कहते हैं॥ १८॥

उपचयवर्गोत्तमलक्षणम् ।

त्रिषडेकादशदशमान्युपचयभावान्यतोऽन्यथोऽन्यानि।
वर्गोत्तमा नवांशाश्चरादिषु प्रथममध्यान्त्याः ॥१६॥

भट्टोत्पलः—उपचयापचयसंज्ञां नवांशकानां वर्गोत्तमसंज्ञां चाह । तृतीयषष्ठैकादशदशमानामुपचयमित्याख्या । अतो ऽन्य थाऽन्यानि उपचयेभ्यो यान्यवशेषस्थानानि तान्यपचयानि इत्यर्थः । वर्गोत्तमा नवांशाश्चरराशिषु प्रथमनवांशस्य वर्गोत्तमः स्थिरराशिषु मध्यमस्य पञ्चमस्य द्विः स्वभावराशिश्चान्त्यस्य न वांशस्य । एतदुक्तं भवति। सर्वस्यैव राशेःस्वनवांशको वर्गोत्तमा-ख्य इति ॥ १९ ॥

वि० प्र०—अथोपचयापचयसंज्ञं नवांशानां वर्गोत्तमसंज्ञांचाहैकेन श्लोकेन— त्रीति । त्रिषडेकादशदशमानामुपचयसंज्ञा भवति । अतोऽन्यथाऽन्यानि । यान्युपचयस्थानान्युक्तानि तेभ्योऽन्यानि अव-शिष्टानि यानि स्थानानि तान्यपचयाख्यानीत्यर्थः । यदत्र केनचित्—

अथोपचयसंज्ञा स्यात्त्रिलाभरिपुकर्मणाम् ।
न चेद्भवन्ति दृष्टास्ते पापस्वस्वामिशत्रुभिः ॥

इत्युक्तं तदत्राचार्यस्य नाभिमतमत एवाचार्यः 'न नित्यमेके' इत्युक्तवान्बृहज्जातके । **वर्गोत्तमेति** । चरादिषु चरस्थिरद्विस्वभावराशिषु यथाक्रमं प्रथममध्यमान्त्या नवांशा वर्गोत्तमा वर्गोत्तमसंज्ञका भवन्ति । तद्यथा चरराशिषु मेष-कर्क-तुला-मकरेषु प्रथमो नवमांशः, स्थिरेषु वृष-सिंह-वृश्चिक-कुम्भराशिषु पञ्चमो नवांशः, द्विस्वभावेषु मिथुन-कन्या-धनुर्मीनेषु अन्तिमो नवमो नवमांशो वर्गोत्तमाख्यो भवति । सर्वेषु राशिषु स्वीयो नवमांशो वर्गोत्तमाख्यो भवतीति निष्कृष्टोऽर्थः । उक्तञ्च—

'स्वे स्वे गृहेषु स्वनवांशका ये वर्गोत्तमास्ते यवनैर्निरुक्ता' इति । प्रयोजनमुक्तं ग्रन्थकृता बृहज्जातके(११।३)'वर्गोत्तमगते लग्ने' इत्यादि॥१९॥

तीसरा, छठवाँ, दशवा और ग्यारहवाँ इन स्थानों को उपचय स्थान कहते हैं। इससे अन्य ( जन्म, द्वितीय, चतुर्थ, पञ्चम, सप्तम अष्टम,नवम, द्वादश इन स्थानों)को अपचय कहते हैं । किसी आचार्य का मत हैकि तृतीय,षष्ठ,दशम,एकादश ए भाव यदि अपनेस्वामि के शत्रु या पापग्रह से न युक्त हों और न देखे जाते हो तो उपचय होते हैं अन्यथा नहीं । चरादि राशियों में प्रथम, मध्य ( पंचम ) और अन्त्य क्रम से वर्गोत्तमनवमांश कहे गये है । अर्थात् चरराशि में प्रथम नवमांश, स्थिर राशियों में मध्यम ( पंचम ) नवमांश और द्विस्वभावराशियों में अन्तिम (नवम)नवमांश वर्गोत्तम होताहै ॥१९॥

राशीनां दिनरात्रिबलशीर्षोदयत्वपृष्ठोदयत्वम् ।

## मेषाद्याश्चत्वारः सधन्विमकराः क्षपाबला ज्ञेयाः ।
## पृष्ठोदया विमिथुनाःशिरसान्ये ह्युभयतो मीनः॥२०॥

भट्टोत्पलः—राशीनां दिनरात्रिबलपृष्ठोदयत्वशीर्षोदयत्वमाह। मेषाद्याश्चत्वारो मेषवृषमिथुनकर्कटा धन्विमकराभ्यां सह एते षड्राशयो रात्रिबलिनः । अन्ये दिनबलाः । अत्र यद्यपि बलग्रहण-

मस्ति तथापि संज्ञामात्रं वेदितव्यं यथा रात्रिसंज्ञा तथा दिनसंज्ञा इति । यतस्ते द्युबलं सन्ध्याद्युरात्रिबालिन इति। पृष्ठोदया विमिथुना इति । मेषवृषकर्कटधान्विमकराः पृष्ठोदयसंज्ञाः । अन्ये मिथुनसिंहकन्यातुलावृश्चिककुम्भाः शीर्षोदयसंज्ञाः । मीनः शीर्षोदयः पृष्ठोदयश्चेति ॥२०॥

वि०प्र०—अथ राशीनां दिनरात्रि संज्ञां पृष्ठोदयादिसंज्ञाञ्चाह—**मेषाद्या** इति । मेषाद्याश्चत्वारो मेषवृषमिथुनकर्कटा राशयः सधन्विमकरा धनुर्मकराभ्यां सहिताः क्षपाबज्ञा रात्रिबज्ञा रात्रिसंज्ञका ज्ञेया ज्ञातव्याः । अन्ये सिंह-कन्या-तुला-वृश्चिक-कुम्भमीना दिनबला भवन्ति । त एव रात्रिबला राशयो विमिथुना मिथुनेन रहिता अर्थात् मेष वृष कर्कट धनुर्धरमकरा पृष्ठोदयाः पृष्ठोदयसंज्ञका भवन्ति । अन्ये मिथुनसिंहकन्यातुलावृश्चिककुम्भा शिरसोदयन्ति शीर्षोदयसंज्ञका भवन्ति । मीन उभयतो पृष्ठशीर्षाभ्यां उदेति उभयसंज्ञो भवति । अत्र क्षपाबला इति पदं संज्ञामात्रबोधकं "सन्ध्या द्युरात्रिबलिन" इति ज्ञापकात् । तथा हि होरामकरन्दे—

'कन्यालि जूकहरिमीनघटा दिनाख्या
　　मूर्द्धोदया समिथुनास्त्वपरे निशाख्याः ।
पृष्ठोदयाश्च सफरो ह्युभयोदयः स्या" दिति ।

प्रयोजनञ्च शीर्षोदयराशिलग्ने यात्रा प्रशस्ता भवत्युक्तञ्च श्रीपतिना—'शिरसोदयमेति यश्च राशिजयकृत्सोप्युदये' इति ॥

अथ प्रसङ्गाद्ध्रस्वादि लक्षणमप्युच्यते राशीनाम्—तथा हि—

ह्रस्वा वृषमीनाजघटा मिथुनधनुः कर्किमृगमुखाश्च समाः ।
वृश्चिककन्यामृगपतिवणिजो दीर्घाः समाख्याताः ॥

एतत्प्रयोजनं—उदयगता एते राशयः स्वतुल्यानि शरीराणि विधास्यन्तीति ॥२० ॥

मेष, वृष, मिथुन, कर्क धनु और मकर ए राशियाँ रात्रि वली अर्थात् रात्रिसंज्ञक है ( क्योंकि, सन्ध्याद्युरात्रिवलिन, इत्यादि पहले ही रात्रि वली राशि कह आए हैं ) । मिथुन को छोड़ कर वे हीं ( मेष, वृष, कर्क धनु और मकर ) राशियाँ पृष्ठोदय संज्ञक हैं। शेष (मिथुन, सिंह, कन्या, तुला, वृश्चिक, कुम्भ) शीर्षोदय संज्ञकहैं। मीन उभयोदय ( पृष्ठोदय और शीर्षोदय दोनों ) संज्ञकहै ॥ २० ॥

उच्चनीचत्रिकोणानि ।

अजवृषमृगाङ्गनाकर्किमीनवणिजांशकेष्विनाद्युच्चाः ।
दशशिख्यष्टाविंशतितिथीन्द्रियत्रिनवविंशेषु ॥२१॥
उच्चान्नीचं सप्तममर्कादीनां त्रिकोणसंज्ञानि ।
सिंहवृषा ज प्रमदा कार्मुकभृत्तौलिकुम्भधराः ॥२२॥

भट्टोत्पलः—अर्कादीनामुच्चराशीनाह । सारावल्यां-

त्रिंशतिरंशाः सिंहे त्रिकोणमपरे स्वभवनमर्कस्य ।
उच्चं भागत्रितयं वृष इन्दोः स्यात्त्रिकोणमपरे स्युः ॥
द्वादशभागा मेषे त्रिकोणमपरे स्वभं तु भौमस्य ।
उच्चफलं कन्यायां बुधस्य तुङ्गांशकैः सदा चिन्त्यम् ॥
परतास्त्रिकोणजातं पञ्चभिरंशैः स्वराशिजं परतः ।
दशभिर्भागैश्चापे त्रिकोणमपरे स्वभं तु देवगुरोः ॥
शुक्रस्यांशातिथयस्त्रिकोणमपरे स्वभं तुलायां च ।
कुम्भे त्रिकोणनिजभे रविजस्य रवेर्यथा सिंहे ॥

तद्यथा—आदित्यस्य मेष उच्चं चन्द्रस्य वृष उच्चं भौमस्य मृगो मकरः बुधस्यकन्या गुरोः कर्कः शुक्रस्य मीनः मन्दस्य वणिक् तुला एवं सर्वराशिपूच्चसंज्ञा दशादिषु भागेषु व्यवस्थताः परमोच्चस्था भवन्ति। तद्यथा मेषस्य दशमांशे व्यवस्थितोऽर्कः परमोच्चस्थो भवति वृषस्य तृतीयभागे चन्द्रः मकरस्याष्टाविंशतिभागे भौमः कन्यायाः पञ्चदशे

बुधः कर्कटस्य पञ्चमे जीवः मीनस्य सप्तविंशे शुक्रस्तुलायां विंशतितमे सौरिः एवं विधाः परमोच्चस्था उदिताः ग्रन्थान्तरे च। रवेर्मेषतुले प्रोक्ते चन्द्रस्य वृषवृश्चिकौ। भौमस्य मृगकर्कौ च कन्यामीनौ बुधस्य च॥ जीवस्य कर्कमकरौ मीनकन्ये सितस्य च। तुलामेषौ च मन्दस्य उच्चनीचे उदाहृते॥ ग्रहाणामुच्चनीचस्थानानि त्रिकोणानि चाह। यस्य ग्रहस्य यदुच्चं तस्मादुच्चस्थानात् सप्तमं नीचसंज्ञं तत्र दशादिष्वंशेषु परमनीचत्वं ज्ञेयम्। अत्र न्यासः एवं विधाः सूर्योदयःपरमनीचस्था भवन्ति। अर्कादीनां त्रिकोणसंज्ञानीति। आदित्यस्य सिंहस्त्रिकोणाख्यः चन्द्रमसो वृषःभौमस्य मेषः बुधस्य कन्या जीवस्य धनुः शुक्रस्य तुला मन्दस्य कुम्भ इत्यर्थः॥ २१—२२॥

वि० प्र० अथ सूर्यादिग्रहाणामुच्चपरमोच्चादीन् त्रिकोणानि चाह-**अजेति**। अजवृषादिराशिषु दशशिख्यादिष्वंशेष्विनादीनां सूर्यादिग्रहाणामुच्चा उच्चस्थानानि भवन्ति। 'इनः सूर्ये प्रभौ' इत्यमरः। यथा सूर्यस्य अजो मेष उच्चः, मेषस्य दशमेंऽशे परमोच्चः। चन्द्रमसो वृषः उच्चः, वृषस्य तृतीयभागे परमोच्चः। भौमस्य मकर उच्चः, मकरस्याष्टाविंशत्यंशे परमोच्चः। बुधस्य कन्याराशिरुच्चः, कन्यायाः पञ्चदशांशे परमोच्चः। गुरोः कर्कट उच्चः, कर्कटस्य पञ्चमेंशे परमोच्चः। शुक्रस्य मीन उच्चः, मीनस्य सप्तविंशत्यंशे परमोच्चः। शनेस्तुलाराशिरुच्चः, तुलाया विंशतितमेंऽशे परमोच्चः। उच्चात्सप्तमं नीचं। यस्य ग्रहस्य जो राशिरुच्चः, यश्च परमोच्च उक्तस्तस्मात्सप्तमराशिस्तस्य नीचं, तस्मिन्नेवराशावुक्तांशतुल्यं परमनीचं भवति। तद्यथा—सूर्यस्य मेष उच्चस्तस्मात्सप्तमस्तुलाराशिर्नीचसंज्ञः, तुलायादशमेंऽशे परमनीचं भवति। एवमिन्द्वादीनामपि ज्ञेयम्। एतेषां प्रयोजनम्। 'त्रिभिरुच्चैर्नराधिपः' "त्रिभिर्नीचैर्भवेद्दासः" इति॥ **अर्कादीनामिति** अर्क आदिर्येषां तेऽर्कादयस्तेषां सूर्यादिग्रहाणां सिंहवृषौ प्रसिद्धौ, अजो मेषः प्रमदा कन्या, कार्मुकं बिभर्तीति कार्मुकभृद्धनुर्धरः, तौलिस्तुला,

कुम्भ.धरः कुम्भ एते राशयस्त्रिकोणसंज्ञा भवन्ति । यथा सूर्यस्य सिंहश्च न्द्रमसो वृषः, भौमस्य मेषः, विदः कन्या, गुरोर्धनुः, शुक्रस्य तुला, शनेः कुम्भस्त्रिकोणसंज्ञको भवति । शम्भुहोराप्रकाशे त्रिकोणस्यांशविभागमप्याह–

हरो रवेर्नखा लवास्त्रिकोणकं परे गृहम् ।
वृषे विधोस्तु तुङ्गजा गुणा ३ परे त्रिकोणजाः ॥
कुजस्य भास्करा १२ अवौ त्रिकोणजाः परे स्वभम् ।
बुधस्य तुङ्गजास्त्रियां शरेन्दवः परे शराः ॥
धनुर्धरे गुरोर्दश त्रिकोणजाः परे स्वभम् ।
घटे भृगोःशरेन्दव १५ स्त्रिकोणकाः परे स्वभम् ॥
घटेघनेस्त्रिकोणजा नखा परे स्वगेहजाः ।
स्वभं परे त्रिकोणजा दिशस्तु संस्मृता बुधैः ॥इति॥२१-२२॥

सूर्यादिग्रहों का मेषादि राशि उच्च और मेषादि राशियों में दश इत्यादि अशों पर परमोच्च होता है । जैसे सूर्य का मेष उच्च, और मेष में दश अंश पर परमोच्च, चन्द्रमा का वृष उच्च और वृष के तीन अंश पर परमोच्च, मङ्गलका मकर उच्च, मकर का अठाइस अंश परमोच्च, बुधका कन्या उच्च, कन्याका १५ अंश परमोच्च,वृहस्पति का कर्क उच्च, कर्क का ५ अंश परमोच्च, शुक्र का मीन उच्च, मीन का २७ अंश परमोच्च और शनि का तुला उच्च, कन्या का २० अंश परमोच्च होता है । उच्चसे सप्तम राशि में नीच और परमनीच होता है । जैसे सूर्य का मेष से सप्तम तुला नीच और तुला का १० अंश परम नीच होता है। ऐसे ही चन्द्रमा इत्यादि का भी जानना चाहिये । सूर्य का सिंह,चन्द्रमा का वृष,मंगल का मेष,बुधका कन्या, बृहस्पति का धनु, शुक्र का तुला, शनि का कुम्भ ए मूलत्रिकोण राशियाँ होती हैं ॥ २१-२२ ॥

उच्चनीचमूलत्रिकोणराशिचक्रम् ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | बृ. | शु. | श. | ग्रहाः |
| मे. | वृ. | म. | क. | क. | मी | तु. | उच्चराशयः |
| १० | ३ | २८ | १५ | ५ | २७ | २० | अंशाः |
| तु. | वृ. | क. | मी | म. | क. | मे. | नीचराशयः |
| १० | ३ | २८ | १५ | ५ | २७ | २० | अंशाः |
| सिं. | वृ. | म. | क. | ध. | तु. | कुं. | मूलत्रिकोणराशयः |

षड्वर्गाः ।

गृहहोराद्रेष्काणा नवभागो द्वादशांशकस्त्रिंशः ।
वर्गः प्रत्येतव्यो ग्रहस्य यो यस्य निर्दिष्टः ॥ २३ ॥

इति श्रीवराहमिहिरकृते लघुजातके राशिप्रभेदो नाम प्रथमोऽध्यायः ॥ १ ॥

भट्टोत्पलः—षड्वर्गज्ञानार्थमाह । आत्मीयो राशिर्ग्रहस्य गृहसंज्ञः । आत्मीया होरा आत्मीयश्च द्रेष्काणः आत्मीयो नवमभागः आत्मीयो द्वादशांशः आत्मीयस्त्रिंशद्भागः एतेषां षड्वर्गसंज्ञा यद्यप्येवं तथाप्यात्मीयेषु स्थितः स्ववर्गस्थो भवति । वर्गशब्दस्य समुदायवाचित्वात् यत्र चन्द्रार्कयोः त्रिंशांशकाभावो भौमादीनां होराभावः एवं षष्ठानामसम्भवः । स्वगृहाधिष्ठितो वर्गस्थः । परवर्गस्थस्याप्येवमेवेति ज्ञातव्यम् ॥ २३ ॥

इति श्रीभट्टोत्पलविरचितायां लघुजातकटीकायां राशियोनिप्रभेदोनाम प्रथमोऽध्यायः ॥ १ ॥

वि० प्र०—अधुना षड्वर्गसंज्ञामाह—**गृहेति** । गृहमात्मीयो राशिः, होरा होरे 'विषमेऽर्केन्द्वोरित्याद्युक्तात्मीयहोरा, द्रेष्काणः स्वीयः,

नवभागो नवमांशः स्वीयः, द्वादशांशः स्वीयस्त्रिंशस्त्रिंशांशः स्वीय इत्येते ग्रहाणां स्वषड्वर्गसंज्ञका भवन्ति। एषु स्थिता ग्रहा आत्मषड्वर्गस्था भवन्ति। ननु रवीन्द्वोस्त्रिंशांशाभावात्कुजादिताराग्रहाणां होराभावात्पञ्च-स्वात्मीयेष्वेवस्थिता वर्गस्था इत्येव कथनं युक्तं तत्र कस्यचिन्मये त्र्यादिविकल्पस्थो ग्रहो वर्गस्थ उच्यते। यथा बृहज्जातकटीकायां भट्टोत्पलेन गर्गवचनमुपन्यस्तम्—

क्षेत्रं होराऽथद्रेष्काणो नवांशो द्वादशांशकः।
त्रिंशांशकश्च वर्गोयं सर्वस्य समुदाहृतः॥
त्र्यादिष्वपि पदार्थेषु स्थितः स्वेषु स्ववर्गगः।
पंचवर्गगतो ह्येवं ग्रहो भवति नान्यथा॥ इति॥

प्रयोजनन्—जन्मति एकोपि स्वषड्वर्गगतो नराणां शुभं फल ददाति॥२३॥

इत्याजमगढमण्डलान्तर्गतब्रह्मपुरग्रामाभिजन पं० श्रीरामदत्तद्विवेदिसूनु-
ज्यौ० श्रा० विन्ध्येश्वरीप्रसादद्विवेदिकृतायां लघुजातकस्य बालबो-
धिनीटीकायां राशिप्रभेदाध्यायः प्रथमः समाप्तः॥१॥

गृह ( राशि ), होरा, द्रेष्काण, नवमांश, द्वादशांश और त्रिंशांश ये प्रत्येकग्रहों के षड्वर्ग होते हैं। यहाँ सूर्य चन्द्रमा का त्रिंशांश, भौमादिग्रहों का होरा न होने के कारण किसी ग्रह का छवर्ग एकट्ठा नहीं होता इस को पण्डित लोग विचार करें॥ २३॥

इति विन्ध्येश्वरीप्रसादकृतलघुजातकहिन्दीटीकायां राशि-
प्रभेदाध्यायः प्रथमः समाप्तः॥ १॥

## अथ ग्रहाणां बलाबलाध्यायः।

आत्मा रविः शीतकरस्तु चेतः
सत्वं धराजः शशिजोऽथ वाणी।
ज्ञानं सुखं चेन्द्रगुरुर्मदश्च
शुक्रः शनिः कालनरस्य दुःखम्॥१॥

आत्मादयो गगनगैर्बलिभिर्बलवत्तराः।
दुर्बलैर्दुर्बला ज्ञेया विपरीतः शुभः स्मृतः ॥२॥
राजा रविः शशधरश्च बुधः कुमारः
सेनापतिः क्षितिसुतः सचिवौ सितेज्यौ।
भृत्यस्तथा तरणिजः सबला ग्रहाश्च
कुर्वन्ति जन्मसमये निजमेव रूपम् ॥३॥

भट्टोत्पलः–एते स्पष्टार्थाः ॥१—३॥

वि० प्र०–अथ ग्रहयोनिप्रभेदाऽध्यायो व्याख्यायते। तत्रादौ कालपुरुषस्य आत्मादिविभागानाह—**आत्मेति**। कालनरस्य कालपुरुषस्य आत्मा रविः, शीताः शीतलाः कराः किरणा यस्य स शीतकरश्चन्द्रश्चेतोऽन्तः करणं मन इति यावत्, धराया जातो धराजः भौमः सत्वं पराक्रमं, शशिजो बुधः वाणी वचनम्। 'गीर्वाग्वाणी सरस्वती' त्यमरः। गुरुः सुखं ज्ञानं च, शुक्रो मदो मदनं, शनिः दुःखम्। अस्तीति। अथैतत्प्रयोजनमाह—**आत्मादय इति**। गगने आकाशे गच्छन्तीति गगनगास्तैः सूर्यादिग्रहैर्बलिभिः मनुष्यस्य आत्मादयो बलवत्तराः पुष्टा भवन्तिः। दुर्बलैः रव्यादिभिर्नरस्यात्मादयो दुर्बला बलरहिताश्च भवन्ति। परन्तु शनेः विपरीतं फलं स्मृतम्। यदा शनि र्निर्बलस्तदा मनुष्यस्य दुःखमपि निर्बलमर्थात्स्वल्पदुःखं। यदा च शनिः पुष्टस्तदा मनुष्यस्य दुःखमपि पुष्टमर्थान्महद्दुःखमिति भावः। **राजेति**। रविः सूर्यः शशधरश्चन्द्रश्च राजा भवति। बुधः कुमारो युवराजः, क्षितेः पृथिव्याः सुतः पुत्रः क्षितिसुतो भौमः सेनापतिः सेनानायकः, सितश्चेज्यश्च सितेज्यौ शुक्रबृहस्पती सचिवौ मन्त्रिणौ, 'मंत्री धीसचिवोमात्य' इत्यमरः। तरणेः सूर्याज्जात उत्पन्नस्तरणिजः शनिःभृत्यः। 'द्युमणिस्तरणिर्मित्र' मित्यमरः। एतत्प्रयोजनमाह। **सबला इति**।

जन्मनिजन्मसमये सबलाः बलेन सहिता ग्रहा निजमेव रूपं कुर्वन्ति। अत्रैते श्लोका केनचित्प्रक्षिप्ताः भान्ति ॥ १—३ ॥

कालपुरुष का सूर्य आत्मा, चन्द्रमा मन, मङ्गल सत्व (बलशक्ति जैसे सिंहादिकों में रहती है), बुध वाणी ( आवाज ), ज्ञान और सुख बृहस्पति,शुक्रवीर्य और शनि दुःख है। जिसके जन्मपत्र में सूर्यादिग्रह बलवान् हो उस मनुष्यका आत्मा इत्यादि बलवान् होताहै। जैसे यदि सूर्य बलवान् हो तो मनुष्यका आत्मा बली होताहै,चन्द्रमा बलवान् हो तो मन बली होता है। एवं भौमादिको भी जानना। तथा यदि सूर्यादिग्रह निर्बल हो तो मनुष्य का आत्मा इत्यादि बल हीन होता है। शनि के लिये विपरीत (उलटा) फल समझना। जैसे शनि निर्बल हो तो दुःख की हानि, सबल हो तो दुःख की वृद्धि करता है। रवि और चन्द्रमा राजा, बुधराजकुमार, मङ्गल सेनापति; बृहस्पति, शुक्र ये दोनों मंत्री औ शनि भृत्य (नौकर) है। जन्मसमय में जो ग्रह बलवान् हो वह अपने सदृश रूप को बनाताहै ॥ १—३ ॥

### प्राच्यादिदिशास्वामिनः।

**प्राच्यादीशा रविसितकुजराहुयमेन्दुसौम्यवाक्पतयः ।**
**क्षीणेन्द्वर्कयमाराः पापास्तैः संयुतः सौम्यः ॥ ४ ॥**

भट्टोत्पलः—अथातो ग्रहयोनिप्रभेदाध्यायं व्याख्यास्यामः ॥ तत्रादौ ग्रहाणां दिक्स्वाम्यं सौम्यपापत्वं चाह। तत्र पूर्वस्यां दिश्यर्कोऽधिपतिः, पूर्वदक्षिणस्यां शुक्रः, दक्षिणायां भौमः, दक्षिणपश्चिमायां राहुः,पश्चिमायां सौरिः, पश्चिमोत्तरायां चन्द्रः उत्तरस्यां बुधः उत्तरपूर्वस्यां जीवः। तद्यथा पूर्वे रविः,आग्नेय्यां शुक्रः, दक्षिणे कुजः, नैर्ऋत्यां राहुः, पश्चिमे शनिः, वायव्यां चन्द्रः, उत्तरस्यां बुधः, ईशान्यां गुरुः। क्षीणेन्द्वर्कयमारा इति। कृष्णपक्षस्याष्टम्या ऊर्ध्वं शुक्लपक्षस्याष्टमीं यावत्क्षीणचन्द्रो भवति। क्षीणश्चन्द्र आदित्याङ्गारकशनैश्चराः पापसंज्ञकास्तैः संयुतो बुधोऽपि पापो भवति। एषां पापानां मध्येऽन्यतमेन युक्तो बुधः पाप एव

अर्थादेवाऽक्षीणचन्द्रमाः सौम्यः बुधबृहस्पतिशुक्राश्च सौम्या ज्ञेया इति ॥ ४ ॥

वि० प्र०—अथ रव्यादीनां दिगधीशत्वं सौम्यपापत्वं चाह—प्राच्येत्यादि । रव्यादयो ग्रहाः प्राच्यादीनामीशाः स्वामिनो भवन्ति । पूर्वस्यां दिशि रविः सूर्योऽधिपतिः । पूर्वदक्षिणस्यामर्थादाग्नेय्यां सितः शुक्रोऽधिपतिः । दक्षिणस्यां कुजो भौमः । 'अङ्गारको कुजो भौम' इत्यमरः । दक्षिणपश्चिमायामर्थान्नैऋत्यां राहुः । पश्चिमायां यमः शनिः । पश्चिमोत्तरायामर्थाद्वायव्यामिन्दुश्चन्द्रः । उत्तरस्यां सौम्यो बुधः । उत्तरपूर्वस्यामर्थादीशान्यां वाक्पतिर्बृहस्पतिः स्वामी भवति । उक्तञ्च सारावल्याम् ।

भानुः शुक्रः क्षमापुत्रः सैंहिकेयः शनिः शशी ।
सौम्यस्त्रिदशमन्त्री च प्राच्यादिदिगधीश्वराः ॥ इति ।

प्रयोजनं—केन्द्रस्थे ग्रहे सूतिकागृहद्वारज्ञानं हृतनष्टादिषु चोरादेर्गमनज्ञानञ्च । उक्तञ्च ग्रन्थकर्त्रा 'द्वारं वास्तुनि केन्द्रोपगा' दिति । षट्पंचाशिकायां च 'दिग्वाच्या केन्द्रगतै' रित्यादि । अथ कस्यचिन्मते कृष्णपक्षस्याष्टम्यर्द्धाच्छुक्लपक्षस्याष्टम्यर्द्धपर्यन्तं क्षीणचन्द्रः परतः पूर्णचन्द्रः । यवनमते तु शुक्लपक्षस्य प्रतिपदमारभ्य दशमीं यावन्मध्यबलस्ततः कृष्णपक्षस्य पंचमीपर्यन्तं पूर्णबलस्ततोऽमान्तं हीनबल (क्षीणः) यथा च तद्वाक्यम्—

मासे तु शुक्लप्रतिपत्प्रवृत्तेराद्ये शशी मध्यबलो दशाहे ।
श्रेष्ठो द्वितीयेऽल्पबलस्तृतीये सौम्यैस्तु दृष्टो बलवान् सदैव ॥इति॥

क्षीणेन्दुः क्षीणचन्द्रः, अर्कः सूर्यः, यमः शनिः, आरो भौमः एते पापाः पापसंज्ञका भवन्ति । तैः पापैः संयुतः सौम्यो बुधोऽपि पापो भवति । अर्थादेव शेषाः पूर्णचन्द्रबुधबृहस्पतिशुक्राः सौम्यसंज्ञकाः भवति । केचिद्ग्रहाणां पापक्रूरसौम्या इति संज्ञात्रयमाहुः । तथाहि—

क्रूरग्रहोऽर्कः कुजसूर्यजौ च पापौ शुभाः शुक्रशशाङ्कजीवाः।
सौम्यस्तु सौम्यो व्यतिमिश्रितोऽन्यैवर्गैस्तु तुल्यप्रकृतित्वमेति ॥इति॥४॥

पूर्वादिक दिशाओं के सूर्यादि ग्रह क्रमसे स्वामी होते हैं। जैसे पूर्व के स्वामी सूर्य, अग्निकोण के स्वामी शुक्र, दक्षिण दिशा के स्वामी मङ्गल, नऋत्य कोण के स्वामीराहु, पश्चिम दिशा के स्वामी शनि,वायु कोण के स्वामी चन्द्रमा,और उत्तर दिशा का स्वामी बुध, ईशान कोण के स्वामी बृहस्पति होते हैं। क्षीणचन्द्रमा, सूर्य, शनि मंगल और इन ग्रहों से युक्त बुध ये ग्रह पापसंज्ञक हैं। उसके अतिरिक्त शेष ग्रह ( पूर्णचन्द्रमा, पापग्रह के सम्बन्ध से रहित बुध, बृहस्पति और शुक्र ) शुभग्रह हैं ॥ ४ ॥

## पुरुषस्त्रीक्लीबाशाखाद्याधिपत्यम्।

**क्लीबपती बुधसौरी चन्द्रसितौ योषितां नृणां शेषाः।**
**ऋगथर्वसामयजुषामधिपा गुरुसौम्यभौमसिताः ॥५॥**

भट्टोत्पलः—ग्रहाणां स्त्रीपुन्नपुंसकाऽधिपत्यं शाखाधिपत्यं चाह। बुधशनैश्चरौ नपुंसकाधिपती, चन्द्रसितौ स्त्रीणामधिपती, शेषा आदित्याङ्गारकबृहस्पतयस्ते नृणामधिपतयः। प्रयोजनं चोरज्ञानादि। ऋगथर्वेत्यादि। ऋग्वेदाधिपतिर्जीवः, अथर्ववेदाधिपतिर्बुधः, यजुर्वेदाधिपतिः शुक्रः, सामवेदाधिपतिर्भौमः। प्रयोजनं बलवति शाखाधिपतौ कुले जातस्तद्विद्याश्रेष्ठो ब्राह्मणो भवति। ब्राह्मणे चोरविज्ञानशाखाविज्ञानग्रहपीडायां तच्छाखापठनं पूजनमिति ॥५॥

वि० प्र०—अथ ग्रहाणां स्त्रीपुरुषनपुंसकाधीशत्वं वेदाधिपत्वञ्चाह—**क्लीबेति**। बुधः प्रसिद्धः,सौरिः शनिः,एतौ क्लीबानां नपुंसकानां पती स्वामिनौ भवतः। 'क्लीबं पण्डो नपुंसकम्' इत्यमरः। चन्द्रसितौ योषितां स्त्रीणामधिपती "स्त्री योषिदबला" इत्यमरः। शेषा रविभौमगुरवः नृणां पुरुषाणां स्वामिनो ज्ञेयाः। गुरुर्बृहस्पतिः, सौम्यो बुधः, भौमो मङ्गलः, सितः शुक्रः एते क्रमेण ऋगथर्वसामयजुर्वेदानामधिपा भवन्ति।

यथा बृहस्पतिर्ऋग्वेदस्य, बुधोऽथर्वणवेदस्य, भौमः सामवेदस्य, शुक्रो यजुर्वेदस्य स्वामी भवति । प्रयोजनं--बलवति शाखापतौ तच्छाखीयाना मुपनयनं विधेयम्। 'शाखेशवारतनुवीर्यमतीव शस्तं शाखेशसूर्यशशि- जीवबले व्रतं सत्' इत्युक्तेः ॥ ५ ॥

बुध,और शनि नपुंसक के स्वामी हैं। चन्द्रमा और शुक्र ये दोना स्त्रियों के स्वामी हैं और शेष (अर्थात् सूर्य, मङ्गल और बृहस्पति ये तीन) ग्रह पुरुषों के स्वामी है। इसका प्रयोजन-प्रश्न में चौर पुरुष है या स्त्री? इत्यादि है। बृहस्पति बुध, मङ्गल और शुक्र ये ग्रह क्रमसे ऋग्वेदादि के स्वामी होते हैं। जैसे ऋग्वेद के स्वामी बृहस्पति, अथर्ववेद के स्वामी बुध,सामवेद के स्वामी भौम और यजुर्वेदके स्वामी शुक्र हैं। इसका प्रयोजन यह है कि जन्म समय में इन ग्रहों में जो बलवान हो उस ग्रह के शाखाध्यायियों के कुल में मनुष्य का जन्म होता है अथवा बृहस्पति इत्यादि के बली होने पर ऋग्वैदिका दिकों का उपवीत करना शुभ है ॥५॥

### ग्रहाणां ब्राह्मणादिवर्णाधिपत्यम्।

**जीवसितौ विप्राणां क्षत्रस्यारोष्णगू विशां चन्द्रः।**
**शूद्राधिपः शशिसुतः शनैश्चरः सङ्करभवानाम् ॥६॥**

भट्टोत्पलः--ग्रहाणां वर्णाधिपत्यमाह। जीवशुक्रौ ब्राह्मणानामधिपती, सूर्याङ्गारकौ क्षत्रियाणामधिपतिश्चन्द्रो वैश्याधिपतिः बुधः शूद्राधिपतिः शनैश्चरः संकरभवानामधिपतिः प्रतिलोम जानां सूतमागधादीनामित्यर्थः ॥६॥

वि० प्र०--अथ ग्रहाणां ब्राह्मणादिवर्णाधिपत्यमाह। जीवेति। जीवसितौ बृहस्पतिशुक्रौ विप्राणां ब्राह्मणानामधिपती भवतः। आरो भौमः। उष्णा गावो करणा यस्य स उष्णगुः सूर्यः। तौ भौमादित्यौ क्षत्रस्य क्षत्रियजातेरधिपती। चन्द्रः विशां वैश्यानामधिपतिः। शशि- सुतो बुधो शूद्रस्याधिपतिः। शनैश्चरः संकरभवानां वर्णसङ्कराणामनुलोम- प्रतिलोमजातीनां सूतमागधशवरपुलिन्दहूणादीनामधिपोभवति ॥ ६ ॥

बृहस्पति और शुक्र ब्राह्मण के, सूर्य और मङ्गल क्षत्रिय के, चन्द्रमा वैश्य के, बुध शूद्र के एवं शनैश्चर वर्णसंकर के स्वामी होते हैं। इसका-प्रयोजन प्रश्नकाल में चोर कौन वर्ण ( जाति ) का है इत्यादि जानना ॥ ६ ॥

ग्रहाणां बलाबलज्ञानम्।

**बलवान्मित्रस्वगृहोच्चनवांशके वीक्षितः शुभैश्चापि।**
**चन्द्रासितौ स्त्रीक्षेत्रे पुरुषक्षेत्रेपगाः शेषाः ॥ ७ ॥**

भट्टोत्पलः—बलाबलप्रकरणमाह। मित्रक्षेत्रस्थो ग्रहो बलवान् भवति, स्वगृहस्थः स्वोच्चस्थः स्वनवमांशकस्थश्च उच्चादिसाहचर्यात् त्रिकोणस्थोऽपि। यस्मादुक्तं स्वोच्चसुहृत्स्वत्रिकोणनवांशैः स्थानबलमिति वीक्षितः शुभैश्चापि यतस्तत्रस्थो ग्रहः शुभैर्दृष्टो बलवान् भवति। चन्द्रासितौ स्त्रीक्षेत्रे वृषादौ समराशौ व्यवस्थितौ बलिनौ भवतः। शेषा आदित्याङ्गारकबुधजीवसौरयः पुरुषक्षेत्रस्थाः विषमराशौ मेषादौ व्यवस्थिताः बलवन्ता ज्ञेया इति ॥७॥

वि० प्र०—अथ ग्रहाणां बलाबलत्वमाह—बलवानिति। मित्र स्वगृहोच्चनवांशके स्वमित्रराशौ स्वगृहे स्वीयराशौ स्वोच्चराशौ स्वनवांशके स्थितो ग्रहो बलवान् भवति। उच्चादिसाहचर्य्यात् स्वमूलत्रिकोणस्थितोपि ग्रहो बलवान् स्यात्। यत उक्तं ग्रन्थकृता बृहज्जातके-"स्वोच्चसुहृत्स्वत्रिकोणनवांशैः स्थानबलं स्वगृहोपगतैश्च" इति। शुभैः शुभग्रहैःपूर्णचन्द्रबुधगुरुशुक्रै 'र्वीक्षितो ग्रहो बलवान् भवति। तथा च चन्द्रासितौ स्त्रीक्षेत्रे वृषकर्ककन्यादिषु राशिषु। शेषा रविभौमबुधगुरुशनयः पुरुषक्षेत्रोपगाः पुरुषसंज्ञकराशिस्थाः मेषमिथुनादिविषमराशिगता बलवन्तो भवन्ति॥सारावल्यामेतत्प्रयोजनमुक्तम्—

पुंस्त्री भवनबलेन च करोति जनपूजितं कलाकुशलम्।
पुरुषं प्रसन्नचित्तं कल्पं परलोकभीरुं च ॥ इति ॥ तत्रैव ग्रहाणां बलाबलस्य दीप्तादिनवधाऽवस्थाऽप्यभिहिता—

दीप्तः स्वस्थो मुदितः शान्तो शक्तो निपीडितो भीतः ।
विकलो खलश्च कथितो नवप्रकारो ग्रहो हरिणा ॥
स्वोच्चे भवति च दीप्तः स्वस्थः स्वगृहे सुहृद्गृहे मुदितः ।
शान्तः शुभवर्गस्थः शक्तः स्फुटकिरणजालश्च ॥
विकलो रविलुप्तकरो ग्रहाभिभूतो निपीडितश्चैवम् ।
पापगणस्थश्च खलो नीचे भीतः समाख्यातः ॥

एतेषां फलमपि तत्रैवद्रष्टव्यम् । जातकपारिजाते तु दशधावस्था कथिता । तद्यथा

दीप्तः समुदितः स्वस्थः शान्तः शक्तः प्रपीडितः ।
दीनः खलस्तु विकलो भीतोऽवस्था दश क्रमात् ॥
स्वोचत्रिकोणोपगतः प्रदीप्तः स्वस्थः स्वगेहे मुदितः सुहृद्भे ।
शान्तस्तु सौम्यग्रहवर्गजातः शक्तोतिशुद्धैः स्फुटरस्मिजालैः ॥
ग्रहाभिभूतस्त्वतिपीडितः स्यादारातिराश्यंशगतोऽतिदीनः ।
खलस्तु पापग्रहवर्गयोगान्नीचेऽति भीतो विकलोस्तयातः ॥ इति ॥

जातकपारिजाते रव्यादिग्रहाणां पृथक्पृथक् बलप्रकारोऽप्युक्तस्तदत्र विस्तरभिया नोल्लिखितः ॥ ७ ॥

जो ग्रह अपने मित्र की राशि, अपनी राशि, या अपने उच्च, अपना नवमांश ( अपने मूलत्रिकोण में ) रहता है और शुभ ग्रह से देखा जाता है वह बलवान् होता है । चन्द्रमा और शुक्र स्त्री राशि ( समराशि ) में और शेष ( सूर्य, मङ्गल, बुध, बृहस्पति, शनि ) पुरुष ( विषम ) राशि में बली होते हैं ॥ ७ ॥

## ग्रहाणां दिग्बलं चेष्टाबलञ्च ।

**प्राच्याद्या जीवबुधौ सूर्यारौ भास्करिः शशाङ्कसितौ ॥**
**उदगयने शशिसूर्यौ वक्रेऽन्ये स्निग्धविपुलाश्च ८**

भट्टोत्पलः—दिग्बलचेष्टाबलयोर्ज्ञानार्थमाह । पूर्वदिक्स्थौ जीवबुधौ बलिनौ भवतः लग्नगतावित्यर्थः । आदित्याङ्गारकौ दक्षिणस्थौ बलिनौ दशमस्थावित्यर्थः । शनैश्चरः पश्चिमस्थो बली

लग्नात् सप्तमस्थ इत्यर्थः। चन्द्रशुक्रावुत्तरस्थौ बलिनौ चतुर्थस्था-वित्यर्थः। एतद्दिग्बलम्। अथ चेष्टाबलम्। उदगयन इत्यादि—मकरादिराशिषट्के वर्तमानोदगयनस्थो भवति कर्कादिराशिषट्के वर्तमानो दक्षिणायनस्थश्च। तत्रोत्तरायणस्थौ अर्कशशिनौ बलिनौ। वक्रेऽन्ये। स्फुटगत्या प्रतीपगतयः वाक्रिण उच्यन्ते। भौमादयो वक्रगताश्च बलिनो भवन्ति। तथा गगने स्निग्धा दृश्यमाना बलिनो भवन्ति विपुला बृहत्प्रमाणा दृश्या वा ॥ ८ ॥

वि०प्र०—अथग्रहाणां दिग्बलंचेष्टाबलञ्चाह—प्राच्यांप्राच्यांइति। जीवबुधौ गुरुसौम्यौ प्राच्यां पूर्वदिशि लग्नगतौ बलिनौ भवतः। दक्षिणस्यां सूर्यारौ सूर्यभौमौ लग्नाद्दशमभावगतौ बलिनौ भवतः। पश्चिमायां भास्करस्यापत्यं पुमान्भास्करिः शनिः लग्नात्सप्तमस्थो बली भवति। उत्तरस्यां शशाङ्कसितौ चन्द्रशुक्रौ लग्नाच्चतुर्थभावगतौ बलिनौ भवतः। स्फुटमुक्तं जातकपारिजाते—

विलग्नपातालवधूनभोगा बुधामरेज्यौ भृगुसूनुचन्द्रौ।
मन्दो धरासूनुदिवाकरौ चेत्क्रमेण तं दिग्बलशालिनः स्युः ॥इति॥

मकरादिराशिषट्कगत उदगयनस्थो भवति। एवं कर्कटादिराशिषट्के वर्तमानो दक्षिणायनगतो भवति। तत्रोदगयने सौम्यायने शशिसूर्यौ बलिनौ भवतः। स्फुटगत्या प्रतीपगतयो वक्रिणः कथ्यन्ते। अन्ये भौमादयो वक्रे वक्रगतौ बलिनो भवन्ति। स्निग्धा आकाशे स्फुटं दृश्यमाना विपुला युद्धे बृहत्प्रमाणा बलिनो भवन्ति। केनचिच्चेष्टाबलमुक्तम्—वक्रोरणे चोत्तरगो विधत्ते चेष्टाबलं चन्द्रसमागमोपि। इति। सारावल्याम् फलमुक्तम्—

आशाबलसमुपेतो नयति स्वदिशं नभश्चरः पुरुषम्।
नीत्वा वस्त्रविभूषणवाहनसौख्यान्वितं कुरुते ॥
क्वचिद्राज्यं क्वचित्पूजां क्वचिद्द्रव्यं क्वचिद्यशः।
ददाति विहगश्चित्रं चेष्टावीर्यसमन्वितः ॥ इति ॥ ॥ ८ ॥

बृहस्पति और बुध पूर्व में अर्थात् लग्न में स्थित हो तो बली होते हैं। सूर्य और मङ्गल दक्षिण ( दशम ) में शनि पश्चिमदिशा ( सप्तम भाव )में चन्द्रमा और शुक्र उत्तर अर्थात् चतुर्थ स्थान में बली होते हैं। मकर से मिथुन तक को उत्तरायण और कर्क से धनु तक की दक्षिणायन संज्ञा है। उत्तरायण में सूर्य और चन्द्रमा बली होते हैं। अन्य अर्थात् मङ्गल, बुध बृहस्पति, शुक्र और शनि ये पाँच ग्रह वक्र गति होने पर बली होते हैं। स्निग्ध अर्थात् दृश्य (उदय)[1] और आकाश में बड़े दिखाई देने वाले बृहत् किरणवाले चमकीले ग्रह बली होते हैं। इसको चेष्टा बल कहते हैं॥ ८॥

ग्रहाणां कालबलम्।

**अहनि सितार्कसुरेज्या द्युनिशं ज्ञो नक्तमिन्दुकुजसौराः।**
**स्वदिनादिष्वशुभशुभा बहुलोत्तरपक्षयोर्बलिनः ॥९॥**

भट्टोत्पलः—कालबलमाह। अहनि दिवसे शुक्रादित्यजीवा बलिनः। ज्ञो बुधः द्युनिशं अहोरात्रं बली। नक्तं रात्रौ चन्द्राङ्गारकशनैश्चरा बलिनः। स्वदिनादिष्विति स्वदिवसे सर्वे ग्रहा बलिनो भवन्ति। आदिग्रहणात् स्वाब्दे स्वमासे स्वकाल होरायां च। अशुभशुभा इति। अशुभाः पापाः बहुलपक्षे कृष्णपक्षे बलिनः शुभाः सौम्याः शुक्लपक्षे बलिनः ॥९॥

वि०प्र०—अधुना कालबलमाह—**अहनीति**। सितःशुक्रः,अर्कःसूर्यः, सुराणामिज्यः पूज्यः गुरुः एते अहनि दिवसे बलिनो भवन्ति। ज्ञो बुधः द्युनिशं अहर्निशं सदेत्यर्थः बलीभवति। इन्दुश्चन्द्रः, कुजो भौमः, सौरः शनिः एते नक्तं रात्रौ बलिनो भवन्ति। स्वदिनादिषु स्वदिनस्वमासस्वकालस्वहोरादिषु सर्वे ग्रहा बलिष्ठा भवन्ति। बहुलोत्तरपक्षयोः कृष्णशुक्लपक्षयोः अशुभशुभा क्रमेण बलिनः। कृष्णे पक्षे अशुभाः पापग्रहाः शुक्ले पक्षे शुभग्रहा बलिनो भवन्ति। उक्तञ्च—

निशीन्दुमन्दावनिजाः परेऽहनि स्वकीयहोरासममासवासराः।
सितादि पक्षद्वयगाः शुभाशुभा बुधः सदा कालजवीर्यशालिनः॥

---

( १ ) ग्रहों की लड़ाई में उत्तरमें स्थित ग्रह बली होता है॥

सारावल्याम् विशेषः कालबल उक्तः—

प्राग्रात्रिभागेऽतिबलः शशाङ्कः शुक्रो निशार्द्धेऽवनिजो निशान्ते।
प्रातर्बुधो मध्यदिने च सूर्यः सर्वत्र जीवोऽर्कसुतो दिनान्ते॥ इति॥९॥

शुक्र, सूर्य और बृहस्पति ये तीन ग्रह दिन में, बुध दिन और रात्रि दोनों में और चन्द्रमा, मङ्गल, शनैश्चर ये तीन ग्रह रात्रिमें बली होते हैं। अपने २ दिन में सब ग्रह बलवान् होते हैं। आदि पद से अपने २ वर्ष, मास, और काल होरा इत्यादि में सब ग्रह बली होते हैं। अशुभ (पाप) ग्रह कृष्ण पक्ष में शुभ ग्रह शुक्लपक्षमें बली होते हैं। इसको कालबल कहते हैं॥ ९॥

## ग्रहाणां नैसर्गिकबलम्।

**मन्दारसौम्यवाक्पतिसितचन्द्रार्का यथोत्तरं बलिनः।**
**नैसर्गिकबलमेतद्बलसाम्येऽस्मादधिकचिन्ता॥१०॥**

भट्टोत्पलः—नैसार्गिकबलमाह। सर्वेभ्यो ग्रहेभ्यो मन्दो हीनबलः मन्दादङ्गारको बलवान् अङ्गारकाद्बुधः बुधाज्जीवः जीवाच्छुक्रः शुक्राच्चन्द्रः चन्द्रादादित्यः एतद्ग्रहाणां नैसर्गिकं स्वाभाविकबलम्। बलसाम्येऽस्मादधिकचिन्ता। यत्र पूर्वोक्तं ग्रहयोस्तुल्यबलं भवति तत्र नैसर्गिकबलेन चाधिकबलः स ततो बलवान् भवति॥ १०॥

वि०प्र०—अथ ग्रहाणां नैसर्गिकबलमाह। **मन्देति**। मन्दः शनिः आरोभौमः सौम्यो बुधः वाचां पतिर्वाक्पतिः गुरुः, सितःशुक्रः, चन्द्रः प्रसिद्धः अर्कः सूर्यः एते यथोत्तरं बलिनो भवन्ति। सर्वेभ्यो ग्रहेभ्यो शनिर्निर्बलः। शनैश्चराद्भौमो बलवान्। भौमाद्बुधो बलवान्। बुधाद्गुरुर्बली। गुरोः शुक्रो बलवान्। शुक्राच्चन्द्रो बलवान् चन्द्रात्सूर्यो बलवान् भवति। एतन्नैसर्गिकबलं स्वाभाविकबलं ज्ञेयम्। बलसाम्ये दिग्बलादिसाम्ये

अस्मान्नैसर्गिकबलादेवाधिकचिन्ता कार्या । दिग्बलादीनां साम्ये नैसर्गिकबलयुक्त एव ग्रहो बलवान् भवतीत्यर्थः । उक्तञ्च सारावल्याम्—

कृष्णारबुधगुरुसिताः शशिसूर्यावुत्तरोत्तरं बलिनः ।
साधारणबलमेतद्बलसाम्ये चिन्तयेत्प्राज्ञः ॥ इति ॥ १० ॥

शनि सब ग्रहों के अपेक्षा निर्बल होता है । शनि के अपेक्षा मङ्गल, मङ्गल से बुध, बुध से बृहस्पति, बृहस्पति से शुक्र, शुक्र से चन्द्रमा, चन्द्रमासे सूर्य अधिक बलवान् होताहै । ये ग्रहों का नैसर्गिक (स्वाभाविक) बल है। बलसाम्यमें इसी नैसर्गिक बल से बलाधिक्य का विचार करना अर्थात्पूर्वोक्तबलानयन में यदि दो ग्रहों का बराबर बल आवे तो नैसर्गिक बल में जो ग्रह अधिक बली हो वही बलवान् होता है ॥ १० ॥

ग्रहाणां स्थानबलम् ।

## मित्रक्षेत्रे स्वोच्चे स्वहोरायां स्वभवनात्रिकोणे च ।
## स्वद्रेष्काण स्वांशे स्वदिने च बलान्विताः सर्वे ॥११॥

भट्टोत्पलः—स्थानबलज्ञानमाह । मित्रक्षेत्रस्थो ग्रहो बलवान् भवति, स्वोच्चस्थः स्वगृहस्थः स्वत्रिकोणस्थः स्वद्रेष्काणस्थः स्वहोरास्थः स्वांशस्थः स्वदिनस्थः एतेषु स्थानेषु स्थितो ग्रहो बलवान् भवति ॥११॥

वि०प्र०—अथ ग्रहाणां स्थानबलमाह । **मित्रक्षेत्र इति** । मित्रक्षेत्रे स्वमित्रराशिगतो ग्रहो बलवान् भवति । स्वोच्चे स्वोच्चराशौ गतो ग्रहो बलयुक्तो भवति । स्वहोरायां स्थितो ग्रहः स्वभवने स्वराशौगतः स्वत्रिकोणगतः स्वद्रेष्काणगतः स्वनवमांशगतो ग्रहो बलवान् भवति । स्वस्वदिने च सर्वे ग्रहा बलिनो भवन्ति । स्वोच्चादिराशिगतानां ग्रहाणां फलमुक्तम् सारावल्याम्—

उच्चबलेन समेतः परां विभूतिं ग्रहः प्रसाधयति ।
पुंसामथ साचिव्यं त्रिकोणबलवान् बलपतित्वम् ॥

स्वर्क्षे बलेन सहितः प्रमुदितधनधान्यसम्पदाक्रान्तम् ।
मित्रबलेन च युक्तो जनयति कीर्त्यान्वितं पुरुषम् ॥
तेजस्विनमतिसुभगं सुस्थिरविभवं नृपाच्च लब्धधनम् ।
निजहोराबलयुक्तो जनयति विक्रान्तमति चिन्त्यम् ॥
स्वद्रेष्काणबलेनोपेतो गुणभाजनं ग्रहः कुरुते ।
स्वनवांशकबलयुक्तः करोति पुरुषं प्रसिद्धं च ॥ इति ॥ ११ ॥

अपने मित्र के घर में, अपने उच्च राशि में, अपने होरा में, अपनी राशि में,अपने मूलत्रिकोण में, अपने द्रेष्काण में अपने नवमांश में अपने दिनमें सब ग्रह बली होते हैं ॥ ११ ॥

दृष्टिविचारः ।

**पूर्णम्पश्यति रविजस्तृतीयदशमे त्रिकोणमपि जीवः।**
**चतुरस्रं भूमिसुतः सितार्कबुधहिमकराः कलत्रं च॥१२॥**

भट्टोत्पलः—स्पष्टार्थः ॥१२॥

वि०प्र०--अथ ग्रहाणां पूर्णदृष्टिमाह । पूर्णमिति । रविजः शनिः यत्र तिष्ठति तस्मात्स्थानात्तृतीयदशमे पूर्णं पश्यति । एवं जीवो गुरुः स्वाधिष्ठितस्थाना त्रिकोणं नवमपञ्चमे पूर्णं यथा तथा पश्यति । भूमिसुतः भौमो चतुरस्रं चतुर्थाष्टमे पूर्णं पश्यति । सितः शुक्रः अर्कः सूर्यः बुधः प्रसिद्धो हिमकरश्चन्द्र एते सप्तमस्थानं पूर्णं पश्यन्ति ॥१२॥

शनैश्चर अपनी स्थितराशि से तृतीय और दशम स्थान को: बृहस्पति अपनी स्थित राशि से नवम और पञ्चम स्नान को, मङ्गल अपने स्थित राशि से चतुर्थ और अष्टम भाव को और शुक्र, सूर्य बुध, चन्द्रमा ये चारो ग्रह अपनी स्थित राशि से सप्तम स्थान को पूर्ण दृष्टि से देखते हैं ॥ १२ ॥

**दशमतृतीये नवपञ्चमे चतुर्थाष्टमे कलत्रं च।**
**पश्यन्ति पादवृद्ध्या फलानि चैवं प्रयच्छन्ति ॥१३॥**

भट्टोत्पलः—दृष्टिज्ञानार्थमाह । यस्मिन् स्थाने ग्रहः स्थितः तस्माद्दशमे तृतीये च पाददृष्ट्या पश्यति, नवमे पञ्चमे चार्धदृष्ट्या पश्यति चतुर्थाष्टमे पादहीनं पश्यति, त्रिभिः पादैरित्यर्थः । कलत्रं सप्तमं सम्पूर्णदृष्ट्या पश्यति । एवं सर्वे ग्रहाः पश्यन्ति फलानि चैवं प्रयच्छन्ति । यत्र पादमेकं पश्यति तत्र पादमेकं फलं ददति । यत्र पादद्वयं पश्यति तत्र पादद्वयफलं। यत्र पादत्रयं पश्यति तत्र पादत्रयफलं । यत्र सम्पूर्णं पश्यति तत्र सम्पूर्णफलम् प्रयच्छन्ति ॥१३॥

इति श्रीभट्टोत्पलविरचितायां लघुजातकटीकायां बलाबला-
विचाराध्यायो द्वितीयः समाप्तः ॥ २ ॥

वि०प्र०--अधुनाऽन्यं ग्रहाणां दृष्टिक्रममाह-दशमतृतीय इति । ग्रहा यत्र स्थाने स्थितास्तस्मात्स्थानाद्दशमस्थाने तृतीयस्थाने च पाददृष्ट्या पश्यन्ति अवलोकयन्ति । नवमे पञ्चमे च द्विपाददृष्ट्या पश्यन्ति । चतुर्थेऽष्टमे च त्रिपाददृष्ट्या पश्यन्ति । कलत्रे सप्तमस्थाने सम्पूर्णदृष्ट्या पश्यन्ति । एवं फलानि च प्रयच्छन्ति । यदेकपददृष्ट्यावलोकयन्ति तदा चतुर्थांशं फलं ददति । यदा द्विपाददृष्ट्या पश्यन्ति तदार्द्धं फलं ददति । एवं यदा त्रिपाददृष्ट्यावलोकयन्ति तदा पादोनं फलं ददति । यत्र पूर्णदृशा पश्यन्ति तदा पूर्णफलं ददति । उक्तञ्च –

सम्पश्यन्ति स्थानात्सदा ग्रहाश्चरणवृद्धितः सर्वे ।
त्रिदशत्रिकोणचतुरस्रसप्तमानां फलं क्रमेणैव ॥

दृष्टि विशेषे पूर्वाचार्यैर्युक्तिः कल्पिता । तद्यथा – लोके दृश्यते यत्पराक्रमे राज्ये च सामान्येन दृष्टिर्भवति लोकस्य तेन ग्रहा अपि पराक्रमं तृतीयं राज्यं दशमं सामान्यतोऽर्थादेकचरणदृष्ट्यावलोकयन्ति । तदपेक्षया विद्यास्थानं ( पञ्चमं ) धर्मस्थानं ( नवमं ) च चरणद्वयदृष्ट्यावलोकयन्ति । ततोप्यधिका दृष्टिः सुखमृत्य्वोरुपरि भवति

लोकानामतो ग्रहा अपि सुखं [ चतुर्थभावं ] मृत्युस्थानं [ अष्टमं ] च पादत्रयदृष्ट्या पश्यन्ति । कलत्रोपरि सर्वेषां सर्वथा सर्वदा दृष्टिर्भवति तस्मादूग्रहाणामपि कलत्र [ सप्तम ] भावोपरि पूर्ण दृष्टः सिद्ध्यतीति । राजा रविः शशधरश्च नेता बुध कुमारो इत्यादिप्रमाणेन ग्रहेषु रविजो भृत्यः, भृत्यस्य राज्यपराक्रमरक्षणमावश्यकमतः शनेः राज्यपराक्रमयोः [ तृतीयदशमयोः ] उपरि पूर्णा दृष्टिः भवति । एवं नेतुर्भौमस्य मृत्युसुखयोःरक्षणस्यावकत्वान्मृत्युसुखभावयोरुपरि पूर्णा दृष्टिर्भवति विद्याधर्मरक्षणं मन्त्रिण आवश्यकं कर्म तेन मन्त्रिणः गुरोर्विद्याधर्मभावयोरुपरि पूर्णा दृष्टिरुचितैवेति सर्वंयुक्तियुक्तमेव ॥ १३ ॥

इत्याजमगढमण्डलार्गतब्रह्मपुरग्रामाभिजनप० श्रीधर्मदत्तद्विवेदिसुनु ज्यौ० आ०
विन्ध्येश्वरीप्रसादद्विवेदिकृतायां लघुजातकस्य बालबोधिनीटीकायां
ग्रहबलाबलविचाराध्यायो द्वितीयः समाप्तः ॥ २ ॥

ग्रह जिस स्थान में रहते हैं वहाँ से दशम और तृतीय भाव को एक चरण की दृष्टि से, नवम और पञ्चम स्थान को २ चरण की दृष्टि से, चतुर्थ और अष्टम गृह को तीन चरण की दृष्टि से, सप्तम स्थान को पूर्ण दृष्टि से देखते हैं। और इसी क्रम से फल भी देते हैं। अर्थात् यदि ग्रह एक चरण की दृष्टिसे देखते हैं तो चतुर्थांश फल देते हैं, दो चरण की दृष्टि से देखने पर आधा फल देते हैं, तीन चरण की दृष्टि से देखते हों तो पादोन फल देते हैं एवं पूर्ण दृष्टि से देखते हों तो पूर्णफल देते हैं ॥ १३ ॥

इति विन्ध्येश्वरीप्रसादद्विवेदिकृतायां लघुजातकस्य
हिन्दीटीकायां द्वितीयोऽध्यायः समाप्तः ॥ २ ॥



# मित्रामित्रप्रकरणम् ।



### यवनोक्तनिसर्गमैत्री ।

**मित्राण्यर्काज्जीवो ज्ञगुरू ज्ञसितौ विभास्करा विकुजाः ।**
**वीन्द्वर्का विकुजरवीन्दवश्च केषांचिदरयोऽन्ये ॥१॥**

भट्टोत्पलः—अथ मित्रप्रकरणमारभ्यते ॥ तत्रादौ परमतेन मित्रामित्राण्याह । अर्कात् प्रभृति मित्राणि तत्रादित्यस्य जीवो मित्रं शेषाः शत्रवः, चन्द्रस्य बुधजीवौ मित्रे शेषाः शत्रवः, कुजस्य बुधशुक्रौ मित्रे शेषाः शत्रवः, बुधस्य विगतार्काः सर्वे मित्राणि रविः शत्रुः, जीवस्य विगतकुजाः सर्वे मित्राणि कुजःशत्रुः, शुक्रस्य विगत-चन्द्रार्काःसर्वे मित्राणि चन्द्रार्कौ तस्य शत्रू, शनैश्चरस्य विगतांगारक-सूर्यचन्द्राः सर्वे मित्राणि चन्द्रार्कभौमास्तस्य शत्रवः एतत्केषां चिदाचार्याणां मतम् ॥ १ ॥

वि० प्र०—अथ मित्रामित्रप्रकरणमारभते । तत्र तावद्यवनेश्वर-मतेन मित्रशत्रूनाह । **मित्राणीति** । अर्कात् सूर्यात्प्रभृति जीवादयो मित्राणि भवन्ति । तद्यथा—सूर्यस्य जीवो बृहस्पतिर्मित्रं अन्ये चन्द्रभौम-बुधशुक्रशनयः शत्रवो भवन्ति। चन्द्रमसः ज्ञगुरू बुधबृहस्पती मित्रे, शेषाः सूर्यभौमशुक्रशनयः शत्रवः । भौमस्य ज्ञसितौ बुधशुक्रौ मित्रे, शेषा सूर्यचन्द्रगुरुशयनः शत्रवः । बुधस्य विभास्करा विगतो भास्करो येभ्यस्ते भास्कररहिताः सर्वे ग्रहाः चन्द्रभौमगुरुशुक्रशनयः मित्राणि, सूर्यः शत्रुर्भवति । बृहस्पतेः विकुजाः कुजरहिता सर्वे ग्रहाः सूर्यचन्द्रबुध-शुक्रशनैश्चरा मित्राणि भौमः शत्रुः । शुक्रस्य वीन्द्वर्का इन्द्वर्काभ्यां चन्द्रभास्कराभ्यां रहिताः सर्वे ग्रहा भौमबुधगुरुशनयो मित्राणि, रवीन्दू शत्रू । शनेः रविचन्द्रभौमरहिता सर्वे ग्रहा, बुधगुरुशुक्रा मित्राणि ।

रविचन्द्रभौमा शत्रवोः भवन्ति । एतत्केषाञ्चिद्यवनेश्वराणां मतं नास्माक-मित्यर्थः । यवनेश्वरवचनम् ।

'रवेर्गुरुर्मित्रमतोऽन्यथान्ये गुरोस्तु भौमं परिहृत्य सर्वे ।
चन्द्रेरनर्का भृगुनन्दनस्य स्वर्केन्दुवर्जं सुहृदः प्रदिष्टाः ॥
भौमस्य शुक्रः शशिजश्च मित्रे इन्दोर्बुधो देवगुरुश्च विद्यात् ।
सौरस्य मित्राण्यकुजेन्दुसूर्याःशेषान् रिपून्विद्धि नृणां च तद्वदिति॥१॥

सूर्यादिक ग्रहों के क्रमसे ये ग्रह मित्र होते हैं। जैसे सूर्य का बृहस्पति, चन्द्रमा के बुध और बृहस्पति, मङ्गल के बुध और शुक्र, बुध के सूर्य को छोड़ कर शेष सब ग्रह ( चन्द्रमा, मङ्गल, बृहस्पति शुक्र और शनि ), बृहस्पति के मङ्गल को छोड़ कर शेष सब ग्रह (सूर्य,चन्द्र,बुध, शुक्र, शनि), शुक्र के चन्द्रमा और सूर्य के अतिरिक्त शेष ग्रह ( मङ्गल, बुध बृहस्पति, शनि ), शनि के सूर्य, चन्द्रमा और मङ्गलके अतिरिक्त शेष ग्रह(बुध, बृहस्पति, शुक्र)मित्र होतेहैं। इनके अतिरिक्त और(अन्य)ग्रह शत्रु होतेहैं। यह यवनाचार्यका मतहै ॥१॥

| यवनोक्तनैसर्गिकमैत्री । | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | बृ. | शु. | श. | ग्रहाः |
| बृ. | बु. बृ. | बु. शु. | चं. मं. बृ.शु.श. | सू.चं.बु. शु. श. | मं. बु. बृ. श. | बु.बृ. शु. | मित्रा० |
| चं.मं.बु. शु. श. | सू. मं. शु. श. | सू. चं. बृ. श. | सू. | मं. | सू. चं. | सू. चं. मं. | शत्रवः |

## सत्योक्तमैत्री ।

शत्रू मन्दासितौ समश्च शशिजो मित्राणि शेषा रवे-
स्तीक्ष्णांशुर्हिमरश्मिजश्चसुहृदौ शेषाः समाः शीतगोः।
जीवेन्दूष्णकराःकुजस्य सुहृदो ज्ञोऽरिः सितार्कौ समौ
मित्रे सूर्यसितौ बुधस्य हिमगुः शत्रुः समाश्चापरे॥२॥

सूरेः सौम्यसितावरी रविसुतो मध्योऽपरे त्वन्यथा
सौम्यार्की सुहृदौ समौ बुधगुरू शुक्रस्य शेषावरी।
शुक्रज्ञौ सुहृदौ समः सुरगुरुः सौरस्य चान्येऽरय-
स्तत्काले च दशाऽयबन्धुसहजस्वाऽन्त्येषु मित्रं स्थिताः ३

भट्टोत्पलः—अथ सत्यमतमंगीकुर्वन् मित्रादिविभागं सर्वग्रहाणां तात्कालिकं मित्रामित्रं चाह। रवेर्मन्दसितौ शत्रू, बुधः समः, शेषा ग्रहाः चन्द्राङ्गारकजीवाः रवेर्मित्राणि एवमादित्यस्य। अथ चन्द्रस्य तीक्ष्णांशुरित्यादि। शीतगोश्चन्द्रस्यार्कबुधौ मित्रे, शेषा भौमजीवशुक्रसौरा अस्य समाः मध्यस्था इत्यर्थः। एवं चन्द्रस्य। अथाङ्गारकस्य जीवेन्दूष्णकरा इति कुजस्य भौमस्य जीवेन्दूष्णकरा गुरुचन्द्रसूर्या मित्राणि, ज्ञो बुधः शत्रुः, सितार्की शुक्रमन्दौ समौ मध्यस्थौ। एवमंगारकस्य। अथ बुधस्य मित्रे सूर्यसिताविति। बुधस्यादित्यशुक्रौ मित्रे, हिमगुश्चन्द्रः शत्रुः, समाश्चापरे भौमजीवशनैश्चराः बुधस्य समा मध्यस्थाः एवं बुधस्य ॥ २ ॥ अथ गुरोः सूरेरिति। सूरेर्बृहस्पतेः सौम्यसितौ बुधशुक्रौ शत्रू, रविसुतः शनैश्चरो मध्यस्थः, अपरे तु मित्राणि चन्द्रांगारकार्का गुरोर्मित्राणि एवं जीवस्य। अथ शुक्रस्य सौम्यार्कीति शुक्रस्य बुधसौरी मित्रे समौ कुजगुरू भौमजीवौ मध्यस्थौ, शेषावर्कचन्द्रावरी एवं शुक्रस्य। अथ सौरस्य। शुक्रज्ञाविति शनेः शुक्रबुधौ मित्रे जीवः समः अन्ये चन्द्रार्कभौमा अरयः। एवं सौरस्य। नैसर्गिकमित्रामित्रविभागमुक्त्वा तात्कालिकमाह। तत्काले चेति। इष्टकाले यस्मिन्स्थाने ग्रहः स्थितस्तस्माद्दशमस्थाने एकादशे चतुर्थे तृतीये द्वितीये अन्ते द्वादशे यो ग्रहस्थितः स तात्कालिकमित्रं भवति ॥ ३ ॥

वि० प्र०—अथ सत्याचार्यमतं स्वीकुर्वन् सर्वेषां ग्रहाणां नैसर्गिकमित्रादिविभागवर्णनपूर्वकं तात्कालिकमित्रशत्रुविभागमाह—शत्र्विति।

रवेःसूर्यस्य मन्दः शनिः सितः शुक्र एतौ द्वौ शत्रू, शशिज्ञो बुधः समः न शत्रुर्न मित्रमुदासीन इत्यर्थः, शेषाश्चन्द्रभौमगुरवो मित्राणि। शीता गावो रश्मयो यस्य स शीतगुश्चन्द्रस्तस्य, तीक्ष्णा शुः सूर्यःहिमरश्मिज्ञो बुध एतौ द्वौ सुहृदौ मित्रे, शेषा भौमबृहस्पतिशुक्रशनैश्चराः समा उदासीनाः, चन्द्रमसः कोपि शत्रुर्नास्ति। कुजस्य भौमस्य जीवो बृहस्पतिः इन्दुश्चन्द्रः उष्णाकरः सूर्य एते त्रयो ग्रहा सुहृदो मित्राणि, ज्ञो बुधोऽरिः शत्रुः, सितः शुक्रः आर्किः शनिरेतौ समावुदासीनौ । बुधस्य सूर्यसितौ आदित्यशुक्रौ मित्रे सुहृदौ,हिमगुश्चन्द्रः शत्रुः, अपरे ग्रहाः भौमबृहस्पति-शनैश्चराः समा मध्यस्थाः। सूरे बृहस्पतेः सौम्यो बुधः सितः शुक्रः एतौ द्वौ अरी शत्रू, रविसुतः शनिः मध्यः उदासीनः, अपरे ग्रहाः सूर्यचन्द्र-भौमा अन्यथा मित्राणि। शुक्रस्य सौम्यो बुधः आर्किः शनिः एतौ द्वौ सुहृदौ मित्रे, कुजः भौमः गुरुर्बृहस्पतिः एतौ द्वौ समौ मध्यस्थावुदा सीनौ, शेषौ सूर्याचन्द्रमसौ अरी शत्रू। सौरेः शनैश्चरस्य शुक्रः प्रसिद्धः ज्ञो बुधः एतौ द्वौ सुहृदौ मित्रे, सुरगुरुर्बृहस्पतिः समो मध्यस्थ उदा-सीनः, अन्ये सूर्यचन्द्रभौमाः अरयः शत्रवः। यदाह कश्यपः—

रवेः समो ज्ञो मित्राणि चन्द्रारेज्याः परावरी ।<br>
इन्दोर्न शत्रवो मित्रे रविज्ञावितरे समाः ॥<br>
समौ कुजस्य शुक्रार्कौ बुधोरिः सुहृदः परे ।<br>
ज्ञस्य चन्द्रो रिपुर्मित्रे शुक्रार्कावितरे समाः ॥<br>
गुरोरारेन्दुजा मित्राण्यार्किः मध्यः परावरी ।<br>
भृगोः समाविज्यकुजौ मित्रे ज्ञार्कौ परौ रिपू ॥<br>
शनेर्गुरुः समो मित्रे शुक्रज्ञौ शत्रवः परे ॥ इति ॥

**तत्काले चेति ।** तत्काले ग्रहस्थित्यवलोकनसमये यस्मिन्स्थाने ग्रहः स्थितस्तत्स्थानाद्दश दशमस्थानं आय एकादस्थानं बन्धुश्चतुर्थस्थानं सहजं तृतीयस्थानं स्वं द्वितीयस्थानं अन्त्यं द्वादशस्थानं एषु स्थानेषु

स्थिता ग्रहास्तत्कालिकमित्राणि भवन्ति । अन्येषु स्थानेषु एकपञ्चषष्ठसप्तमाष्टमनवमेषु स्थिता ग्रहास्तत्कालशत्रवो भवन्तीत्यर्थादेव ज्ञायते । उक्तञ्च कल्याणवर्मणा—

व्ययाम्बुधनखायेषु तृतीये सुहृदः स्थिताः ।
तत्कालरिपवः षष्ठसप्ताष्टैकत्रिकोणगाः ॥ इति ॥ ३ ॥

सूर्य के शनि-शुक्र शत्रु, बुध सम, शेष ( चन्द्रमा, मङ्गल, बृहस्पति ) मित्र होते हैं। चन्द्रमा के सूर्य और बुध मित्र, शेष ( मङ्गल, बृहस्पति, शुक्र, शनि ) सम होते हैं ( चन्द्रमा का कोई शत्रु नहीं हैं )। मङ्गल के सूर्य, चन्द्रमा, बृहस्पति मित्र, बुध शत्रु, शुक्र–शनि सम है। बुध के सूर्य और शुक्र मित्र, चन्द्रमा शत्रु और शेष (मङ्गल, बृहस्पति, शनि ) सम हैं। बृहस्पति के बुध, शुक्र शत्रु, शनि मध्य ( सम ) और अन्य ग्रह ( सूर्य, चन्द्रमा, मङ्गल ) मित्र हैं। शुक्र के बुध-शनि मित्र, मङ्गल, बृहस्पति सम और शेष ( सूर्य-चन्द्रमा ) शत्रु हैं। शनि के बुध-शुक्र मित्र, बृहस्पति सम, शेष ( सूर्य, चन्द्रमा, मंगल शत्रु हैं। तत्काल में ग्रह जहाँ रहता है वहाँ से दशवें, एग्यारहवें, चौथे, तीसरे, दूसरे, बारहवें स्थानमें स्थित ग्रह तात्कालिक मित्र होता है। शेष ( १।५।६।७।८।९ इन ) स्थानों में और मूलत्रिकोण में बैठा हुआ ग्रह तात्कालिक शत्रु होता है ॥ २–३ ॥

नैसर्गिकमैत्रीचक्रम् ।

| र. | चं. | मं. | बु. | बृ. | शु. | श. | ग्र. |
|---|---|---|---|---|---|---|---|
| चं मं बृ. | र. बु. | र. चं. बृ. | र. रा. शु. | र. चं. मं. | बु. श. रा. | बु. शु. रा. | मित्रम् |
| बु. | मं. बृ. शु. श. | शु. रा. श. | मं. बृ. श. | श. रा. | मं. बृ. | बृ. | समः |
| शु. रा. श. | ० | बु. | चं. | बु. शु. | र. चं. | र. चं. मं. | शत्रुः |

**मित्रमुदासीनोऽरिर्व्याख्याता ये निसर्गभावेन ।**
**तेऽधिसुहृन्मित्रसमास्तत्कालमुपस्थिताश्चिन्त्याः ॥४॥**

**भट्टोत्पलः**—मित्रस्थानानां प्रयोजनमाह । दर्शितेषु मित्रस्थानेषु दशादिकेषु मित्रमवस्थितमधिमित्रं भवति, मध्यमस्थं मित्रं भवति, शत्रुर्व्यवस्थितो मध्यस्थो भवति, अर्थादेव मित्रस्थानव्यतिरिक्तानि स्थानानि शत्रुस्थानानि भवन्ति। तानि च प्रथमपञ्चाष्टषट्सप्तमनवमानि तेषु स्थानेषु ग्रहस्य नैसर्गिकः शत्रुर्व्यवस्थितोऽधिशत्रुर्भवति । मध्यस्थो व्यवस्थितः शत्रुर्भवति मित्रममवस्थितः समो भवति ॥ ४ ॥

वि०प्र०—अधुना तात्कालिकाधिमित्रादिपञ्चविधमैत्रीविभागप्रकारामाह । **मित्रमुदासीन इति ।** निसर्गभावेन येग्रहा मित्रं सुहृदुदासीनः समःमध्यस्थइति यावत् अरिःशत्रु र्निव्याख्याताःकथितास्ते पूर्वकथितस्थानेषुपस्थिताः सन्तः अधिसुहृदः अधिमित्राणि मित्राणि समाश्चिन्त्याः विचारणीयाः।तद्यथा । ये ग्रहा नैसर्गिकमित्राणि त एव तत्काले दशाय बन्धुसहजस्वान्त्येषु स्थानेषु स्थिता अधिमित्राणि भवन्ति । नैसर्गिकसमा ग्रहा तत्कालमित्राणि चेत्तदा तत्कालमित्राणि । नैसर्गिकशत्रवस्तत्कालमित्राणि चेत्तदा तत्कालसमा भवन्ति । एवं नैसर्गिकमित्राणि ग्रहास्तत्कालशत्रवस्तदा तत्कालसमा भवन्ति, नैसर्गिकसमास्तत्कालशत्रवस्तदा ते तत्कालशत्रवः । नैसर्गिकशत्रवस्तत्कालेपि शत्रवस्तदा तात्कालाधिशत्रवो भवन्ति । उक्तञ्च सारावल्याम्——

हितसमरिपुसंज्ञा ये निसर्गान्निरुक्ता
हिततमहितमध्यास्तेऽपि तत्कालमित्रैः ।
रिपुसमसुहृदाख्या सूतिकाले ग्रहेन्द्राः
अधिरिपुरिपुमध्या शत्रुभिश्चिन्तनीयाः ॥ इति ॥ ४ ॥

जो नैसर्गिक मित्र, सम, शत्रु कहे हैं वें तात्कालिक मित्र और शत्रु के सम्बन्ध से अधिमित्र, मित्र, सम, शत्रु, अधिशत्रु ये पाँच प्रकार के होते हैं। नैसर्गिक मित्र तत्काल में भी मित्र हो तो तात्कालिक अधिमित्र होता है। नैसर्गिक मध्य तत्काल में मित्र हो तो तात्कालिक मित्र, नैसर्गिक शत्रु तत्काल में मित्र हो तो तात्कालिकसम होता है। एवं नैसर्गिक मित्र तत्काल में शत्रु हो तो तात्कालिक सम, नैसर्गिक सम तत्काल में शत्रु हो तो शत्रु और नैसर्गिकशत्रु तत्काल में शत्रु हो तो तात्कालिक अधिशत्रु होता है॥ ४॥

| | तात्कालिक- | | |
|---|---|---|---|
| | ० | मित्राणि | शत्रवः |
| नैसर्गिक- | मित्राणि | अधिमित्राणि | समाः |
| | समाः | मित्राणि | शत्रवः |
| | शत्रवः | समाः | अधिशत्रवः |

मूलत्रिकोणषष्ठत्रिकोणनिधनैकराशिसप्तमगाः ।
एकैकस्य यथा सम्भवन्ति तात्कालिका रिपवः ॥५॥

इति वराहमिहिर कृते लघुजातके मित्र प्रकरणं
नाम तृतीयोऽध्यायः ॥ ३ ॥

भट्टोत्पलः—मूलत्रिकोणेति । अर्कादीनां मूलत्रिकोणानि 'सिंहवृषाजप्रमदाकार्मुकभृत्तौलिकुम्भधराः' इति । षष्ठं त्रिकोणं नवपञ्चमं निधनमष्टमं एकराशिः सप्तमएषुस्थानेषु स्थितास्तात्कालिका रिपवो भवन्ति ॥५॥

इतिश्रीभट्टोत्पलविराचितायांलघुजातकटीकायां मित्रामित्र
प्रकरणाध्यायस्तृतीयः समाप्तः ॥३॥

वि० प्र०--इतःपरं क्वचित्पुस्तकेऽयं श्लोकोऽधिको दृश्यते-**मूल त्रिकोणेति**। मूलत्रिकोणराशिगताः, मूलत्रिकोणराशयः सिंहवृषाजप्रमदेत्याद्याचार्येण प्रथममेवोक्ताः। षष्ठं प्रसिद्धं त्रिकोणं नवमञ्चमे निधनमष्टमं एकराशिः प्रसिद्धः सप्तमं प्रसिद्धं एषु स्थानेषु गता ग्रहास्तात्कालिकाः शत्रवो भवन्ति ॥ ५ ॥

इत्याजमगढ़मण्डलान्तर्गतब्रह्मपुरग्रामाभिजनप० श्रीधर्मदत्त-
द्विवेदिसूनु ज्यौ० आ० विन्ध्येश्वरीप्रसादद्विवेदिकृतायां
लघुजातकस्य बालबोधिनीटीकायां ग्रहाणां मित्रामित्र-
विचाराध्यायस्तृतीयः समाप्तः ॥ ३ ॥

ग्रह जहाँ स्थित रहता है वहाँ से उसके मूल त्रिकोण, षष्ठ, नवम, पञ्चम, अष्टम, एक स्थान, सप्तम भाव में गत ग्रह तात्कालिक शत्रु होता है। ( यह प्रक्षिप्त श्लोक है ) ॥ ५ ॥

इति श्रीविन्ध्येश्वरीप्रसादद्विवेदिकृतायां लघुजातकस्य
हिन्दीटीकायां तृतीयोऽध्यायः समाप्तः ॥ ३ ॥



# अथ ग्रहयोनिप्रभेदाध्यायः ।



## सूर्यस्वरूपम् ।

**चतुरस्रो नात्युच्चस्तनुकेशः पैत्तिकोऽस्थिसारश्च ।**
**शूरो मधुपिंगाक्षो रक्तश्यामः पृथुश्चार्कः ॥ १ ॥**

भट्टोत्पलः—अथ ग्रहाणां स्वरूपमाह । चतुरस्रो न्यग्रोधमण्डलाकारः यावदेव प्रसारितभुजद्वयस्य विस्तीर्णत्वं तावदेवास्य दैर्घ्यम्, नात्युच्चः किञ्चिदुच्च एव, तनुकेशी विरलकेशः, पैत्तिकः पित्तप्रकृतिः, अस्थिसारो दृढास्थिः, शूरः सङ्ग्रामप्रियः, मधुपिंगाक्षः ईषत्पिंगललोचनः, रक्तश्यामो लोहितश्यामः रक्तश्चासौ श्यामश्च, पृथुर्विस्तीर्णशरीरः एवंविधोऽर्कः ॥ १ ॥

वि०प्र०—अथ ग्रहाणां स्वरूपमाह-तत्रादौ सूर्यस्य । **चतुरस्र इति।** चतुरस्र चतुरस्रशरीरः यावत्प्रसारितभुजद्वयस्य विस्तारस्तावदेव दैर्घ्यं यस्य स चतुरस्रः कथ्यते । नात्युच्च ईषदुच्चशरीरः । तनुकेशः विरलबालः । 'चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः' इत्यमरः । पैत्तिकः पित्तप्रकृतिः पित्ताधिक इति यावत् । अस्थिसारः दृढकीकसः । 'कीकसं कुल्यमस्थि च' इत्यमरः । शूरः सङ्ग्रामे वीरः, मधुपीङ्गाक्षो मधुवत्पिङ्गला दृष्टिर्यस्य स तथोक्तः, रक्तश्यामः रक्तश्याममिश्रवर्णशरीरः, पृथुः स्थूलकायः एवं विधोऽर्कः ज्ञेयः । सारावल्यां किञ्चिद्विशेष उक्तः—

स्वल्पाकुञ्चितमूर्धजः पटुमतिर्मुख्यस्वरूपस्वनो
नात्युच्चो मधुपिङ्गचारुनयनः शूरः प्रचण्डः स्थिरः ।
रक्तश्यामतनुर्निगूढचरणः पित्तास्थिसारो महान्
गम्भीरश्चतुरस्रकः पृथुकरः कौसुम्भवासा रविः ॥ इति ॥ १ ॥

सूर्य का चतुरस्र ( दोनों भुजाओं के फैलाने से जितनी लम्बाई हो उतना ही ऊंचे कदवाला ) शरीर, मध्यम कद, विरलबाल, पित्त-प्रकृति, मजबूत हड्डी, सूर, मधु के समान पिङ्गल नेत्र, रक्तश्याम वर्ण स्थूल शरीर है ॥ १ ॥

चन्द्रस्वरूपम् ।

**स्वच्छः प्राज्ञो गौरश्चपलः कफवातिको रुधिरसारश्च।**
**मृदुवाक् घृणी प्रियसखस्तनुवृत्तश्चन्द्रमाः प्रांशुः॥२॥**

**भट्टोत्पलः**—स्वच्छो दर्शनीयः, प्राज्ञो मेधावी, गौरः श्वेतप्रायः, चपलः क्रियास्ववस्थितः, कफवातिको वातश्लेष्मप्रकृतिः, रुधिरसारो रक्ताधिकः, मृदुवाक्कोमलभाषी, घृणी दयावान्, प्रियसखो मित्रप्रियः, तनुवृत्तः कृशवर्तुलांगः, प्रांशुरुच्चः एवंविधश्चन्द्रमाः ॥ २ ॥

वि०प्र०—अथ चन्द्रस्य स्वरूपमाह । स्वच्छ इति । स्वच्छो दर्शनीयकान्तिः, प्राज्ञोऽतिशयबुद्धिमान्, गौरो गौरवर्णः, चपलश्चञ्चलस्वभावः, कफवातिकः कफवातप्रकृतिः, रक्तसारो रक्तबहुलः, मृदुवाक् मधुरभाषी, घृणी कारुणिकः दयालुरिति यावत्, प्रियसखः प्रियः सखा यस्य स प्रियमित्रः । 'अथ मित्रं सखा सुहृद्' इत्यमरः । तनुवृत्तः कृशवर्तुलशरीरः, प्रांशुरुन्नतयष्टिः एवं विधश्चन्द्रमाः । सारावल्यामपि—

सौम्यः कान्तविलोचनो मधुरवाग्गौरः कृशाङ्गो युवा
प्रांशुः सूक्ष्मनिकुञ्चितासितकचः प्राज्ञो मृदुः सात्विकः ।
चारुर्वातकफात्मकः प्रियसखः रक्तैकसारो घृणी
वृद्धस्त्रीषु रतश्चलोतिसुभगः शुभ्राग्वरश्चन्द्रमाः ॥ इति ॥ २ ॥

स्वच्छ ( दर्शनीयशरीर वाला ), बुद्धिमान, गौरवर्ण चपल (चञ्चलस्वभाववाला)कफवातप्रकृतिवाला शरीरमें विशेष रुधिरवाला

कोमल वचन बोलने वाला, दयालु, प्रियमित्रोंवाला, गोलाकार शरीर वाला, लम्बाशरीरवाला ऐसा चन्द्रमा का स्वरूप है ॥ २ ॥

भौमस्वरूपम् ।

**हिंस्रो ह्रस्वस्तरुणः पिंगाक्षः पैत्तिको दुराधर्षः ।**
**चपलः सरक्तगौरो मज्जासारश्च माहेयः ॥ ३ ॥**

भट्टोत्पलः—हिंस्रो दुष्टो, ह्रस्वोऽल्पोच्छ्रायः, तरुणः सदैवतरुणाकारः, पिङ्गाक्षः कपिलनेत्रः, पैत्तिकः पित्तप्रकृतिः, दुराधर्षः दुराचारी, चपलोऽनेकमतिः, सरक्तगौरः पद्मपत्राग्रवर्णः मज्जासारः मज्जाधिकः एवंविधो माहेयोऽङ्गारकः ॥ ३ ॥

वि०प्र०--अथ भौमस्य स्वरूपमाह। हिंस्र इति। हिंस्रो घातुकः, ह्रस्वः लघूच्छ्रायः, तरुणः सर्वदायौवनोपेतः, पिङ्गाक्षः पिङ्गलनेत्रः, पैत्तिकः पित्तप्रकृतिः दुराधर्षः दुराचारपरायणः, चपलश्चञ्चलस्वभावः, सरक्तगौरः रक्तवर्णसहितगौरवर्णः पाटलवर्ण इत्यर्थः 'रक्तश्वेतस्तु पाटलः' इत्यमरः । मज्जासारो मज्जाबहुलः, मज्जाऽस्थिगतधातुः विशेषः । माहेयः महीपुत्रो भौम एतादृशः । उक्तञ्च कल्याणवर्मणा—

ह्रस्वः पिङ्गललोचनो दृढवपुर्दीप्ताग्निकान्तिश्चलो
मज्जावानरुणाम्बरः पटुतरः शूरश्च निष्पन्नवाक् ।
ह्रस्वाकुञ्चितदीप्तकेशतरुणः पित्तात्मकस्तामस-
श्चण्डः साहसिको विघातकुशलः संरक्तगौरः कुजः ॥ इति ॥ ३ ॥

हिंसा करनेवाला, छोटे कदवाला, तरुण ( जवान ), पिङ्गलवर्ण का नेत्रवाला, पित्तप्रकृतिवाला, दुराचारी, चञ्चल स्वभाववाला, रक्त और गौर वर्णवाला, शरीर में अधिक मज्जावाला ऐसा मङ्गल का स्वरूप है ॥ ३ ॥

बुधस्वरूपम् ।

मध्यमरूपः प्रियवाक् दूर्वाश्यामः शिराततो निपुणः ।
त्वक्सारस्त्रिस्थूणः सततं हृष्टस्तु चन्द्रसुतः ॥ ४ ॥

**भट्टोत्पलः**—अथ बुधस्याह । मध्यमरूपो न दर्शनीयः नाप्यदर्शनीयः, प्रियवाक् अभिमतवक्ता, दूर्वाश्यामः शाद्वलवर्णाभः, शिराततो दृश्यस्नायुः, निपुणः क्रियासु सूक्ष्मदृक्, त्वक्सारः स्थूलत्वक् त्रिस्थूणो वातपित्तकफप्रकृतिः, संततं हृष्टो नित्यं हर्षितः एवंविधो बुधः ॥ ४ ॥

वि० प्र०—अथ बुधस्वरूपम् । **मध्यमरूप इति** । मध्यमरूपः न सुन्दरो नापि कुरूपः, प्रियवाक् प्रियभाषी, दूर्वाश्यामः दूर्वासदृशश्यामवर्णः शिराततः नाडी बहुल 'नाडी तु धमनी शिरा' इत्यमरः । निपुणः क्रियासु कुशलः, त्वक्सारः स्थूलासृग्धरः 'स्त्रियां तु त्वगसृग्धरा' इत्यमरः । त्रिस्थूणो वातपित्तकफेतिप्रकृतित्रयात्मकस्वभावः, सततं निरन्तरं हृष्टः हर्षित एवं विधश्चन्द्रसुतो बुधो ज्ञेयः ।

उक्तञ्च—

दूर्वादल द्युतितनुः स्फुटवाक् कृशाङ्गः
स्वामी रजोगुणवतामति हासलोलः ।
हानिप्रियो विपुलवित्तकफानिलात्मा
सद्यः प्रतापविभवः शशिजश्च विद्वान् ॥ ४ ॥

मध्यमरूप ( न बहुत सुन्दर न बहुत कुरूप ), प्रियबात कहने वाला, दूर्वा के ऐसा श्याम वर्णवाला, नसों से व्याप्त शरीरवाला, कार्य करने में निपुण, मजबूत चमड़े वाला, वातपित्तकफ तीनों प्रकृतियुक्त, सर्वदा प्रसन्नचित्तवाला ऐसा बुध का स्वरूप है ॥ ४ ॥

गुरुस्वरूपम् ।

मधुनिभनयनो मतिमानुपचितमांसः कफात्मको गौरः ।
ईषत्पिङ्गलकेशो मेदःसारो गुरुर्दीर्घः ॥ ५ ॥

भट्टोत्पलः—बृहस्पतेराह । मधुनिभनयनः ईषत्कातरलोचनः, मतिमान् बुद्धिमान्, उपचितमांसः स्थूलदेहः, कफात्मकः श्लेष्मप्रकृतिः, गौरः श्वेतप्रायः, ईषत्पिंगलकेशः, मेदःसारो मेदोऽधिकः, अदीर्घः ह्रस्वः एवंविधो गुरुः ॥ ५ ॥

वि० प्र०—अथ बृहस्पतिस्वरूपम्-मध्विति । मधुनिभनयनः मधुवर्णसदृशनेत्रः पिङ्गलनेत्र इति, मतिमान् बुद्धिमान्, उपचित्तमांसः स्थूलशरीरः, कफात्मकः कफप्रकृतिः, गौरः गौरवर्णः, ईषत्पिङ्गलकेशः किञ्चित्पिङ्गलवर्णशिरोरुहः, मेदःसारः वसाऽधिकः 'मेदस्तुवपावसा' इत्यमरः । 'चर्बी' ति हिन्दी भाषायाम् । अदीर्घः ह्रस्वशरीरः । एवंभूतो गुरुर्बृहस्पतिः । उक्तञ्च सारावल्याम्—

ईषत्पिङ्गललोचनःश्रुतिधरः सिंहाच्छनादः स्थिरः
सत्त्वाढ्यः सुविशुद्धिकाञ्चनवपुः पीनोन्नतोरस्थलः ।
ह्रस्वो धर्मरतो विनीतनिपुणो वद्धोत्कटाक्षः क्षमी
स्यात्पीताम्बरधृक्कफात्मकतनुर्मेदः प्रधानो गुरुः ॥ इति ॥ ५ ॥

मधु के समाननेत्र, बुद्धिमान्, स्थूलशरीर, कफप्रकृति, गौर वर्ण, थोड़ा पिङ्गलवर्ण का बाल, शरीरमें अधिक मेद ( चर्बी ), और नाटा कद ऐसा बृहस्पति का स्वरूप है ॥५॥

## शुक्रस्वरूपम् ।

**श्यामो विकृष्टपर्वा कुटिलासितमूर्द्धजः सुखी कान्तः ।**
**कफवातिको मधुरवाग्भृगुपुत्रः शुक्रसारश्च ॥ ६ ॥**

भट्टोत्पलः—श्यामः किंचित्कृष्णाङ्गः, विकृष्टपर्वा विरलशरीरसन्धिः, कुटिलासितमूर्द्धजः कुञ्चितकृष्णकेशः, सुखी भोगी,

कान्तो दर्शनीयः, कफवातिको वातश्लेष्मप्रकृतिः,मधुरवाक्कोमल-भाषी, शुक्रसारः शुक्राऽधिकः एवंविधः शुक्रः ॥ ६ ॥

वि० प्र०—अथ शुक्रस्वरूपम्—**श्याम इति** । श्यामः श्यामवर्णः विकृष्टपर्वा विरलशरीरसन्धिःकुटिलासितमूर्धजःकुटिला वक्रा असिता कृष्णा मूर्धजा केशा यस्य स तथोक्तः, सुखी सततं सुखाशक्तः, कान्तो मनोरमो दर्शनीय इति यावत । कफवातिकः कफमारुतप्रकृतिः,मधुरवाक् मृदुभाषी, शुक्रसारःशुक्राधिकः,एवं भूतो भृगुपुत्रः शुक्रः । एवं कल्याणवर्माप्याह—

चारुर्दीर्घभुजः पृथूरुवदनः शुक्राधिकः कान्तिमान्
कृष्णाकुञ्चितसूक्ष्मलम्बिचिकुरो दूर्वादलश्यामलः ।
कामी वातकफात्मकोऽति सुभगश्चित्राम्बरो राजसो
लीलावान्मतिमान्विशालनयनः स्थूलांसदेशः सितः॥ इति ॥ ६ ॥

श्यामवर्ण, विरल शरीर की सन्धियों वाला, काले घुघुराले बाल वाला, सुखी, मनोहर कान्तिवाला कफ और वात प्रकृतिवाला,मधुर भाषी अधिक शुक्र ( वीर्य ) वाला ऐसा शुक्र का स्वरूप है ॥ ६ ॥

## शनिस्वरूपम् ।

**कृशदीर्घः पिंगाक्षः कृष्णः पिशुनोऽलसोऽनिलप्रकृतिः ।**
**स्थूलनखदन्तरोमा शनैश्चरोस्नायुसारश्च ॥ ७ ॥**

**भट्टोत्पलः**—अथ शनैश्चाह । कृशदीर्घो दुर्बलोन्नतः,पिंगाक्षः कापिलनेत्रः, कृष्णः प्रसिद्धःपिशुनः पररन्ध्रसूचकः, असलो मन्थर-गामी, अनिलप्रकृतिः वातात्मकः स्थूलनखदन्तरोमा स्नायुसारः एवं विधः शनैश्चरः ॥ ७ ॥

वि० प्र०—अथ शनिस्वरूपम्—कृशदीर्घ इति। कृशदीर्घो दुर्बलोन्नतगात्रः पिङ्गाक्षः पिङ्गलवर्णनेत्रः कृष्णः कृष्णवर्णः पिशुनो परच्छिद्रप्रकाशकः, अलसः दीर्घसूत्री, अनिलप्रकृतिः वातात्मकस्वभावः, स्थूलनखदन्तरोमा स्थूला नखाः करोरुहा दन्ता दशना रोमाणि यस्य स तथोक्तः स्नायुसारः स्नायुबहुल एवं विधः शनैश्चरः। उक्तञ्च—

पिङ्गो निम्नविलोचनः कृशतनुदीर्घः सिरालोऽलसः
कृष्णाङ्गः पवनात्मकोऽतिपिशुनः स्नाय्वाततो निर्घृणः।
मूर्खः स्थूलनखद्विजोऽतिमलिनो रुक्षोऽशुचिस्तामसो
रौद्रः क्रोधपरो जरापरिणतः कृष्णाम्बरो भास्करिः॥ इति ॥ ७ ॥

दुर्बल और लम्बी शरीर वाला, पिङ्गल वर्ण का नेत्र, कृष्ण वर्ण, चुगुलखोर, आलसी, वात प्रकृति प्रधान, मोटे मोटे नाखून, दाँत, रोम वाला, विशेष नसों से युक्त ऐसा शनैश्चर का स्वरूप है ॥ ७ ॥

**एते ग्रहा बलिष्ठाः प्रसूतिकाले नृणां स्वमूर्तिसमम्।**
**कुर्युर्देहं नियतं बहवश्च समागताः मिश्रम् ॥ ८ ॥**

**इति श्रीवराहमिहिरकृते लघुजातके ग्रहयोनि-प्रभेदो नाम चतुर्थोऽध्यायः ॥ ४ ॥**

**भट्टोत्पलः—स्पष्टार्थः ॥ ८ ॥**

इति श्रीभट्टोत्पलविरचितायां लघुजातकटीकायां ग्रहयोनि-प्रभेदो नाम चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

---

शुकजातके ग्रहाणामवस्थावर्षाण्युक्तानि—

'बालवयस्को भौमः कुमारवेशो बुधो गुरुस्त्रिंशत्।
शुक्रः षोडशवर्षो रविजश्च पञ्चाशदब्दश्च॥
चन्द्रः सप्ततिवर्षः शतवर्षं शनिराहुकेतूना' मिति।

वि० प्र०—अधुना ग्रहाणां स्वरूपज्ञानप्रयोजनमाह। एत इति। प्रसूतिकाले जन्मसमये एते रव्यादयो ग्रहा बलिष्ठा बलिनः सन्तः स्वमूर्तिसमं स्वस्वरूपसदृशं देहं नियतं निश्चितं कुर्युः सम्पादयेयुः। एवं चेद्बहवः समागता बहवो ग्रहा बलिनस्तदा मिश्रस्वरूपं विदध्युः ॥८॥

इत्याजमगढमण्डलान्तर्गतब्रह्मपुरग्रामाभिजन पं० श्रीधर्मदत्तद्विवेदिसूनु-ज्यौ० आ० विंध्येश्वरीप्रसादद्विवेदिविरचितायां लघुजातकस्य बालबोधिनीटीकायां ग्रहयोनिप्रभेदो नाम चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

प्रसव काल में इनग्रहों में जो ग्रह विशेष बलिष्ठ हो वह अपने रूप के सदृश बालक का स्वरूप करता है । यदि कई ग्रह बलवान् होंतो मिश्र ( कुछ उस ग्रह का कुछ उस ग्रह का मिला हुआ ) स्वरूप करते हैं ॥ ८ ॥

इति श्रीविन्ध्येश्वरीप्रसादकृतायां लघुजातकस्य
हिन्दीटीकायां चतुर्थोऽध्यायः समाप्तः ॥४॥



# अथाधानाध्यायः ५ ।

## आधाने मैथुनज्ञानम् ।

**आधानेऽस्तगृहं यत्तच्छीलो मैथुने पुमान् भवति ।
सायासमसद्युतवीक्षिते विदग्धं शुभैरस्ते ॥ १ ॥**

भट्टोत्पलः—अथाधानं व्याख्यास्यामः। तत्रादौ मैथुनकृतज्ञानमाह । आधानं बीजक्षेपः तत्र आधाने प्रश्नकाले च यो लग्नराशिस्तस्माद्यो राशिः सप्तमः तन्नामा जन्तुर्येन प्रकारेण मैथुनं करोति तेन प्रकारेण युक्तो मैथुनकारी पुमानिति वक्तव्यम् । तस्मिन्सप्तमे स्थाने पापग्रहैर्युते दृष्टे वा तन्मैथुनं सायासं श्रमयुक्तमासीत् । तस्मिन्नेव सप्तमे स्थाने शुभैर्युते दृष्टे वा विदग्धं श्रमरहितं च तन्मैथुनमासीत् । मिश्रैर्युते दृष्टे वोभयरूपं सामान्यात् । न केनचिद्युते न दृष्टे वा न सायासं नापि विदग्धमिति ॥ १ ॥

वि० प्र०—अथ निषेकाध्यायो व्याख्यायते । तत्रादौ मैथुनज्ञानप्रकारमाह । **आधान इति** । आधानं नाम स्त्रियो योनौ रेतःप्रक्षेपरूपसंस्कारविशेषः तत्राऽऽधानकाल इत्यर्थः । प्रश्नकाले वा यस्य राशेरुदयस्तस्माद्यदस्तगृहं सप्तमराशिस्तत्संज्ञको यो जीवः स येन प्रकारेण मैथुनं ( ग्राम्यधर्मं ) करोति तच्छीलो मैथुने मैथुनकाले पुमान् पुरुषो भवति अर्थात्तेनैव प्रकारेण पुमान् मैथुनं करोतीति । एतदुक्तं भवति। यदि सप्तमभवने मेषराशिस्तदा मेषवद्वृषश्चेत्तदा वृषवदित्यादि । तस्मिन्नस्ते सप्तमस्थानेऽसद्युतवीक्षितेऽसद्ग्रहैः पापग्रहैर्युते वीक्षिते दृष्टे वा तन्मैथुनं सायासं आयासेन परिश्रमेण सहितं कलहयुक्तं वाच्यम् । एवं तस्मिन्नेव सप्तमे भावे शुभैः शुभग्रहैर्युते दृष्टे वा विदग्धं परिश्रमरहितं हासविलाससीत्कारादिमैथुनाङ्गयुतं सुरतं

वाच्यम् । अर्थादेव न केनचिद्युतदृष्टे न सायासं नापि विदग्धमिति । मिश्रग्रहयुतदृष्टे आयास-विदग्धाभ्यां सहितमिति वाच्यम् । उक्तञ्च शम्भुहोराप्रकाशे—

निषेकेऽस्तराशिर्यथा मैथुने च
तथा तत्समः पूरुषो मैथुने स्यात् ।
असत्खेचरैः संयुते वीक्षितेऽस्ते
सरोषः शुभैर्हासयुक् सद्विलासैः ॥ इति ।

कदाऽयं विचारः कार्यस्तथा कीदृशेन पुरुषेण सह सङ्गो जात इत्यत्रोच्यते । ऋतुदर्शनानन्तरं सप्तमे दिवसे नारीगर्भधारणयोग्या भवति तदैव पुरुषसंगमो विचारणीयः । उक्तञ्च शम्भुहोराप्रकाशे—

स्त्रीणामृतुः षोडशकं निशानां तासां त्यजेत्सप्तकमत्र पूर्वम् ।
समे नराणां विषमेऽङ्गनानां गर्भा भवेयुः पुरुषस्य योगात् ॥

मणीत्थोऽपि—

ऋतुविरमे स्नातायां यद्युपचयसंस्थितः शशी भवति ।
बलिना गुरुणा दृष्टो भर्त्रा सह सङ्गमश्च तदा ॥

तथा च सारावल्याम्—

उपचयभवने शशभृद्दृष्टो गुरुणा सुहृद्भिरथवाऽसौ ।
पुंसां करोति योगं विशेषतः शुक्रसंदृष्टः ॥
चन्द्रे कुजेन दृष्टे पुष्पवती सह विटेन संयोगम् ।
राजपुरुषेण रविणा रविजेनाप्नोति भृत्येन ॥
एकैकेन फलं स्याद्दृष्टे नान्यैः कुजादिभिः पापैः ।
सर्वैः स्वगृहं त्यक्त्वा गच्छति वेश्यापदं युवतिः ॥ इति ॥ १ ॥

**गर्भाधान के समय अथवा प्रश्न के समय जो लग्न उदय हो उससे सप्तम भाव में गत राशि का जैसा स्वभाव हो उसके स्वभाव के तरह मनुष्य मैथुन में प्रवृत्त होता है। जैसे प्रश्नलग्न से सप्तम में मेष राशि हो तो मनुष्य मेष के सदृश मैथुन करता है। वृष हो तो वृष के सदृश मैथुन करता है इत्यादि । आधान**

अथवा प्रश्न लग्न से सप्तम राशि यदि पापग्रह से युक्त या दृष्ट हो तो मनुष्य का मैथुन प्रयास करने से ( या खेद युक्त ) हुआ है। और सप्तम राशि शुभ ग्रहों से युक्त और दृष्ट हो तो मैथुन सुख पूर्वक हाव भाव कटाक्ष युत हास विलास सीत्कार सहित हुआ ऐसा कहना ॥ १ ॥

## दीपज्ञानम् ।

**सौरांशेऽब्जांशे वा चन्द्रः सौरान्वितोऽथ हिबुके वा ।**
**शान्तो दीपो जन्मन्याधाने प्रश्नकाले वा ॥ २ ॥**

**भट्टोत्पलः**—आधानकाले जन्मकाले प्रश्नकाले वा दीपस्याभावज्ञानमाह। सौरांशे यत्र तत्र राशौ मकरकुम्भयोरन्यतरनवांशस्थे चन्द्रमसि तमस्यन्धकारे आधानं प्रसवश्च वक्तव्यः। अब्जांशे वा कर्कटमीनयोरन्यतमनवांशस्थे वा चन्द्रमसि तमस्येव । अथवा यत्र तत्रावस्थितश्चन्द्रमाःशनैश्चरयुतस्तदा तमस्येव अथवा।लग्नाचन्द्रश्चतुर्थो भवति तदाऽन्धकार एव शान्तो दीपः प्रशान्त इत्यर्थः। एतदाधानलग्नाज्जन्मलग्नात् प्रश्नलग्नाच्च विचारणीयम् । अत्र सर्वयोगेषु यद्यर्कयुक्तश्चन्द्रमा भवति तदाऽन्धकाराभावः ॥ २ ॥

वि० प्र०—अथ निषेककाले जन्मकाले वा दीपकाभावज्ञानमाह—**सौरांश इति** । [१] सौरांशे सौरस्य शनेरंशे नवमांशे मकरकुम्भयोरन्यतरनवमांशे चन्द्रः स्थितश्चेत्तदा दीपः शान्तोऽर्थादन्धकार आधानादिकं वक्तव्यमिति । [२]वाऽब्जांशे जलचरराश्यंशे कर्कट-मीनयोरन्यतरनवमांशे चन्द्रःस्थितस्तदापि दीपः शान्तः । [३] वा चन्द्रः सौरान्वितः यत्र कुत्रापि स्थितः शनैश्चरेण युतस्तदा ,दीपः शान्त एव । [४] अथवा हिबुके लग्नाच्चतुर्थभावे स्थिते चन्द्रे [ वा चतुर्थं भावे चन्द्रमसाऽवलोकिते ] दीपः शान्तोऽर्थादन्धकार एवाऽऽधानादिकं विद्यात् ।

उक्तञ्च—

सौरांशेऽथ जलांशे चन्द्रेऽर्कजसंयुतेऽथवा हिबुके।
तद्दृष्टे वा कुर्यात्तमसि प्रसवं न सन्देहः॥

परन्तु सर्वेषु योगेषु यद्यर्केण युतश्चन्द्रः स्यात्तदाऽन्धकाराभावो ज्ञेयः। यदाह यवनेश्वरः–

सौरांशकस्थे शशिनि प्रलग्ने जले जलाख्यांशकमाश्रिते वा।
स्वांशस्थिते केन्द्रगतेऽर्कजे वा जातस्तमिस्रे यदिनार्क दृष्टः॥इति॥

सारावल्यां बलिनि सूर्ये भौमेन दृष्टे सत्स्वपि सर्वयोगेष्वन्धकाराभाव उक्तः—

बलवति सूर्ये दृष्टे बहून्प्रदीपान्वदेत्कुपुत्रेण।
अन्यैरपगतवीर्यैः सूतौ ज्योतिस्तृणैरेव॥ इति॥ २॥

जन्म समय में अथवा गर्भाधान समय में वा प्रश्न कालमें यदि (१) शनि के नवमांश अर्थात् मकर या कुम्भ के नवमांश में चन्द्रमा हो ( २ ) अथवा जलचर राशि (कर्क या मीन) के नवमांश में चन्द्रमा हो ( ३ ) या चन्द्रमा किसी स्थान में स्थित होकर शनि से युक्त हो ( ४ ) अथवा चन्द्रमा ( जन्म, आधान, प्रश्न ) लग्न से चतुर्थ स्थान में स्थित हो ( इन चारों योगों में से कोई योग हो ) तो दीप शान्त रहता है। अर्थात् अन्धकार में आधान ( मैथुन ) या जन्म कहना। इन चारों योगों में यदि चन्द्रमा सूर्य से युक्त हो तो दीपक जलते रहने पर ( उजाले में ) मैथुन या जन्म कहना चाहिये॥ २॥

## सूतिकालज्ञानम्।

**उदयति मृदुभांशे सप्तमस्थे च मन्दे**
**यदि भवति निषेकः सूतिरब्दत्रयेण।**
**शशिनि तु विधिरेष द्वादशेऽब्दे प्रकुर्या-**
**न्निगदितमिह चिन्त्यं सूतिकालेऽपि योगाः॥३॥**

भट्टोत्पलः—स्पष्टार्थः॥ ३॥

वि० प्र०—अथ धृतस्य गर्भस्य प्रसूतिकालज्ञानमाह—**उदयतीति**। मृदुभांशे मृदोः शनेर्भांशे शनैश्चरराशिनवमांशके यस्य कस्य लग्नस्योदये मकर-कुम्भयोरन्यतरस्य नवमांशके उदयति तथा च मन्दे शनैश्चरे लग्नात्सप्तमस्थे सप्तमराशिगते एवंभूते योगे यदि निषेक आधानं भवति तदा धृतगर्भस्य सूतिः प्रसवोऽब्दत्रयेण भवति। एवमेष विधिः शशिनि चन्द्रमसि यदि भवति तदा द्वादशेऽब्दे सूतिं कुर्यात्। अर्थात् यस्य कस्यापि लग्नस्योदये कर्कटस्य नवमांशे उदयति तथा लग्नात्सप्तमे भावे चन्द्रमसि गते आधानसमयाद् द्वादशेऽब्दे वर्षे प्रसवो भवतीति। उक्तञ्च—

'लग्ने शनैश्चरांशे शनैश्चरे द्यूनगे यदि निषेकः।
अब्दत्रयेण सूतिर्द्वादशभिः स्याच्छशिनि चैवमिति॥

इहाऽस्मिन्नाधानाध्याये निषेकयोगवशाद्यन्निगदितं तत्सूतिकाले प्रसवकालेऽपि युक्त्या चिन्त्यम् विचार्यम्। जन्मकाले यन्न सम्भवति तन्न वक्तव्यम् यच्च सम्भति तद्वक्तव्यमित्यर्थः॥ ३॥

लग्न में शनि का नवमांश हो और आधान लग्न से सप्तम भाव में शनि बैठा हो ऐसी स्थिति में गर्भाधान हो तो तीन वर्ष के बाद प्रसव होता है। एवं यदि लग्न में कर्क का नवमांश हो और सप्तम भाव में चन्द्रमा बैठा हो तो १२ वर्ष में प्रसव होता है॥ ३॥

### आधानाच्छुभाशुभज्ञानम्।

## यमवक्रौ द्यूनेऽर्कात्पुंसो रोगप्रदौ स्त्रियश्चन्द्रात्।
## तन्मध्यगयोर्मृत्युस्तदेकयुतदृष्टयोश्चैवम्॥ ४॥

**भट्टोत्पलः**—आधानजन्ममध्ये पित्रोः शुभाऽशुभज्ञानमाह। आधानकाल प्रश्नकाले वा अर्काक्रान्तराशितःसप्तमे स्थाने यदिशनिभौमौ भवतस्तदा प्रसवादर्वाक् पुरुषस्य रोगदौ व्याधिकरावित्यर्थः। एवं चन्द्रात्सप्तमे राशौ शनिभौमो भवतस्तदा स्त्रियो

रोगकरौ भवतः । तन्मध्यगयोः मृत्युः । तदिति शनैश्चराङ्गारकौ तयोर्मध्यास्थितयोश्चन्द्रार्कयोर्यथासङ्ख्येन स्त्रीपुंसोर्मृत्युकरौ भवतः । तत्रादित्याद्यदा शनिभौमयोरेको द्वादशस्थो द्वितीयो द्वितीयस्थो भवति तदा प्रसवादर्वाक् पुरुषो म्रियते । अथ चन्द्रादेको द्वादशस्थो द्वितीयो द्वितीयस्थो भवति तदा प्रसवादर्वाक् स्त्री म्रियत इत्यर्थः । तस्मिन्नपि राशौ शनिभौमाभ्यामेकेन भुक्तांशकानतिक्रम्य द्वितीयेन भुज्यमानमप्राप्य यद्यर्कचन्द्रयोरन्यतरस्यावस्थानं तदाप्यसौ मध्यगत एव भवति । तदापि स्त्रीपुंसयोरेकतरस्य मृत्युर्भवति । तदेकयुतदृष्टयोश्चैवमिति । तयोः शनिभौमयोर्मध्यादेकेन भानुर्यदा युक्तः परेण दृश्यते तदा प्रसवादर्वाक् पुंसो मरणं भवति ।तयोरेकेन युक्तं चन्द्रमसं यदाऽपरः पश्यति तदा प्रसवादर्वाक् स्त्री म्रियत इति ॥ ४ ॥

वि०प्र०—अथऽऽधानलग्नात्प्रसवमध्ये एवदम्पत्योःशुभाशुभफलज्ञानमाह—**यमवक्राविति** । यमः शनिः, वक्रो भौम एतौ द्वावाधानसमये प्रश्नसमये वाऽर्कादर्काक्रान्तराशितो द्यूने सप्तमभवने भवतस्तदा पुंसः पुरुषस्य रोगकरौ स्याताम् । एवमाधाने प्रश्ने वा चन्द्राच्चन्द्राधिष्ठितराशेः सप्तमे स्थाने यदि शनिभौमौ स्यातां तदा स्त्रियो रोगकरौ भवतः । **तन्मध्यगयोर्मृत्युः** । तयोः शनिभौमयोर्मध्यगौ तन्मध्यगौ यौ चन्द्रार्कौ तयोः शनिभौमान्तर्गतयोश्चन्द्रसूर्ययोर्यथासंख्येन स्त्रीपुरुषयोर्मृत्युर्मरणं भवति । एतदुक्तं भवति । शनिभौमान्तर्गतश्चन्द्रश्चेत्तदा स्त्रियो मृत्युः सूर्यश्चेत्तदा पुरुषस्य मृत्युर्भवति । **तदेकयुतदृष्टयोश्चैवमिति** । तयोः शनिभौमयोर्मध्यादेकेन युतोऽन्येन दृष्टस्तदापि मृत्युर्भवति । अर्थाद्यदि सूर्यः शनिभौमयोर्मध्यादेकेन युतोऽपरेण दृष्टस्तदा पुरुषस्य,चन्द्रश्चेदेकेन युतो द्वितीयेनावलोकितस्तदा स्त्रियो मृत्युविधायको भवति । सर्वे योगा प्रसवादर्वागेव फलदा ज्ञेयाः । स्फुटमुक्तं शुकजातके—

निषेककाले सूर्यस्य सप्तमस्थौ कुजार्कजौ ।
पुंसो रोगप्रदावर्कात्कुजमन्दौ द्विरिष्फगौ ॥
पुंसो मृत्युप्रदो वार्कः पूर्णदृष्ट्या च वीक्षितः ।
मध्ये मन्दारयोरेकतरे नान्येन संयुतः ॥
पुंसो मृत्युप्रदश्चन्द्रः सूर्यवत्स्त्रीमृतिप्रदः ।
योगकारकयोर्वीर्यान्मासे मृत्युं समादिशेत् ॥ इति ॥ ४ ॥

आधान काल में या प्रश्न कालमें सूर्य जिस स्थान में स्थित हो वहाँ से सप्तम भाव में शनि और मंगल बैठे हों तो प्रसव के पूर्वही पुरुष को रोगप्रद होते हैं । एवं यदि चन्द्रमा से सप्तमभाव में शनि-मङ्गल पड़े हों तो प्रसव के पूर्व स्त्री को दुःखद होते हैं। शनि और मङ्गल के बीच में चन्द्रमा बैठा हो तो स्त्री की तथा शनि और मङ्गल के मध्य में सूर्य स्थित हो तो पुरुष की मृत्यु करने वाला होता है। शनि या मंगल इन में से कोई ग्रह सूर्य के साथ युत हो या सूर्य को देखता हो तो प्रसव के पूर्व पुरुष की मृत्यु करता है। एवं शनि या मङ्गल में से किसी ग्रह से चन्द्रमा युक्त तथा दृष्ट हो तो स्त्री की मृत्यु करता है ॥ ४ ॥

### आधानान्मासाधिपतयस्तत्प्रयोजनञ्च ।

**कललघनावयवास्थित्वक्रोमस्मृतिसमुद्भवाः क्रमशः ।**
**मासेषु शुक्रकुजजीवसूर्यचन्द्रार्किसौम्यानाम् ॥ ५ ॥**
**अशनोद्वेगप्रसवाः परतो लग्नेशचन्द्रसूर्याणाम् ।**
**कलुषैः पीडा पतनं निपीडितैर्निर्मलैः पुष्टिः ॥ ६॥**

भट्टोत्पलः—आधानमासादारभ्य मासप्तकाधिपतीन् ग्रहानाह । गर्भः प्रथमे मासे कललरूपो भवति शुक्रशोणितमिश्रीभूतः तत्र गर्भस्य प्रथमे मासे शुक्रोऽधिपतिः । द्वितीये शुक्रशोणितस्य घनत्वं भवति तत्र कुजोऽधिपतिः । तृतीये मासे गर्भस्य हस्ताद्यवयवोत्पत्तिर्भवति तत्र जीवोऽधिपतिः । चतुर्थे मासि

गर्भस्यास्थिसम्भवो भवति तत्राऽर्कोऽधिपतिः । पंचमे मासि त्वक्-चर्मसम्भवो भवति तत्राऽधिपतिश्चन्द्रः । षष्ठे रोमाणि जायन्ते तत्र शनिरधिपतिः । सप्तमे स्मृतिसमुद्भवश्चैतन्यं भवति तत्र बुधोऽधिपतिः ॥ अतः क्रमेण मासत्रये गर्भस्य लक्षणं मासाधि-पतीन् मासाधिपतिप्रयोजनमाह। तत्राष्टमे मासि गर्भो मातुर्भुक्तम-श्नाति तत्र तस्याधानलग्नस्य अधिपतिः स्वामी । नवमे मासि तस्य गर्भस्योद्वेगो भवति तत्र चन्द्रोऽधिपतिः । दशमे मासि प्रसवो भवति तत्राऽर्कः स्वामी । प्रयोजनमाह । कलुषैरिति । आधान-काले यः कलुषो विवर्णस्तस्य सम्बन्धिनि मासि गर्भस्य पीडा वक्तव्या । निपीडितैरिति । ग्रहेणान्येन ग्रहयुद्धे विजिते शिखिशि-खाध्वस्ते उल्काहते वा ग्रहे तस्मिन्मासि गर्भपतनं वक्तव्यम् । निर्मलैः रश्मिसंयुक्तैर्गर्भस्य पुष्टिर्वक्तव्या ॥ ५–६ ॥

वि० प्र०--अथाऽऽधानसमयादारभ्य प्रतिमासं गर्भस्यावयवोत्पत्तिं मासदशकाधिपान् ग्रहान् सहेतुकानार्याभ्यामाह—कलल इति । शुक्रः प्रसिद्धः, कुजो भौमः, जीवो गुरुः, सूर्य–चन्द्रौ प्रसिद्धौ आर्किः शनिः, सौम्यो बुध एषां ग्रहाणां मासेषु प्रथममासादिष्वित्यर्थः । क्रमशः कललादीनां समुद्भवा भवन्ति । तद्यथा—गर्भाधानसमयादारभ्य प्रथममासः शुक्रस्य अर्थात्प्रथममासाधिपतिः शुक्र इति सर्वत्र ध्येयम् । तत्र [ प्रथम मासे ] कललः शुक्रशोणितमिश्रणरूपो भवति। द्वितीयो मासः कुजस्य तत्र घनो भवति शुक्रशोणितमिश्रणस्य घनमण्डाकारत्वं स्यात् । तृतीयो मासो बृहस्पतेस्तत्रावयवा हस्त-पादमुखादय उत्पद्यन्ते। चतुर्थो मासः सूर्यस्य तत्र अस्थि कीकसमु-त्पद्यते। 'कीकसंकुल्यमस्थि च' इत्यमरः। पञ्चमो मासश्चन्द्रमसस्तत्र त्वचः चर्मण उत्पत्तिर्भवति । षष्ठो मास आर्केः शनेस्तत्र रोम्णः संभवो भवति। सप्तमो मासो बुधस्य तत्र स्मृतिःपूर्वजन्मार्जितकर्मज्ञानं संभवति। 'संस्कारजन्यत्वविशिष्टज्ञानं स्मृति'रिति तार्किकाः । **अशनमित्यादि** ।

परतः सप्तममासानन्तरं लग्नेशचन्द्रसूर्याणां मासेषु अष्टमादिषु अशनोद्वेगप्रसवाः क्रमशो भवन्ति । एतदुक्तं भवति । अष्टममासो लग्नेशस्य गर्भाधानलग्नस्वामिनस्तत्र अशनं भवति । माता यत्किञ्चिदश्नाति तदेव भुङ्क्ते इत्यर्थः । नवमो मासः पुनश्चन्द्रमसस्तत्र गर्भस्थस्योद्वेगो व्यग्रता भवति । दशममासे गर्भस्य प्रसवः प्रसूतिर्भवति तत्र पुनारविरधिपः । अत्र यवनेश्वरवचनेन--

'आद्ये तु मासे कललं द्वितीये पेशिस्तृतीयेऽपि भवन्ति शाखा ।
अस्थीन्यथ स्नायुशिराश्चतुर्थे मज्जान्त्रचर्माण्यपि पञ्चमे तु ॥
षष्ठे त्वसृग्रोमनखा यकृच्च चेतस्विता सप्तममासि चिन्त्या ।
तृष्णाशनास्वादनमष्टमे स्यात्स्पर्शोपरोधा नवमे मतिश्च ॥
स्रोतोभिरुद्घाटितपूर्णदेहो गर्भो र्कमासे दशमे प्रसूतः ।
कुजास्फुजिज्जीवरवीन्दुसौरशशाङ्किलग्नेन्दुदिवाकराणाम् ॥
मासाधिपत्यप्रभवो न चैषां जयोपघातैर्ग्रह वदन्तु वन्ति ।' इत्यनेन

प्रथमद्वितीयमासाधीशयोराचार्यस्य यन्मतभेदःस वशिष्ठगर्गादिवाक्यानुरोधादाचार्यस्य नाभिमतः—वशिष्ठवचनम्—

सितोऽवनेयामरपूज्यसूर्यचन्द्रार्किसौम्योदयपेन्दुसूर्याः ।
मासाधिपाः स्युः क्रमशो दशैते निपीडितो नाशयति स्वमासम्॥इति॥

**कलुषैरिति**—कलुषर्मन्दरस्मिभिर्ग्रहैः पीडा भवत्यर्थादाधानकाले यो ग्रहः कलुषो विवर्णस्तस्य मासे गर्भस्य पीडा स्यादित्यर्थः । निपीडितैः पतनं वाच्यम् । अर्थाद्यो ग्रहो निपीडितो युद्धे विजितः उल्कादिःहतो वा स्यात्तत्सम्बन्धिनि मासि गर्भस्य पतनं भवतीति । एवं निर्मलैर्मयूखव्यूहसम्पन्नैर्ग्रहैस्तत्सम्बन्धिनि मासे पुष्टिर्वाच्या गर्भस्येति शेषः । उक्तञ्च—

वीर्याढ्यः स्यान्मासपः स्वोच्चगो वा वृद्धिर्गर्भस्यैव चेन्निघ्नवीर्यः ।
अस्तं यातो नीचगः पापयुक्तस्तत्तन्मासे जायते गर्भपातः ॥इति॥

गर्भरक्षार्थं प्रतिमासं शान्तिः कार्येत्याह वशिष्ठः—

मासे मासे मासपादिग्रहाणां शान्तिं कुर्यान्मंत्रतंत्रादिभिश्च।
होमैर्दानैः सज्जनानां च वाक्यैर्गर्भं सम्यक् रक्षयेत्पुत्रकामा ॥इति॥६॥

गर्भाधानके बाद कलल रूप अर्थात् रजवीर्य का मिश्रण होता है। उसका स्वामी शुक्र है। दूसरे मास में रज और वीर्य मिल कर कुछ घन ( कड़ा ) अर्थात् पिंडाकार होता है, उसका स्वामी मङ्गल है। तृतीय मास में अवयव ( हाथ पाँव सिर इत्यादि ) पैदा होता है, इसका स्वामी बृहस्पति है। चतुर्थ मास में हड्डियाँ बनती हैं, इसका स्वामी सूर्य है। पञ्चम मास में चमड़े का सञ्चार होता है, उसका स्वामी चन्द्रमा है। षष्ठ मास में रोम जमते हैं,इनका स्वामी आर्कि ( शनि ) है। सप्तम मास में स्मृति ( चैतन्यता ) अर्थात् पूर्व जन्म के कर्म याद आते हैं इसका स्वामी बुध है। उसके बाद आठवें मास में गर्भस्थ बालक माता से खाये हुए भोजन को खाता है उस मास का स्वामी गर्भाधानकालिक लग्न का स्वामी है। नवम मास में उद्वेग ( जन्म जन्मान्तर के संस्कार की स्मृति से घबड़ाहट पैदा ) होता है। इसका स्वामी चन्द्रमा है। दशम मास में प्रसव होता है, इसका स्वामी सूर्य है। गर्भाधान काल में जो ग्रह निर्बल हो वह जिस मास का स्वामी हो उस मास में गर्भ को पीड़ा होती है। जिस मास का स्वामी पीडित हो उस मास में गर्भपात होता है। जिस मास का स्वामो पुष्ट( बल युक्त ) हो उस मास में गर्भ पुष्ट ( प्रसन्न ) रहता है॥ ५-६॥

## गर्भसम्भवासम्भवज्ञानम्।

**बलयुक्तौ स्वगृहांशेष्वर्कसितावुपचयर्क्षगौ पुंसाम्।**
**स्त्रीणां वा कुजचन्द्रौ यदा तदा गर्भसम्भवो भवति ७**

भट्टोत्पलः—गर्भसम्भवासम्भवज्ञानमाह। यत्र कुत्र राशौ स्वराश्यंशकस्थावादित्यशुक्रौ बलयुक्तौ पुरुषस्य जन्मलग्नाज्जन्मराशेर्वा उपचयस्थाने भवतो यदा तदा गर्भस्य सम्भवो वक्तव्यः। अङ्गारकचन्द्रौ स्वराशिनवांशस्थौ भवतः स्त्रियश्चोपचयर्क्षगौ भवतो यदा तदाऽपि गर्भसम्भवो भवति ॥ ७ ॥

वि०प्र०–अथ गर्भसम्भवयोगमाह-**बलयुक्ता**विति । यत्र कुत्र भावस्थौ स्वगृहांशेषु स्वराशिनवमांशेषु व्यवस्थितावर्कसितौ सूर्यशुक्रौ बलयुतौ बलवन्तौ पुरुषस्योपचयर्क्षगौ जन्मलग्नाज्जन्मराशितो वोपचयस्थानगतौ भवतस्तदा गर्भसम्भवो गर्भोत्पत्तिर्वाच्या । वा कुजचन्द्रौ भौमचन्द्रमसौ स्वराशिनवमांशगतौ स्त्रीणां जन्मलग्नाज्जलराशेर्वोपचयराशिगतौ यदा तदाऽपि गर्भसम्भवो भवति । उक्तञ्च कल्याणवर्मणा—

उपचयगौ रविशुक्रौ बलिनौ पुंसः समांशसंप्राप्तौ ।
युवतेर्वा कुजचन्द्रौ यदा तदा गर्भसम्भवो भवति ॥ इति ॥७॥

आधान काल में सूर्य और शुक्र ये दोनों ग्रह अपने राशि या नवमांश में होकर पुरुष के जन्म लग्न या जन्म राशि से उपचय ( ३ । ६ । १० । ११ ) स्थान में पड़े हों और बल युक्त हों अथवा मंगल और चन्द्रमा अपने २ राशि या नवमांश में होकर स्त्री के जन्म लग्न या जन्म राशि से उपचय ( ३ । ६ । १० । ११ ) स्थान में बैठे हों और बलवान् हों तो गर्भाधान की संभावना होती है ॥७॥

## गर्भसम्भवयोगनिष्फलत्वम् ।

**लग्ने बलिनि गुरौ वा नवपञ्चमसंस्थितेऽपि वा भवति।**
**योगा हतबीजानामफला वीणेव बधिराणाम् ॥ ८ ॥**

भट्टोत्पलः—गर्भसम्भवयोगनिष्फलत्वं चाह । अथवा लग्नपंचमनवमानामेकस्मिन् स्थाने बलवान् बृहस्पतिर्भवति तदा गर्भसम्भवो वाच्यः । अथवाऽऽदित्यचन्द्रशुक्राङ्गारकाः सर्वे एव यदि स्वभागगाः स्त्रीपुंसोश्चोपचयस्था भवन्ति तदाऽपि गर्भसम्भवो भवति । यदुक्तं च वराहेन । रवीन्दुशुक्रावनिजैरिति । योगा हतबीजानां मध्ये स्त्रीपुंसोः अन्यतमो हतबीजो भवति तस्मिन् हतबीजे इमे योगा निष्फला ज्ञेयाः । किमिवेत्याह—यथा वीणा बधिराणां वाद्यमाना श्रुतिसुखं न जनयति तथैतेऽपि योगाः । षण्ढानां संयोगगानामपि सम्भवं न कुर्वन्ति ॥ ८ ॥

वि० प्र०—अथान्यदपि गर्भसम्भवयोगं तन्निष्फलत्वञ्चाह। **लग्न इति**। लग्ने आधानकालिकलग्ने बलिनि बलवति गुरावङ्गिरसि स्थिते वा नवपञ्चमे आधानलग्नान्नवपञ्चमस्थाने बलिनि गुरौ स्थिते तदाऽपि गर्भसम्भवो भवति। तथा चोक्तं गर्गेण

लग्नस्थो वा सुतस्थो वा धर्मस्थो वा बली गुरुः।
प्रोक्तर्क्षे शुभवारे च धारयेद्गर्भमुत्तमम्॥ इति।

योगा इमे पूर्वोदिता योगा हतबीजानां हतं नष्टं बीजं वीर्यं येषां ते तेषां तथोक्तानां स्त्रीपुरुषाणां विषये बधिराणां कर्णेन्द्रियरहितानां वीणा वाद्यविशेष इवाफलाः फलरहिता भवन्तीति। नपुंसकानां विषये एते योगास्तथैव निष्फला भवन्ति यथा बधिराणां वीणा श्रुतिसुखं जनयितुमसमर्था भवतीत्याशयः॥ ८॥

अथवा आधान काल में बलवान् बृहस्पति लग्न पंचम और नवम इन स्थानों में से किसी स्थान में बैठा हो तो भी गर्भोत्पत्ति की संभावना होती है। इन योगों के रहते हुए भी यदि स्त्री पुरुष इन दोनों में कोई नपुंसक हो तो ये योग बधिर के सामने वीणा के शब्द के नाईं निष्फल होते हैं अर्थात् योग रहते हुए भी गर्भ स्थिति नहीं होती है॥ ८॥

### गर्भे पुरुषस्त्रीज्ञानम्।

**विषमर्क्षे विषमांशे संस्थिताश्च गुरुशशाङ्कलग्नार्काः।**
**पुंजन्मकराः समभेषु योषितां समनवांशगताः॥९॥**

**भट्टोत्पल**—अथ गर्भसम्भवज्ञानान्तरं गर्भज्ञानमाह। विषमस्थैर्मेषमिथुनादिस्थैर्यथासम्भवं सर्वैरेव बृहस्पतिचन्द्रार्कलग्नैः न केवलं,यावत् प्रदर्शितराशिसम्बन्धिनवांशकगतैर्ग्रहै गर्भे पुरुषसम्भवो वक्तव्यः। समभेष्विति। एते बृहस्पतिचन्द्रलग्नार्का यदि समराशिषु वृषादिषु स्थितास्तदा स्त्रीजन्म कथनीयम्। न केवलं यावत्तत्सम्बन्धिनवांशकगता यदा भवेयुः तदाऽपि योषितां जन्मकरा भवन्ति। अथ यथाऽभिहिता उभयविकल्पे यत्रैव बहवः

स्थितास्तल्लिङ्गासम्भवनिर्देशः साम्ये च बलाधिक्यवशात् उक्तं च बृहज्जातके 'ओजर्क्षे पुरुषांशकेषु बलिभिर्लग्नार्कगुर्विन्दुभिः पुंजन्म प्रवदेत् समांशसहितैर्युग्मेषु तैर्योषितः' ॥ इति ॥ ६ ॥

वि० प्र०—अथ गर्भसम्भवज्ञानानन्तरमाहितस्याधानसमयाज्जातकस्य जन्मसमयादुभयोः प्रश्नलग्नाद्वा पुंस्त्रीविभागज्ञानकरं योगमाह—**विषमर्क्ष** इति। विषमर्क्षे मेषमिथुनसिंहादिविषमराशौ विषमांशे विषमराशिनवांशे च संस्थिताः गुरुर्बृहस्पतिः शशाङ्कश्चन्द्रो लग्नमाधानलग्नमर्को रविरेते पुंजन्मकराः पुंसां पुरुषाणां जन्मकरा भवन्ति। समभेषु समराशिषु वृषकर्कटादिषु गताः समराशिनवांशगता वा ते एव ग्रहास्तदा योषितां स्त्रीणां जन्मकरा भवन्ति। गुरुशशांकलग्नार्का बलिन एव गर्भोत्पत्तिकरा भवन्तीति।

उक्तञ्च सारावल्याम्—

विषमे विषमांशगता होराशशिजीवभास्करा बलिनः।
कुर्वन्ति जन्म पुंसां समे समांशे च युवतीनाम् ॥ इति ॥९॥

विषम ( मेष-मिथुन-सिंह-तुला-धनु-कुम्भ ) राशियों में अथवा विषम राशि के नवमांश में बृहस्पति, चन्द्रमा, लग्न और सूर्य ये चारो ग्रह बैठे हों तो पुत्र का जन्म कहना। यदि सम (वृष-कर्क-कन्या-वृश्चिक-मकर-मीन) राशियों में अथवा समराशि के नवमांश में बृहस्पति चन्द्रमा लग्न और सूर्य पड़े हों तो स्त्री का जन्म देने वाले होते हैं ॥ ९ ॥

## यमलसम्भवज्ञानम्।

**बलिनो विषमेऽर्कगुरू नरं स्त्रियं समगृहे कुजेन्दु सिताः।**
**यमले द्विशरीरांशेष्विन्दुजदृष्ट्या स्वपक्षसमौ ॥१०॥**

**भट्टोत्पलः**—पुनरपि गर्भलिङ्गज्ञानं यमलसम्भवज्ञानं चाह। विषमराशिगतौ यथासम्भवमादित्यबृहस्पती बलयुक्तौ भवतस्तदा नरो गर्भस्थो वाच्यः। समराशिष्वेवं यथासम्भवं सर्वे एव कुज-

चन्द्रशुक्रा बलिनो यदा भवन्ति तदा स्त्रीगर्भश्चेति वक्तव्यम् । यमलौ द्विशरीरांशेष्विति । द्विशरीरराशिनवांशकस्था आदित्यगुरुकुजेन्दुसिता बुधदृष्टाःयमलौ स्वपक्षे कुर्वन्ति।एतदुक्तंभवति।चत्वारो द्विःस्वभावा मिथुनमीनकन्याधन्विनः। तत्र मिथुनधन्विनौ पुरुषांशकौ कन्यामीनौ स्त्र्यंशकौ तेन यथासम्भवं मिथुनधन्वंशगतावादित्यगुरू यदि बुधेन यत्र तत्रावस्थितेन दृश्येते तदा यमलौद्वौ पुरुषौ वाच्यौ एवं यथासम्भवं कन्यामीनांशगताः कुजेन्दुसिता यत्र तत्रावस्थितेन बुधेन दृश्यन्ते तदा यमले द्वे कन्ये वाच्ये । अथ दर्शितग्रहपञ्चकमपि द्विःस्वभावराशिसंस्थं यथा तथा बुधःपश्यति तदा एकः पुरुषो वक्तव्य एका च कन्या वक्तव्या ।। १० ।।

वि० प्र०—अथान्ययोगान्तरं यमलसम्भवयोगञ्चाह—**बलिनाविति** । अर्कः सूर्यो गुरुर्बृहस्पतिरेतौ द्वौ बलिनौ बलयुतौ विषमे मेषमिथुनादिविषमराशौ गतौ यत्र कुत्रनवांशगतौ भवतस्तदा नरं पुरुषं कुरुतः । कुजो भौमः इन्दुश्चन्द्रः सितः शुक्र एते ग्रहा बलिनः सन्तः समगृहे वृषकर्कटादिसमराशौ गता यत्र तत्रांशस्था भवन्ति तदा स्त्रियमुत्पादयन्ति । उक्तञ्च कल्याणवर्मणा——

ओजर्क्षे गुरुसूर्यौ बलिनौ पुंसः समे सितेन्दुकुजाः ।
कन्यानां जन्मकरा गर्भाधाने स्थिता बलिनः ।। इति ।

अथैत एव ग्रहाः सूर्येन्दुभौमगुरुशुक्रा बलिनो द्विशरीरांशेषु द्विशरीराणां द्विस्वभावराशीनां मिथुनकन्याधनुर्धरमीनानामंशेषु नवमांशेषु यथासम्भवं गताः, इन्दुजो बुधस्तस्य दृष्ट्या स्वपक्षसमौ यमलौ कुर्वन्ति । चत्वारो द्विस्वभावराशयस्तत्र मिथुनधन्विनौ पुरुषांशकौ कन्यामीनौ स्त्र्यंशकौ तेनपुरुषांशगतौ सूर्यगुरू यत्र कुत्रावस्थितेन बुधेन दृष्टौ यमलावुभौ पुरुषौ कुरुतः । एवं स्त्र्यंशगताश्चन्द्रसितभौमा यत्र तत्रस्थेन बुधेनाऽवलोकिता यमले द्वे कन्ये विधत्तः । यत्रोभावेव वर्गौ यथा विहितौ तत्रैको नरो द्वितीया कन्या चेति वाच्यम् ।

स्फुटमुक्तं शुकजातके—

रविजीवौ युग्मधनूनवांशस्थौ बुधेक्षितौ।
पुंयुगं, मीनकन्यांशस्थितौ पुंस्त्रीयुगं वदेत्॥
भौमेन्दुशुक्रा मीनस्त्रीनवांशस्था बुधेक्षिताः।
स्त्रीयुगं ग्रहयुग्मांशे गर्भे पुंस्त्रीयुगं भवेत्॥ इति॥ १०॥

सूर्य और बृहस्पति बल युक्त होकर विषम (मेष–मिथुन–सिंह–तुला–धनु–कुम्भ) राशि में बैठे हों तो गर्भ में पुत्र कहना। मङ्गल–चन्द्रमा–शुक्र ये तीनों ग्रह यदि समराशि में पड़े हों तो गर्भ में कन्या है ऐसा कहना। सूर्य–बृहस्पति–मङ्गल–चन्द्रमा और शुक्र ये ग्रह द्विस्वभाव (मिथुन–कन्या–धनु–मीन) राशि या द्विस्वभाव राशि के नवमांश में पड़े हों और बुध से देखे जाते हों तो अपने पक्ष के यमल पैदा करते हैं। अर्थात् पुरुष (मिथुन–धनु) राशिमें या मिथुन–धनु के नवमांश में सूर्य बृहस्पति स्थित हों और उनको बुध देखता हो तो दोनों यमल पुत्र होते हैं। कन्या–मीन राशि में या उनके नवमांश में मङ्गल–चन्द्रमा शुक्र पड़े हों किसी स्थान में स्थित बुध से देखे जाते हों तो यमल कन्यायें हों ऐसा कहना। उक्त पाँचो ग्रहों में कुछ ग्रह विषम राशि–नवमांश में हों और कुछ ग्रह समराशि नवमांश में बैठे हों और बुध से देखे जाते हों तो गर्भ में एक पुत्र और एक कन्या कहना॥ १०॥

अन्यच्च।

**लग्नाद्विषमोपगतः शनैश्चरः पुत्रजन्मदो भवति।**
**निगदितयोगबलाबलमवलोक्यविनिश्चयो वाच्यः॥ ११**

## इति श्रीवराहमिहिरविरचिते लघुजातके पञ्चमोऽध्यायः॥ ५॥

भट्टोत्पलः—पुंजन्मयोगान्तरं स्त्रीपुरुषयोगयोर्द्वयोरपि सम्भवे सति निश्चयो वाच्य इत्याह। लग्नं मुक्त्वा विषमर्क्षगः सौरो लग्नात् तृतीयपञ्चमसप्तमनवमैकादशस्थानानामन्यतमस्थानस्थो यदा भवति तदा पुत्रजन्मदो भवति। एतान्योगान्दृष्ट्वा जन्मसमये

प्रश्नकाले वा नरोत्पत्तिर्विज्ञेया। निगदितेत्यादि—यत्र पुरुषयोग-सम्भवः स्त्रीजन्मसम्भवश्च तत्र यो योगो बलवद्ग्रहाभिनिर्वृत्तस्तद्वशादेकतमस्य सम्भवो वक्तव्यः ॥ ११ ॥

इति श्रीभट्टोत्पलविरचितायां लघुजातकटीकायामाधानाऽध्यायः पञ्चमः ॥ ५ ॥

वि०प्र०—अथान्यं पुंजन्मयोगं द्वयोः पुंस्त्रीयोगयोः सति सम्भवे कथं निश्चयः कर्तव्य इत्याह—**लग्नादिति**। लग्नाद्विषमोपगो लग्नमारभ्य विषमेषु तृतीयपञ्चमसप्तमनवमैकादशानामन्यतमे स्थान उपगतः सम्प्राप्तः शनैश्चरः पुत्रस्य जन्मदो भवति। अत्र विषमभावे लग्नग्रहणं नास्तीति। निगदितानां प्रोक्तानां योगानां बलाबलमवलोक्य दृष्ट्वा विनिश्चयो पुरुषाणां स्त्रीणां च निर्णयो वाच्यः वक्तव्यः। यत्र पुरुषजन्मयोगसम्भवस्तत्र पुरुषस्य जन्म यत्र च स्त्रीजन्मयोगसम्भवस्तत्र स्त्रियो जन्म वक्तव्यम्।

उक्तञ्च कल्याणवर्मणा——

लग्नं मुक्त्वा विषमे शनैश्चरो, पुरुषजन्मदो भवति।
योगे विहगस्य बलं संवीक्ष्य वदेन्नरं स्त्रियं वापि ॥ इति ॥ ११ ॥

इत्याजमगढ़मण्डलान्तर्गतब्रह्मपुरग्रामाभिजन श्रीप० धर्मदत्तद्विवेदिसूनु-ज्यौ०आ०विन्ध्येश्वरीप्रसादद्विवेदिकृतायां लघुजातकस्य बालबोधिनीटीकायामाधानाऽध्यायः पञ्चमः समाप्तः ॥ ५ ॥

प्रश्न लग्न या आधान लग्न से विषम ( तीन, पाँच, सात, नव, एग्यारह इन ) स्थानों में से किसी स्थान में शनैश्चर बैठा हो तो पुत्र जन्म करता है, अर्थात् गर्भ में पुत्र होता है। जिस प्रश्नलग्न या आधानलग्न में पुत्र योग और कन्या योग दोनों हो उस में बल के तारतम्य से कन्या या पुत्र योग का निश्चय करना चाहिये ॥ ११ ॥

इति श्रीविन्ध्येश्वरीप्रसादद्विवेदिकृतायां लघुजातकस्य हिन्दीटीकायां पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥



# अथ सूतिकाध्यायः ६.।



## जातस्य सत्वगुणादिज्ञानं मूर्तिज्ञानञ्च।

**सत्वं रजस्तमो वा त्रिंशांशे यस्य भास्करस्तादृक्।**
**बलिनः सदृशी मूर्तिर्बुध्वा वा जातिकुलदेशान्॥१॥**

भट्टोत्पलः—अथ सूतकाध्यायं व्याख्यास्यामस्तत्रादावेव जातस्य सात्विकराजसतामसत्वनिरूपणाय शरीराकारज्ञानमाह। यस्य जन्मकाले भास्कर आदित्यः सात्विकत्रिंशांशे व्यवस्थितस्तदा सात्विको जात इति वक्तव्यम्। एवं राजसादौ। बलिनः सदृशी मूर्तिरिति पुरुषस्य जन्मसमये यो ग्रहोऽतिबलवांस्तस्य सदृशी 'चतुरस्रो नात्युच्चः' इत्यादिप्रदर्शितमिति तस्य यथाविधमेव वक्तव्यं अथवा लग्ननवांशस्याधिपतेस्तुल्या मूर्तिर्वक्तव्या। उक्तं च 'लग्ननवांशपतुल्यतनुः स्याद्वीर्ययुतग्रहतुल्यतनुर्वे' ति बुध्वा वा जातिकुलदेशानिति-पूर्वमूर्तिनिर्देशः। श्वपाकशबरनिपादाः ज्ञातित एव कृष्णा भवन्ति। तेषामेव निर्देशः। कस्मिन्कुले कोऽसौ जातो गौराणां कृष्णानां वा देशं च बुध्वा मूर्तिनिर्देशः। कस्मिन्देशे कोऽयं जात इति यथा कर्णाटकाः सर्वे एव कृष्णा भवन्ति। वैदेहाः सर्वे एव श्यामाः। काश्मीराः सर्वे गौरा एव॥ १॥

वि० प्र०—अथ सूतिकाध्यायो व्याख्यायते। तत्र तावज्जातकस्य सात्विकादिगुणनिरूपणं देहाकृतिज्ञानञ्चाह—**सत्वमिति**। जन्मसमये भास्करः यस्य ग्रहस्य त्रिंशांशे त्रिंशद्भागे व्यवस्थितस्तादृक् सत्वं रजस्तमो वा गुणं करोति। अर्थाद्यदि सूर्यः सात्विकग्रहस्य त्रिंशांशे समवस्थितस्तदा जातः सत्वगुणप्रधानो भवति। यदि च राजसग्रहस्य त्रिंशांशे सूर्यो व्यवस्थितस्तदा बालको रजोगुणाधिको भवति। एवं रविस्तामस-

ग्रहस्य त्रिंशांशे स्थितश्चेत्तदा जातकस्तमोगुण प्रधानो भवति । सात्त्विकादिलक्षणं तत्परिपाकञ्चाह याज्ञवल्क्यः—

आत्मज्ञः शौचवान्दान्तस्तपस्वी विजितेन्द्रियः ।
धर्मकृद्वेदविद्यावित्सात्त्विको देवयोनिताम् ॥
असत्कार्यरतो धीर आरम्भी विषयी च यः ।
स राजसो मनुष्येषु मृतो जन्माधिगच्छति ॥
निद्रालुः क्रूरकृल्लुब्धो नास्तिको याचकस्तथा ।
प्रमादवान्भिन्नवृत्तो भवेत्तिर्यक्षु तामसः ॥ इति ॥

**अथ** बलिनो ग्रहस्य सदृशी मूर्तिर्जातिकुलदेशान् बुद्ध्वाऽऽदेश्या । जन्मकाले सर्वग्रहेभ्यो योऽधिकबलस्तस्य यादृशी मूर्तिस्तादृशी जातकस्याप्याकृतिर्भवति । परन्त्वियं जातिकुलदेशान् ज्ञात्वा वक्तव्या नान्यथा । यथा निषाद-श्वपच-किरात-शवर-पुलिन्दादयः प्रायः कृष्णवर्णा भवन्ति, काश्मीर-यूरोपादिदेशीया गौरवर्णा कर्णाटकदेशीया हवसी पदवाच्याश्च कृष्णवर्णा भवन्ति । एवं यदि बहवो ग्रहा जन्मनि बलवन्तस्तदा मिश्राऽऽकृतिर्वक्तव्येत्याह कल्याणवर्मा—

बहवो यदि बलयुक्ता मिश्रा मूर्तिस्तदा वाच्या ।
कुलजातिदेशपुरुषान्बुद्ध्वाऽऽदेशं वदेत्प्राज्ञः ॥ इति ॥ १ ॥

**बालक के जन्म समय में यदि सूर्य सात्विक ग्रह (सूर्य, चन्द्र और बृहस्पति) के त्रिंशांश में बैठा हो तो बालक सत्वगुणी (सत्य बोलने वाला, दयालु, देवता-ब्राह्मण में भक्ति रखने वाला, सरल स्वभाव वाला इत्यादि) होता है। यदि सूर्य रजोगुण वाले ग्रह (बुध-शुक्र) के त्रिशांश में पड़ा हो तो बालक रजो गुणी (काव्य, कला, सङ्गीत, स्त्री इत्यादिमें आसक्त, होता है। एवं यदि सूर्य तमोगुणीग्रह(मंगल-शनि) के त्रिशांश में पड़ा हो तो बालक तामसप्रकृति वाला ( क्रोधी, आलसी, धूर्त, व्यर्थ लड़ाई झगड़ा करने वाला, व्यभिचारी, चोर इत्यादि ) होता है। जन्म समय में जो ग्रह सब से बलवान् होता है उसी के सदृश बालक का स्वरूप होता है। जाति, कुल, देश इत्यादि के अनुसार बालक का रङ्ग, रूप, गुण इत्यादि कहना। जैसे निषाद**

किरात इत्यादि जाति स्वाभाविक कृष्णवर्ण होतीहै। देश भेद से जैसे इङ्गलेण्ड के मनुष्य स्वभावतः गौर वर्ण होते हैं। ब्राह्मण जाति प्रायः स्वभाव से ही बुद्धिविशिष्ट होती है। क्षत्रिय स्वभाव के शूर होते है इत्यादि ॥ १ ॥

### ग्रहाणां सत्वादिगुणाः।

**गुरुशशिरवयः सत्वं रजः सितज्ञौ तमोऽर्कसुतभौमौ।**
**एतेऽन्तरात्मनि स्वां प्रकृतिं जन्तोः प्रयच्छन्ति ॥२॥**

भट्टोत्पलः—ग्रहाणां सात्विकादिविभागमाह। वृहस्पति-चन्द्रादित्याः सात्विकाः बुधशुक्रौ राजसौ शनैश्चराङ्गारकौ तामसौ एते ग्रहाः जन्तोः स्वामात्मीयां प्रकृतिं प्रयच्छ-न्ति। पूर्वोक्तऽविधिना त्रिंशांशे यस्य भास्करः तादृक् इति। ननु चन्द्रार्कयोः सात्विकत्वेन किं प्रयोजनमुच्यते तयोर्गुण-मात्रमेव ॥ २ ॥

वि० प्र०—अधुना ग्रहाणां सात्विकराजसतामसगुणानाह— **गुरुरिति**। गुरु बृहस्पतिः शशी चद्रमा रविःसूर्य एते सत्वं सत्वप्रधानाः सात्विका इत्यर्थः। सितज्ञौ शुक्रबुधौ रजःप्रधानौ, अर्कसुतः शनिः भौमः प्रसिद्ध एतौ तमस्तमःसंज्ञौ। एते ग्रहा जन्तोर्जीवस्यान्तरात्मनि अन्तःकरणे स्वां स्वीयां प्रकृतिं नैजं स्वभावं प्रयच्छन्ति ददति। पूर्वोक्तेन 'सत्वं रजस्तमो वा त्रिंशांशे यस्य भास्करस्तादृक्' इत्यादिनेत्यर्थः। यवनाचार्येण भौमस्य सात्विकत्वं चन्द्रमसो राजसत्वमुक्तं। यथा च तद्वाक्यम् —

सत्वाधिका भास्करभौमजीवा भृग्वात्मको राजसिको शशी च।
शनैश्चरस्तामसिको बुधस्तु संयोगतोऽस्माल्लभते विशेषान् ॥ इति ॥

अत्र यवनाचार्यवचनेन सहाचार्यस्य यन्मतभेदः स सत्याचार्यवच-नानुरोधादिति। तथाच सत्याचार्यः—

तामसिकौ कुजसौरौ राजसिको भार्गवः शशिसुतश्च।
जीवशशिभास्कराः सात्विका ग्रहवत्प्रकृतयो नृणाम् ॥ इति ॥

ग्रन्थान्तरेपि—

सत्वं शशीज्योष्णाकरः सितज्ञौ रजस्तमःक्ष्मातनयार्कपुत्रौ ।
यस्याभ्रवह्वय शगतो दिनेशस्तत्तुल्यसत्वादिगुणो नरःस्यात॥इति ॥२॥

बृहस्पति, चन्द्रमा, सूर्य ये तीन ग्रह सत्व गुणवाले हैं । शुक्र बुध ये दोनों रजो गुणी हैं । शनि, मङ्गल ये दोनों तमोगुणी हैं। ग्रह अपनी प्रकृतिके अनुसार मनुष्यों की प्रकृति को बनाते हैं ॥ २॥

## जातकस्वरूपज्ञानम् ।

**पूर्वविलग्ने यादृङ्नवभागास्तादृशी भवति मूर्तिः ।**
**यो वा ग्रहो बलिष्ठस्तत्काले तादृशी वाच्या ॥ ३ ॥**

**भट्टोत्पलः—स्पष्टार्थः ॥ ३ ॥**

वि० प्र०--अथ जातकस्य स्वरूपज्ञानमाह—**पूर्वविलग्न इति**। पूर्ववि- लग्ने उदयलग्ने क्रान्तिवृत्तस्य प्रदेशद्वयं युगपत् क्षितिजवृत्ते लगति तदेव लग्नशब्देन व्यवह्रियते। तत्र यः प्रदेश उदयक्षितिजे लग्नस्तस्योदयलग्न- मुदयं लग्नं पूर्वलग्नं वेति नाम यश्चास्तक्षितिजे स्पृशति स सप्तमलग्नमस्तलग्नं पश्चिमलग्नं वेति नाम्ना व्यवहारपथं प्रयातीति । तत्र यादृङ्नवभागो यादृशो नवमांशस्तादृशी तन्नवमांशस्य यादृशी मूर्तिस्तत्सदृशी जातकस्य मूर्तिर्देहो भवति । 'कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः । वा अथवा तत्काले जन्मसमये यो ग्रहो बलिष्ठः सर्वग्रहेभ्योऽधिकबलस्ता- दृशी तस्य ग्रहस्याकारतुल्या जातस्य मूर्तिर्वाच्या । उक्तञ्च ग्रन्थान्तरे- 'लग्ननवभागतुल्या मूर्तिर्बलसंयुताद्ग्रहाद्वापि' इति । नवांशस्वरूपाणि ग्रन्थान्तरेऽवलोक्यानि विस्तरभयान्नात्र लिखितानि ॥ ३ ॥

जन्मकालिकलग्न में जैसा नवमांश हो वैसी आकृति मनुष्य की होती है। अथवा उस (जन्म) समय में जो ग्रह बलिष्ठ हो उसके सदृश मनुष्य की मूर्ति होती है ऐसा कहना चाहिये ॥ ३ ॥

जातस्य पितुः परोक्षेऽपरोक्षे वा जन्मज्ञानम्।

**चन्द्रे लग्नमपश्यति मध्ये वा शुक्रसौम्ययोश्चन्द्रे।**
**जन्म परोक्षस्य पितुर्यमोदये वा कुजे वाऽस्ते ॥४॥**

भट्टोत्पलः—जातस्य पितुः सन्निधानमसन्निधानं चाह। यस्य जन्मलग्नं चन्द्रो न पश्यति तस्य पितुः परोक्षे जन्म वक्तव्यं शुक्रसौम्ययोर्मध्यगते चन्द्रे सति पितुःपरोक्षे जन्म वक्तव्यम्। यस्य जन्मलग्नस्थः शनैश्चरो भवति तस्य पितुः परोक्षे जन्म वक्तव्यं। यस्य लग्नात् भौमः सप्तमो भवति तस्यापि पितुः परोक्षे जन्म वक्तव्यम् ॥ ४ ॥

वि० प्र०--अथ पितुः परोक्षेऽपरोक्षे वा जातकस्य जन्मज्ञानम्। चन्द्र इति। चन्द्रे लग्नमपश्यति सति पितुः परोक्षस्य जन्म वाच्यम्। वा शुक्रसौम्ययोः सितबुधयोर्मध्ये मध्यगते चन्द्रे सति पितुः परोक्षे बालकस्य जन्म कथनीयम्। वा यमोदये यमे शनौ लग्नस्थे सति बालकः पितुः परोक्षे जात इति वक्तव्यम्। अथवा कुजे भौमे अस्ते सप्तमभावे स्थितेऽपि पितुःपरोक्षे बालकस्य जनिर्वक्तव्या। अत्र प्रथमयोगे आचार्येण बृहज्जातके विशेष उक्तः—

पितुर्जातः परोक्षस्य लग्नमिन्दावपश्यति।
विदेशस्थस्य चरभे मध्याद्भ्रष्टे दिवाकरे ॥
उदयस्थेऽपि वा मन्दे कुजे वास्तं समागते।
स्थिते वान्तः क्षपानाथे शशाङ्कसुतशुक्रयोः ॥ इति ॥४॥

(१)-चन्द्रमा लग्न को न देखता हो (२) या चन्द्रमा शुक्र और बुध के बीचमें स्थित हो (३) वा शनैश्चर लग्न में बैठा हो (४) अथवा मङ्गल लग्न से सप्तम भाव में बैठा हो तो पिता के परोक्ष में ( परदेश इत्यादि जाने पर ) बालक का जन्म होता है ॥ ४ ॥

## परजातस्य ज्ञानम् ।

**पापयुतोऽर्कः सेन्दुः पश्यति होरां न चन्द्रमपि जीवः ।**
**पश्यति सार्कं नेन्दुं यदि जीवो वा परैर्जातः ॥५॥**

**भट्टोत्पलः**—अथ परजातस्य ज्ञानमाह । चन्द्रार्कावेकराशिगतौ तत्र पापग्रहोऽङ्गारकः शनैश्चरो वा भवति तदा परजातो वक्तव्यः । अथवा चन्द्रं लग्नं बृहस्पतिर्नोभयं पश्यति न दृश्यते तदाऽपि परजातो वक्तव्यः । अथवाऽर्कचन्द्रावेकराशिगतौ जीवो न पश्यति तदाऽपि परजातो वक्तव्यः ॥ ५ ॥

वि० प्र०--अथ जारजातयोगमाह । **पापयुत** इति । इन्दुना सहितः सेन्दुः चन्द्रयुक्तोऽर्कः सूर्यः पापयुतः पापग्रहाभ्यां शनिभौमाभ्यां युतो यदि तदा जातकः परैः पित्रतिरिक्तजनैर्जात उत्पन्नो वाच्यः । होरां लग्नमिन्दुं चन्द्रमसं च जीवो गुरुर्न पश्यति नावलोकयति तदा जातको जारजातो ज्ञेयः । अथवा सार्कमर्केण सहितमिन्दुं यदि जीवो न पश्यति तदाऽपि जातकः परजातो वक्तव्यः । अत्र प्रथमयोगेऽर्केन्दू एकत्रैव पृथक्स्थौ वा पापयुतौ गुरुणा नावलोकितौ जारजातकराविति विशेषो ध्येयः ॥

उक्तञ्च शुक्रजातके—

न पश्यति गुरुश्चन्द्रं लग्नञ्च परजातकः ।
अर्केन्दू नेक्षितौ जीवैः सूर्येन्दू पापसंयुतौ ॥
एकस्थौ वा पृथक्स्थौ वा नेक्षितौ गुरुणा तथा ॥ इति ॥

अस्यापवादोऽप्यभिहितस्तत्रैव तथाहि—

सौम्यराश्यंशगे चन्द्रे गुरुराश्यंशगेऽपि वा ।
जारजातस्य योगेऽपि न परैर्जात इष्यते ॥ इति ॥

शम्भुहोराप्रकाशे च—

चन्द्रे गुरुक्षेत्रगतेऽथवा चेत्सुरेज्ययुक्तेऽन्यगृहे स्थितेऽब्जे ।
गुरोर्द्रेकाणेऽथ नवांशके वा न जारजातस्य भवेत्प्रसूतिः॥इति॥५॥

( १ ) सूर्य, पापग्रह और चन्द्रमा से युक्त हो कर किसी स्थान में बैठा हो ( २ ) लग्न तथा चन्द्रमा को बृहस्पति न देखता हो (३) सूर्य से युक्त चन्द्रमा को बृहस्पति न देखता हो तो बालक दूसरे पिता से पैदा है अर्थाज्जारज, होता है ॥ ५ ॥

सूतिकागृहद्वारज्ञानं दीपज्ञानं च।

**द्वारं वास्तुनि केन्द्रोपगाद्ग्रहाद्सति वा विलग्नर्क्षात्।**
**दीपोऽर्कादुदयाद्वर्तिरिन्दुतः स्नेहनिर्देशः ॥ ६ ॥**

भट्टोत्पलः—सूतिकागृहज्ञानं दीपज्ञानं चाह । 'प्राच्यादीशः' इत्यादिना या दिक् यस्य ग्रहस्योक्ता तस्मिन् ग्रहे केन्द्रोपगते तद्दिगभिमुखद्वारं सूतिकागृहं वक्तव्यं । बहुषु केन्द्रगतेषु यो बलवांस्तद्दिगभिमुखं वाच्यम् । अन्ये लग्नद्वादशांशराशिदिगभिमुखं वर्णयन्ति । अन्ये तदधिपदिगभिमुखं कथयन्ति । असति वा विलग्नर्क्षादिति । शून्येषु केन्द्रेषु लग्नराशेर्या दिगभिहिता तद्दिगभिमुखं द्वारं सूतिकागृहं वक्तव्यम् । दीपोऽर्कादिति । चरराशिव्यवस्थितेऽर्के संचार्यमाणो दीप आदेश्यः । स्थिरराशिस्थेऽर्के एकदेशस्थः द्विस्वभावराशिस्थे चालितः स्थापितश्चेति । उदयाद्वर्तिः आदेश्या । लग्नारम्भक्षणे क्षिप्तैका वर्तिः । लग्नावसाने सर्वा दग्धा । अन्तरालेऽनुपाततो वर्तिदग्धप्रमाणं वक्तव्यं । इन्दुतः स्नेहनिर्देश इति । यत्र राशौ चन्द्रमा व्यवस्थितः तत्र यदि प्रारम्भ एव स्थितो भवति तदा स्नेहभाजनं पूर्णं वक्तव्यम् । यद्यन्तिमभागे तदा दीपभाजनं स्नेहान्तं वक्तव्यं मध्येऽर्धे अन्यत्रानुपातः ॥ ६ ॥

वि०प्र०—अथ पूर्वादिदिङ्मुखे सूतिकागृहज्ञानं दीपज्ञानञ्चाह। **द्वारमिति** वास्तुनि सूतिकागारे केन्द्रोपगाद्ग्रहाद्द्वारं वक्तव्यम् । केन्द्रे यो ग्रहः समवस्थितस्तस्य या दिशा 'प्राच्यादीशा' इत्यादिना कथिता तद्दिगभिमुखं सूतिकागारद्वारं वाच्यम् । यदा बहवो ग्रहा केन्द्रगतास्तदा तेषु योधि-

कचलस्तद्दिगभिमुखं सूतिकागारद्वारं वक्तव्यम् । **असतीति**। असति अविद्यमानग्रहे केन्द्रे सति विलग्नर्क्षात् सूतिकागृहद्वारं वाच्यम्। लग्नराशेर्या दिगुक्ता तदभिमुखं सूतिकागारस्य द्वारं कथनीयम् । अत्र केचिल्लग्ने यो द्वादशांशस्तदभिमुखद्वारं कथयन्ति। तथा च मणीत्थः —

लग्ने यो द्विरसांशस्तदभिमुखं सूतिकागृहे द्वारम्। इति।

**दीप इति**। अर्कात्सूर्यवशात्सूर्याधिष्ठितराशिवशादित्यर्थः। दीपो वक्तव्यः। तद्यथा। चरराशिगते सूर्ये दीपः संचार्यमाणो ज्ञेयः। स्थिरराशिगते सूर्ये स्थिरः वक्तव्यः। द्विस्वभावराशिसमवस्थिते भास्करे करेण चालितः स्थापितश्चादेश्यः। स्फुटमुक्तं गर्गेण —

चरे लग्ने करे दीपः स्थिरे तत्रैव संस्थितः।
द्विस्वभावे तथा लग्ने करेण परिचालितः॥ इति।

अथार्कलग्नद्वादशांशवशाद्दीपदिशाज्ञानमप्युक्तं गर्गेण—

लग्नस्य प्रथमे भागे सूर्ये प्राच्यां प्रदीपकः।
द्वितीये च तृतीये च भवेदीशानकोणगः॥
चतुर्थे चोत्तरे वायोः कोणे पञ्चमषष्ठगे।
सप्तमे पश्चिमायां च नैर्ऋत्यां नवमेऽष्टमे॥
दशमेऽर्के दक्षिणस्यामग्निकोणे च दीपकः।
द्वादशैकादशे प्रोक्तो दीपाभावः स्वयंभुवा॥ इति।

उदयाल्लग्नवशाद्दीपवर्तिरादेश्या । लग्नारम्भकाले तत्कालप्रदत्ता वर्तिरादेश्या, मध्येऽर्धदग्धा वर्तिर्बोध्या। लग्नविरामकाले सर्वा दग्धा वर्तिरवगन्तव्या अवान्तरेऽनुपातेन ज्ञेया। 'लग्नभुक्तानुमानेन दग्धवर्तिं विनिर्दिशेत्' इत्युक्तेः। इन्दुतश्चन्द्राधिष्ठितराशिवशतः स्नेहनिर्देशः स्नेहस्य तैलस्य निर्देश आदेशः कार्यः। यस्मिन्राशौ चन्द्रमा व्यवस्थितस्तत्र यद्यारम्भ एवाधिष्ठितस्तदा तैलपूर्णं दीपभाजनं वक्तव्यम्। राशेर्मध्यभागे स्थिते चन्द्रे दीपभाजने अर्धतैलं वाच्यम्। राश्यन्त्ये

चन्द्रमसि व्यवस्थिते तैलान्तं ज्ञेयम् । अत्रापि मध्येऽनुपातः कार्यः । गर्गेण द्रेष्काणविभागेन स्नेहज्ञानमुक्तम् । तथा—

द्रेष्काणे प्रथमे चन्द्रे दीपः पूर्णो द्वितीयके ।
अर्धपूर्णो हि तैलेन तैलहीनस्तृतीयके ॥ इति ।

अत्र केनचिच्चन्द्रस्य पूर्णत्वे दीपे स्नेहस्य पूर्णत्वं क्षीणत्वे च स्नेहाभावत्वं व्याख्यातमुक्तञ्च—

'दीपः पूर्णे पूर्णः शशिनि क्षीणे क्षयस्तु तैलस्य' इति । तदयुक्तममावास्यायां सर्वेषामन्धकारे जन्मसम्भवात् ॥ इति ॥ ६ ॥

जन्म समय में जन्म लग्न से केन्द्र में जो ग्रह बैठा हो वह जिस दिशा का स्वामी हो उसी दिशा में सूतिका ( अलवात ) गृह का द्वार होता है । यदि बहुत से ग्रह केन्द्र में बैठे हों तो उन ग्रहों मे जो सब से बलवान् हो उसकी दिशा की ओर सूतिकागृह का दरवाजा होता है । किसी आचार्य के मतसे लग्नमें जो द्वादशांश हो उसराशि की दिशा में सूतिका ग्रह (सौरी घर) का द्वार होता है । यदि केन्द्र में कोई ग्रह न हो तो जन्मलग्न की राशि की दिशा के तरफ सौरीघर का द्वार होता है । सूर्य से दीपक का ज्ञान करना । जैसे यदि सूर्य चर राशि में हो तो दीपक भी चर ( हाथ में ) रहता है । सूर्य स्थिरराशि में हो तो दीपक स्थिर ( रखा हुआ ) समझना । एवं द्विस्वभावराशि में हो तो दीपक एक स्थान से उठाकर दूसरी जगह पर रखा गया कहना । लग्न से वर्ती(वाती)का ज्ञान करना । लग्नका आरम्भ हो ( थोडे अंश बीते ) हो तो दीप में पूरी वर्ती समझना । एवं लग्न का अन्त हो तो वर्ती पूरी जली जानना । बीचमें अनुपात से वर्ती का प्रमाण समझना । चन्द्रमा से तेल का ज्ञान करना । जैसे चन्द्रमा के राशि का प्रारम्भ हो तो दीप में पूर्ण तेल समझना अन्त हो तो थोड़ा अवशिष्ट तेल समझना । आधा बीता होतो आधा तेल समझना इस के अवान्तर में अनुपात ( त्रैराशिक ) से तेल का ज्ञान करना ॥ ६ ॥

## सूतिकागृहस्वरूपम् ।

**अदृढं नवमथ दग्धं चित्रं सुदृढं मनोरमं जीर्णम् ।**
**गृहमर्काद्यैर्वीर्यात् प्रतिवेश्म सन्निकृष्टैश्च ॥ ७ ॥**

भट्टोत्पलः—सूतिकागृहस्वरूपज्ञानमाह । अर्काद्यैर्ग्रहैर्वीर्याद्बलाधिक्यात् सूतिकागृहं वाच्यम् । तत्र सर्वग्रहेभ्योऽर्के बलवति सति सूतिकागृहमदृढं वाच्यम् । चन्द्रे बलवति नवं, भौमे दग्धं, बुधे चित्रं बृहस्पतावत्यन्तदृढं, शुक्रे मनोरमं, शनैश्चरे जीर्णं । प्रतिवेश्मसन्निकृष्टैश्चेति । सन्निकृष्टैः प्रतिवेश्म वक्तव्यम् । गृहदातृग्रहस्य पुरतः पश्चाद्वा ये ग्रहाः स्थितास्तेनैव क्रमेण सूतिकागृहात्प्रतिवेश्म गृहाणि वाच्यानि ॥ ७ ॥

वि०प्र०—अथ सूतिकागारस्वरूपज्ञानमाह । अदृढमिति । अर्क आदित्यस्तदाद्यैर्ग्रहैः सूर्यचन्द्रभौमबुधगुरुशुक्रशनिभिर्वीर्याद्बलाधिक्याद्गृहं सूतिकागारं वक्तव्यम् । तथाहि--सर्वग्रहापेक्षया सूर्योऽधिकबलस्तदा सूतिकागृहमदृढमसारं कथनीयम् । चन्द्रमस्यधिकबले सूतिकागृहं नवं नूतनं वाच्यम् । भौमे बलयुक्ते दग्धमग्निना दूषितं, बुधे बलवति चित्रं शिल्पिचित्रकलादिभिश्चित्रितम्, गुरौ बलिष्ठे सुदृढमत्यन्तपुष्टं, शुक्रेऽत्यन्तबले मनोरमं मनोहरं, शनैश्चरे बलयुक्ते जीर्णं पुरातनं सूतिकागृहं वक्तव्यम् । अत्र विशेषमाह वृद्धयवनः--

गृहं शशांकेन सुदारुसम्भवं मनोज्ञरूपं विबुधान्वितञ्च ।
सत्सूत्रयुक्तं मणिकुट्टिमान्वितं षड्वर्गशुद्धेन च तुङ्गगेन ॥
भौमेन दग्धं स्वनवांशकस्थे परांशकस्थे शिथिलस्वभावम् ।
क्रूरैस्तुयुक्ते यदि पापदृष्टे सौम्येक्षिते वा धानधान्ययुक्तम् ॥
सूर्येण युक्तं बहुगैरिकाद्यैः प्रभासमेतं बहुभूमिकञ्च ।
एकत्र रम्यं त्वपरत्रशीर्णं पापस्थिते वा तपनस्वभावे ॥
बुधने चोक्तं बहुवंशयुक्तं पट्टावृतं भूरिवनाढ्यमेव ।
शुचि प्रगल्भैः पुरुषैः समेतं विचित्ररूपं प्रभया समेतम् ॥
जीवेन नानाविधरत्नयुक्तं सुभूरिशालं बहुमण्डलाद्यम् ।
वितानतूलध्वजवस्त्रसङ्घैः प्रमण्डितं धातुरसैर्विशालैः ॥
स्वभावरम्यं सुविदग्धलोकं मनोरमं स्फाटिककाञ्चनाढ्यम् ।

समं विशालं सुविभक्तमार्गं विचित्ररूपं प्रवदन्ति शुक्रे ॥
जीर्णैः कुचैलैर्मनुजैः प्रयुक्तं रक्तान्वितं भानुसुते किलाथ ।
भवेद्गृहं कण्टकसंप्रयुक्तं रौद्रं करालं विकृतं बलाढ्यम् ॥इति ॥

सन्निकृष्टैर्ग्रहैः प्रतिवेश्म वक्तव्यम् । यथा—बलिनो ग्रहस्य ये संनिकृष्टाः सन्निहिताः (पार्श्ववर्तिनः) पुरः पश्चात्पार्श्वयोर्वा स्थिता ग्रहास्तस्य यादृशानि गृहाण्युक्तानि तादृशानि सूतिकागृहस्य प्रतिवेश्मगृहाणि पुरः पश्चात्पार्श्वयोः स्थितानि भवनानि वाच्यानि । उक्तञ्च—

'भवनग्रहसंयोगैः प्रतिवेश्माश्चिन्तनीयाः स्युः ।
देवालयाम्बुपावककोशविहाराद्यवस्करस्थानम् ॥
निद्रागृहं च भास्करशशिकुजगुरुभार्गवार्किबुधयोगा'दिति ॥ ७ ॥

सूर्यादि ग्रहों में से जो ग्रह सब से बलवान् हो उसके द्वारा सूतिका गृह का स्वरूप कहना । जैसे सूर्य सब से बली हो सूतिका घर अदृढ ( कमजोर ) चन्द्रमा बलवान् हो तो नया, मङ्गल सबसे बलिष्ठ होतो दग्ध (जला हुआ)बुध सबों के अपेक्षा बली हो तो चित्र ( रङ्ग बिरङ्गा ) बृहस्पति बलवान् हो तो सुदृढ़ ( अत्यन्त मजबूत ) शुक्रबली हो तो दर्शनीय, शनि बलवान् हो तो पुराना सूतिका घर ( सौरी का घर ) होता है । सूतिका गृह का ज्ञान कराने वाले ग्रह के आगे पीछे जो ग्रह हो उसके सदृश सूतिकागार के समीपवर्ती गृह ( घर ) का स्वरूप होता है ॥ ७ ॥

## गृहभूमिकाशालाज्ञानम् ।

**गुरुरुच्चो दशमस्था द्वित्रिचतुर्भूमिकं करोति गृहम् ।**
**धनुषि सबले त्रिशालं द्विशालमन्येषु यमलेषु ॥८॥**

भट्टोत्पलः—गृहभूमिकाशालाज्ञानमाह । बृहस्पतिरुच्चस्थो लग्नाद्यदि दशमस्थाने भवति तदा द्वित्रिचतुर्भूमिकं गृहं वक्तव्यम् । कथमुच्यते । यदा परमोच्चभागान् पञ्चातिक्रम्य स्थितो भवति तदा द्विभूमिकं करोति गृहं । यदा भागः पञ्चमा-

दर्वाक् भवति तदा त्रिभूमिकं करोति । यदा पञ्चमभागे भवति तदा चतुर्भूमिकं करोति । धनुषीत्यादि धनुर्धरस्थे जीवे बलोपेते तदा त्रिशालं वक्तव्यम् । द्विशालमन्येषु यमलेषु । यमलर्क्षेषु मिथुन-कन्यामीनेष्ववस्थिते जीवे बलोपेते द्विशालं गृहं वक्तव्यम् ॥ ८ ॥

वि०म०—अथसूतिकागृहशालाज्ञानमाह—**गुरुरिति** । गुरुर्बृहस्पति-रुच्चस्थः कर्कटके गतो दशमस्थो जन्मलग्नाद्दशमभावे स्थितस्तदा द्वित्रि चतुर्भूमिकं द्वित्रिचतुःशालं गृहं सूतिकागारं करोति । तद्यथा गुरौ कर्क-राशिगते परमोच्चांशानतिक्रम्याग्रिमांशगते दशमभावस्थे द्विशालं सूतिका-गृहं,परमोच्चाशादर्वागंशस्थे गुरौ दशमभावगते त्रिशालं सूतिकागारम् तथाच परमोच्चांशस्थे बृहस्पतौ दशमस्थानगते चतुःशालं सूतिकासदनं वाच्यम् । अथ द्विस्वभावराशीनां मध्ये धनूराशिगते सबलेबल युक्ते वाक्पतौ दशमस्थे त्रिशालं सूतिकालयं वक्तव्यम् । अन्येषु यमलेषु द्विस्वभावराशिषु मिथुन कन्यामीनेषु व्यवस्थिते बलवति गुरौ दशमभावगते द्विशालं सूतिकागृहं कथनीयम् । एतत्सर्वं स्फुटतयोक्तं शम्भुहोराप्रकाशे—

चेत्तुङ्गादधिकोनकेऽथ परमोच्चांशस्थिते वा गुरौ
स्वस्थे द्वित्रिचतुर्थभूमिकमदः कुर्यात्तदा मन्दिरम् ।
एवं वीर्ययुते शराशनगते तद्वत्रिशालं गृहं
चेदन्येषु यमर्क्षगेषु सुधिया वाच्यं द्विशालं तदा ॥ इति ॥ ८ ॥

बृहस्पति अपने उच्चराशि का होकर दशमभाव में पड़ा हो तो दो तीन और चार महल का मकान होता है । जैसे यदि परमोच्च का अतिप्रमाण कर गय, हो (अर्थात् छठे आदि अंशमें हो) तो दो तह का मकान होता है । एवं परमोच्च के पूर्व (चौथे आदि ) अंश पर हो तो तीन तह का, पूर्ण परमोच्च में हो तो चार तह का मकान होता है । एवं बलवान बृहस्पति धन राशि का होकर दशमस्थान में पड़ा हो तो त्रिशाल (तीन तह का) सूतिका घर होता है । तथा अन्य द्विस्व-भाव ( मिथुन-कन्या-मीन ) राशि में बलवान् बृहस्पति पड़ा हो तो द्विशाल ( दो तह का मकान ) होता है, ऐसा कहना ॥ ८ ॥

## सूतिकाखट्वाज्ञानम्।

**षट्त्रिनवान्त्याः पादाः खट्वाङ्गान्यन्तरालभवनानि।**
**विनतत्वं यमलर्क्षैः क्रूरैस्तत्तुल्यमुपघातः ॥ ९ ॥**

भट्टोत्पलः—खट्वाङ्गस्वरूपज्ञानमाह । लग्नात्षट्तृतीयनवमद्वादशराशयः खट्वायाः पादा वक्तव्याः । एतदुक्तं भवति। येन लग्नेन प्रसवस्तदुक्तायां दिशि शय्यायाः शिरः । लग्नात् द्वादशतृतीयौ पूर्व पादौ । तत्रापि तृतीयो दक्षिणः द्वादशो वामः । षट्नवमौ पश्चिमौ तत्रापि षष्ठो दक्षिणः नवमो वामः । खट्वाङ्गान्यन्तरालभवनानि । लग्नं द्वितीयं शीर्षे, चतुर्थं पञ्चमं दाक्षिणाङ्गे, सप्ताष्टौ पादभागे, दशमैकादशौ वामाङ्गे । अस्य प्रयोजनं विनतत्वमित्यादि । यस्मिन् खट्वाङ्गे यमलौ द्विस्वभावराशिर्भवति तस्मिन् भागे विनतत्वं नम्रत्वं वाच्यम् । यस्मिन् खट्वाङ्गे क्रूरग्रहो भवति तस्मिन्नङ्गे ग्रहतुल्य उपघातो वक्तव्यः। यत्रार्को भवति तदङ्गमदृढं यत्र भौमस्तद्दग्धं यत्र शनैश्चरस्तज्जीर्णमिति । अत्रापि यमलर्क्षे सौम्यग्रहः स्वामियुक्ताऽप्यविनतत्वं पापग्रहोऽपि स्वोच्चत्रिकोणस्थो मित्रगृहस्थो नोपघातः ॥ ९ ॥

वि०प्र०--अथखट्वावयवज्ञानमाह—**षडिति**। षट् षष्ठः त्रिः तृतीयः नव नवमः अन्त्यो द्वादशः लग्नादेतद्भावस्था राशयः पादा भवन्ति । खट्वाया इति शेषः । तद्यथा—यस्मिन् राशिलग्ने प्रसवस्तस्य या दिक् "अजवृषमिथुनकुलीरा' इत्यादिनोक्ता तस्यां दिशि खट्वायाः शीर्षं ज्ञेयम् । जन्मलग्नात् तृतीयद्वादशभावस्थौ राशी शीर्षदिशायाः क्रमशो दक्षिणवामौ पादौ ज्ञेयौ । नवमषष्ठभावस्थौ राशी तदितरदिशाया वामदक्षिणपादौ ज्ञेयौ । अन्तरालभवनानि उक्तस्थानानां त्रिषण्नवान्त्यानामन्तराले मध्ये यानि भवनानि तानि लग्नद्वितीयचतुर्थपञ्चमसप्तमाष्टमदशमैकादशसंज्ञकानि खट्वाया अङ्गानि भवन्ति । तत्र लग्नद्वितीयौ शीर्षभागौ, चतुर्थपञ्चमौ

दक्षिणमङ्गं, सप्तमाष्टमौ पादान्तभागौ, दशमैकादशौ वामभागौ बोध्यौ । अथास्य प्रयोजनमुच्यते—**विनतत्वमिति** । यमलद्वैर्द्विस्वभावराशिभिर्विनतत्वं ज्ञेयम् । खट्वाङ्गस्येति शेषः । यथा द्विस्वभावराशयो मिथुन-कन्या धनुर्मीना यत्र खट्वाङ्गे स्थितास्तत्राङ्गे विनतत्वं निम्नत्वं वाच्यम् । क्रूरैः पापग्रहैस्तत्तुल्य उपघातः खट्वाङ्गे वाच्यः । तद्यथा खट्वाया यस्मिन्नङ्गे पापग्रहा रविभौमशनयो व्यवस्थितास्तत्र ग्रहसदृश 'अदृढं नवमित्यादिनोक्त'उपघातो वाच्यः । यत्राङ्गे रविर्व्यवस्थितस्तत्राङ्गेऽदृढं भौमश्चेत्तदा तदङ्गं दग्धं, शनिश्चेत्तदा जीर्णं खट्वाङ्गं वाच्यम् । उक्तञ्च ग्रन्थान्तरे—

शीर्षस्याङ्घ्रिर्दक्षिणो विक्रमर्क्षं वामः पादो द्वादशर्क्षं विचिन्त्यः ।
एवं षष्ठं नवमं दक्षवामो खट्वाङ्गानां निर्णयोऽत्र स्वबुद्ध्या ॥
खट्वाङ्गे यत्र पापिष्ठास्तत्र घातस्तु तत्समः ।
वक्तव्यो दैवविदुषा विनतत्वं द्विरूपतः ॥ इति ॥

अत्रायं विशेषो ध्येयः । यत्र पापा स्वोच्च-स्वराशि-त्रिकोण-स्वमित्रराशिगतस्तत्र नोपघातः। यत्र च द्विस्वभावाराशयःस्वस्वामिसौम्ययुतदृष्टास्तत्र नावनतत्वमित्युक्तञ्च जातकचिन्तामणौ—

क्रूरैः स्यादुपघातः स्वोच्चादिगतैर्न चैवायम् ।
स्वस्वामिसौम्यदृष्टैर्द्विशरीरैर्नो विनतत्वञ्च ॥ ६ ॥

जन्म लग्न से षष्ठ, तृतीय, नवम और द्वादश राशि खट्वा ( चारपाई ) के पावा होते हैं । जिस लग्न में जन्म हो वह लग्न ( राशि ) जिसदिशा की हो उस दिशा में शय्या का शिर (मुडवार) होता है । जन्म लग्न से तृतीयराशि शिरहाने का दक्षिण पावा, द्वादशराशि शिरहाने का बाँया पावा जानना । एवं षष्ठराशि सय्या के पैताने का दक्षिण पावा, नवमराशि पैताने का बाँया पावा समझना । और ( ६।३।६।१२ ) इन राशियों के वीच की ( लग्न, द्वितीय चतुर्थ, पञ्चम, सप्तम, अष्टम दशम,एकादश मे ) राशियाँ चारपाई के अङ्ग हैं । अर्थात् लग्न और द्वितीय राशि चारपाई का शिर, चतुर्थ पञ्चम राशि दक्षिण भाग ( दाहिनी पाटी ) सप्तम-अष्टम राशि पैताने की (पाटी) तथा दशम एकादश स्थान वाये तरफ की पाटी समझना ।

द्विस्वभावराशि ( मिथुन-कन्या-धनु-मीन ) राशि जिस भाग में पड़े हों चारपाई का वह भाग नत(ऊँचा नीचा)होता है। जिस अङ्ग ( राशि ) में क्रूरग्रह वर्तमान हों सय्या के उस अङ्गमें उपघात ( टूटने इत्यादि का चिन्ह ) होता है ( यदि सूर्य बैठे हों तो वह अङ्ग कमजोर होता है, जिस अङ्ग में मङ्गल पड़े हों वह अङ्ग जला हुआ हो, एवं शनि स्थित हो तो वह अङ्ग जीर्ण पुराना होता है ) यहाँ इतना विशेष समझना कि यदि द्विस्वभावराशियाँ शुभग्रह या अपने स्वामी से युत होतो चारपाई का भाग ऊँचा नीचा नहीं होता। एवं यदि क्रूर ग्रह अपनी राशि अपने उच्च, अपने मूलत्रिकोण अपने मित्र ग्रह की राशि में पड़ा हो तो सय्या के भाग का उपघात नहीं होता है ॥ ९ ॥

## नालवेष्टितादिज्ञानम्।

**छागसिंहवृषैर्लग्ने तत्स्थे सौरेऽथवा कुजे।**
**राश्यंशसदृशे गात्रे जायते नालवेष्टितः ॥ १० ॥**

भट्टोत्पलः—स्पष्टार्थः ॥ १० ॥

वि०प्र०—अथ नालवेष्टितजन्मज्ञानमाह-छाग इति छागो मेषः सिंहवृषौ प्रसिद्धौ एषामन्यतमो राशिर्लग्नगतस्तत्र सौरे शनैश्चरे वा कुजे भौमे स्थिते राश्यंशसदृशे राशेरंशो राश्यंशस्तत्कालमुदितः स यद्राशिसम्बन्धि स राशिः कालनरस्य 'कालनरस्यावयवा' इत्यादिनोक्तो यस्मिन्नङ्गे व्यवस्थितस्तत्तुल्ये गात्रे जातस्य शरीरावयवे नालवेष्टितो जायते।किञ्चिद्विशेष उक्तः शम्भुहोराप्रकाशे—

लग्नेषु सिंहाजवृषस्थितेषु तत्स्थे कुजे सूर्यसुते च यद्वा।
सार्को र्कजो भांशसमे च गात्रे स्यादर्भको नालकवेष्टिताङ्गः। इति॥१०॥

मेष, सिंह, वृष जन्म लग्न हो और उसमें ( लग्न में ) शनि या मङ्गल बैठा होतो उस लग्न में जिस राशि का नवमांश हो उस राशि के अङ्ग में ( कालनरस्यावयवान्......इत्यादि से ) जन्म लेने वाला बालक नाल से वेष्टित होता है ॥ १० ॥

## सूतिकागृहे द्रव्यज्ञानम् ।

**अर्कादिताम्रमणिहेमशुक्तिरौप्याणि मौक्तिकं लोहम् ।**
**वक्तव्यं बलवद्भिः स्वस्थाने हेम जीवेऽपि ॥ ११ ॥**

**भट्टोत्पलः**—सूतिकागृहे द्रव्यज्ञानार्थमाह । सर्वग्रहेभ्योऽर्के बलवति सूतिकागृहे ताम्रं वक्तव्यं । चन्द्रे बलवति मणयः, भौमे सुवर्णं, बुधे शुक्तिरिति कांस्यादि, बृहस्पतौ रौप्यं, शुक्रे मुक्ताफलानि, शनैश्चरे लोहं। स्वस्थाने हेम जीवेऽपि इति । धनुर्धरमीनयोरन्यतरराशिव्यवस्थिते जीवे सर्वग्रहेभ्यो बलवति रौप्यं न वक्तव्यम् सुवर्णं वक्तव्यमिति ॥ ११ ॥

वि०प्र०—अथ सूतिकागारे ताम्रादिद्रव्यज्ञानमाह । **अर्कादिति**-अर्कादारभ्य बलवद्भिर्ग्रहैस्ताम्रादिद्रव्याणि सूतिकागारे ज्ञातव्यानि । यथा जन्मसमये सर्वग्रहेभ्यो सवितरि बलवति सूतिकागृहे ताम्रम् वक्तव्यम्। चन्द्रे बलिष्ठे मणयो रत्नानि ज्ञेयानि 'रत्नं मणिर्द्वयो रश्मजातौ मुक्तादिकेऽपि चे'त्यमरः । भौमे बलयुक्ते हेम सुवर्णं वाच्यम् । बुधे शुक्तिद्रव्यं काश्यादिः । बृहस्पतौ बलयुते रजतानि रूप्याणि 'दुर्वर्णं रजतं रूप्य खर्जूरं श्वेतमित्यपी' त्यमरः ; वक्तव्यानि । शुक्रे बलोपेते मौक्तिकं वाच्यम् । शनौ बलवति लौहं वक्तव्यम् । जीवे गुरौ स्वस्थाने धनुर्धरमीनयोरेकतरराशौ व्यवस्थिते सर्वग्रहापेक्षयाऽधिकबलयुते हेम सुवर्णं वाच्यम् न तु रूप्याणीति ॥ ११ ॥

**सब ग्रहों के अपेक्षा यदि सूर्य बलवान् हो तो सूतिकागार ( सौरीका घर ) में ताम्र, चन्द्रमा बलवान् हो तो मणि, मङ्गल बली होतो सूतिकागार में सुवर्ण, बुध बली हो तो शुक्ति ( सिपी ), बृहस्पति बलवान् हो तो रौप्य ( चान्दी ), शुक्र बलवान् होतो मोती, शनि बलवान् हो तो लोह कहना । यदि बलयुक्त बृहस्पति अपनी ( धनु–मीन ) राशि में पड़ा हो तो चाँदी नहीं कहना किन्तु सुवर्ण जानना ॥ ११ ॥**

उपसूतिकाज्ञानम्।

**शशिलग्नान्तरसंस्थग्रहतुल्याः सूतिकाश्च वक्तव्याः।**
**उदगर्धेऽभ्यन्तरगा बाह्याश्चक्रस्य दृश्येऽर्धे ॥ १२ ॥**

इति श्रीवराहमिहरकृते लघुजातके
सूतिकाध्यायः षष्ठः ॥ ६ ॥

भट्टोत्पलः—उपसूतिकाज्ञानमाह। लग्नादारभ्य चन्द्रमा यस्मिन् राशौ व्यवस्थितस्तदन्तरे यावन्तो ग्रहा व्यवस्थितास्तावत्संख्या उपसूतिका वक्तव्याः। वक्ष्यमाणायुर्दायाध्यायात्तासां द्वित्रिगुणत्वादि वक्तव्यम्। वक्ष्यमाणवर्गोत्तमस्वराशिद्रेष्काणनवांशे द्विगुणं वक्रोच्चयोस्त्रिगुणितं द्वित्रिगुणत्वे सकृत् त्रिगुणमिति सूतिकानामुपसूतिकानां ग्रहरूपजातिवयोवर्णरूपादयो वक्तव्याः। उदगर्ध इत्यादि। उत्तरदिग्व्यवस्थितमुदगर्धं अदृश्यमित्यर्थः। तस्मिन्नदृश्येऽर्धे लग्नचन्द्रान्तरगतानां मध्ये यावन्तो ग्रहा व्यवस्थितास्तावन्त्य उपसूतिका आगारे एव वक्तव्याः। चन्द्रलग्नान्तरगतानां ग्रहाणां मध्ये यावन्तो ग्रहा दृश्ये चक्रस्यार्द्धे व्यवस्थितास्तावन्त्य उपसूतिकाः सूतिकागाराद्बहिर्वक्तव्याः ॥ १२ ॥

इति श्रीभट्टोत्पलविरचितायां लघुजातकटीकायां
सूतिकाऽध्यायः षष्ठः ॥ ६ ॥

वि०प्र०—अथोपसूतिकासंख्याज्ञानमाह—**शशीति**। शशिलग्नान्तरसंस्थग्रहतुल्याः शशिलग्नयोरन्तकाले यावत्संख्याका ग्रहाः स्थितास्तावत्य उपसूतिका सूतिकाया सहायिकास्त्रियो वक्तव्याः। लग्नस्यानुदितांशादारभ्य सप्तमराशेर्लग्नोदितांशतुल्यांशपर्यन्तमदृश्यं चक्रार्द्धम् उदगर्द्धाख्यमिति। शेषं पूर्वाख्यचक्रार्द्धं दृश्यचक्रार्द्धम्। तत्रोदगर्द्धेऽदृश्यचक्रार्द्धे यावन्तो ग्रहाःसमवस्थितास्तावत्य उपसूतिका अभ्यन्तरगा सूतिकागारमध्यगा

वाच्याः । यावन्तो ग्रहा दृश्येद्र्धे व्यवस्थितास्तावत्य उपसूतिकाः सूतिकागृहाद्बहिर्वाच्याः । अत्र केचिदाचार्या दृश्यचक्रार्द्धस्थैर्ग्रहैः सूतिकागाराभ्यन्तरगा अदृश्यचक्रार्द्धस्थैर्बाह्यगा उपसूतिका इति व्यावर्णयन्ति । तथा हि जीवशर्म्मा—

उदयशशीमध्यस्थैर्ग्रहैस्युरुपसूतिकास्तत्र ।
उदगर्द्धस्थैर्बाह्या दक्षिणगैरन्तरे ज्ञेयाः ॥ इति ॥

तदाचार्यस्य नाभिमतम् । बहुवाक्याऽनुरोधात् । तदाह सूर्यजातके—

'चन्द्रलग्नान्तरस्थैर्हि ग्रहैर्वाच्याश्च योषितः ।
मध्ये षट्के मध्यगास्ता बाह्ये षट्के च बाह्यगाः ॥' इति ॥

समुद्रजातकेपि—

यावन्तः शशिलग्नान्तर्ग्रहास्तत्संख्यसूतिकाः ।
उत्तरे मध्यगा बाह्ये बाह्यास्तत्समलक्षणाः ॥ इति ॥

कल्याणवर्मापि अमुमेवार्थं स्वीकुर्वन् किञ्चिद्विशेषमाह—

शशिलग्नविवरयुक्तग्रहैस्तुल्याः सूतिकाश्च वक्तव्याः ।
अनुदितचक्रार्द्धयुतेरन्तर्बहिर्नान्यथा त्वेके ॥
लक्षणरूपविभूषणयोगास्तासां शुभैर्योगात् ।
क्रूरैर्विरूपदेहाः लक्षणहीनाश्च रौद्रवलिनाश्च ॥
मिश्रैर्मध्यमरूपा बलसहिते सर्वमेतदवधार्यम् ॥ इति ॥

अत्र वक्ष्यमाणायुर्दायाध्यायोक्तेन वर्गोत्तमस्वराशि इत्यादिना(८।३) तासां द्वित्रिगुणत्वादिबोध्यम् । तदाह शम्भुहोराप्रकाशे—

वक्रोच्चसंस्थे त्रिगुणाः स्वराशौ स्वके नवांशे द्विगुणाः स्वबुद्ध्या ।
नीचास्तगेद्धमुपसूतिकाख्या होराविदैर्द्वित्रिगुणे सकृद्वा ॥ इति ॥

जन्मलग्नवशादप्युपसूतिकाज्ञानमुक्तं ग्रन्थान्तरे । तत्रैव द्रष्टव्यम् विस्तरभिया नोल्लिखितमत्र ॥ १२ ॥

इत्याजमगढ़मण्डलान्तर्गतब्रह्मपुरग्रामाभिजनश्रीपं० धर्मदत्तद्विवेदिसूनु-
ज्यौ०आ०प०विन्ध्येश्वरीप्रसादद्विवेदिकृतायां लघुजातकस्य
बालबोधिनीटीकायां सूतिकाध्यायः षष्ठः समाप्तः ॥६॥

चन्द्रमा और लग्न के बीच में जितने ग्रह हों उतने ही उपसूतिका (सूतिका की सहायक स्त्रियाँ) होती हैं। जो ग्रह अपने वर्गोत्तम अपनी राशि, अपने द्रेष्काण, अपने नवमांश में बैठा हो तो उपसूतिकाओंकी संख्या द्विगुणित होती है, जो ग्रह वक्री या उच्चस्थ होतो त्रिगुणित जहाँ एक बार द्विगुणित दूसरीवार त्रिगुणित संख्या प्राप्त हो वहाँ एकही बार त्रिगुणित संख्या समझना। सूतिका और उपसूतिका की जाति, वय, वर्ण, स्वरूप इत्यादि उन ग्रहों के सदृश होता है। लग्न और चन्द्रमा के मध्यवर्ती ग्रहों में से जितने ग्रह अदृश्य चक्रार्द्ध में पड़े हों उतनी उपसूतिकाये घरके अन्दर और जितने ग्रह दृश्यचक्रार्द्ध में स्थित हों उतनी स्त्रियाँ सूतिकागार के वाहर होती हैं ॥ १२ ॥

इति श्री प० विन्ध्येश्वरीप्रसादद्विवेदि कृतायां लघुजातकस्य हिन्दीटीकायां सूतिकाध्यायः षष्ठः समाप्तः ॥६॥



(१)लग्न के अनुदित अंश और (२।३।४।५।६) भाव तथा लग्नोदितांश तुल्य सप्तम राशिके अंश ये अदृश्य चक्रार्द्ध कहे जाते हैं क्यों कि यह भाग क्षितिज वृत्त के नीचे रहता है. शेष भाग क्षितिज वृत्त के ऊपर रहने के कारण दृश्य चक्रार्द्ध कहा जाता है।

# अथारिष्टाध्यायः ॥ ७ ॥



## अरिष्टयोगः ।

**षष्ठेऽष्टमे तु चन्द्रः सद्यो मरणाय पापसंदृष्टः ।**
**अष्टाभिः शुभदृष्टो वर्षैर्मिश्रैस्तदर्द्धेन ॥ १ ॥**

भट्टोत्पलः—अथारिष्टाध्यायं व्याख्यास्यामः ॥ तत्रारिष्टयोगमाह । यस्य जन्मलग्नात् षष्ठस्थाने यदि चन्द्रमा भवति अथवाऽष्टमे सौम्यग्रहैरदृश्यमानः पापग्रहैर्दृश्यते तदा जातस्य सद्यो मरणं वक्तव्यम् । अथवा षष्ठाष्टमे चन्द्रमाः पापग्रहेण न दृश्यते सौम्येन दृश्यते तदा जातस्य वर्षाष्टमे मरणं वक्तव्यम् ।अथवा षष्ठाष्टमे चन्द्रमाः सौम्येन दृश्यते पापेन च दृश्यते तदा जातस्य वर्षचतुष्टयेन मरणं वक्तव्यम् । अथ षष्ठाष्टमगश्चन्द्रमाः न कश्चिद् दृश्येत तदा योग एव न भवति ॥ १ ॥

वि०प्र०—अथारिष्टाध्यायो व्याख्यायते । तत्र चन्द्रवशादरिष्टयोगमाह— **षष्ठ इति** । जन्मलग्नात् षष्ठे वाष्टमे स्थाने स्थितश्चन्द्रः पापसंदृष्टः पापैः संदृष्टः पूर्णदृष्ट्यावलोकितः सद्यो झटिति मरणाय मृत्यवे भवति । बालकस्येतिशेषः । अर्थात्षष्ठे वाष्टमे स्थितश्चन्द्र पापग्रहदृष्ट :शुभग्रहेण नावलोकितस्तदा झटिति जातस्य मरणं करोतीत्यर्थं ।एवं षष्ठेऽष्टमे वा व्यवस्थितश्चन्द्रः शुभग्रहैरवलोकितः पापग्रहेणानवलोकितस्तदाऽष्टाभिर्वर्षैः बालकस्य मृत्युकारको भवति । अथवा मिश्रैस्तदर्द्धेन षष्ठाष्टमभावगतश्चन्द्रो मिश्रैः शुभैः पापैश्च विलोकितस्तदा तदर्धेन तस्य वर्षाष्टकस्य अर्धं तदर्थं तेन वर्षचतुष्केन जातस्य मृत्युविधायको भवति । सारावल्यां कल्याण वर्मणा केवलं षष्ठाष्टमगते चन्द्रे वर्षान्मरणं तथा न्यूनग्रहैरनुपाततो वर्षज्ञानं कार्यमित्युक्तम् । तथा हि—

वर्षान्मारयति शशी षष्ठाष्टमराशिसंस्थितो लग्नात् ।
सद्यः क्रूरैर्दृष्टः सौम्यैरब्दाष्टकाच्चैव ॥
अशुभशुभैः सन्दृष्टे वर्षचतुष्केण निर्दिशेदन्तम् ।
अनुपातः कर्तव्यः प्रोक्तादूनैर्ग्रहैर्दृष्टे ॥ इति ॥

यस्य जातस्य शुक्लपक्षे रात्रौ जन्म कृष्णपक्षे दिवाजन्म, तस्य लग्नात्षष्ठाष्टमचन्द्रः गतोऽपिक्रमेण शुभाशुभैरवलोकितश्चत्तदा न मरणाय भवतीत्युक्तं माण्डव्येन–

पक्षेसिते भवति जन्म यदि क्षपायां
कृष्णे तथाहनि शुभाशुभदृश्यमानः ।
तं चन्द्रमा रिपुविनाशगतोऽपि यत्ना-
दापत्सु रक्षति पितेव शिशुं न हन्ति ॥ १ ॥

जन्मलग्न से छठवें आठवें स्थान में पड़ा हुआ चन्द्रमा पापग्रहों से देखा जाता हो तो बालक की सद्यः(तुरन्त)मृत्यु होती है। अथवा षष्ठ और अष्टमराशिस्थ चन्द्रमा को शुभ ग्रह देखते हों पापग्रह न देखते हों तो बालक की मृत्यु आठवें वर्ष में होती है। और एवं षष्ठ-अष्टमभावगत चन्द्रमा को मिश्र ( शुभ और पाप दोनों ) ग्रह देखते हों तो चौथे वर्ष में बालक मृत्यु को पाता है ऐसा जानना ॥ १ ॥

## अथारिष्टान्तरम् ।

**शशिवत्सौम्याः पापैर्वक्रिभिरवलोकिता न शुभदृष्टाः ।
मासेन मरणदाः स्युः पापजितो लग्नपश्चास्ते ॥२॥**

भट्टोत्पलः–अरिष्टान्तरमाह । शशिना तुल्यःशशिवत्सौम्याः एतदुक्तं भवति लग्नात् षष्ठ स्थाने अष्टमेऽपि वा कश्चित् सौम्यग्रहो भवति स च पापग्रहेण वक्रगतेन दृश्यते वक्रग्रहणमशेषबलोपरक्षणार्थं । एवं जाते बलिना ग्रहेण पापेन दृश्यते न चाप्येकेन सौम्यग्रहेण दृश्यते तदा जातस्य मासेन मरणं वक्तव्यम्।पापजितो लग्नपश्चास्त इति यस्य जन्मलग्नाधिपतिः पापसमागतो पापग्रहगेहे दृश्यते वा जितः स लग्नात् सप्तमे यदि भवति तदा मासेन मरणं

वक्तव्यम् । जितलक्षणमुच्यते । ' दक्षिणदिक्स्थः पुरुषो वेमथुर-प्राप्य सन्निवृत्तोऽणुः । अधिरूढो विकृतो निःप्रभो विवर्णश्च य स जितः ' इति ॥ २ ॥

वि०प्र०—अथारिष्टान्तरमाह—**शशिवदिति**। शशिवच्छशिना सदृशः यथा शशी षष्ठाष्टमगतःपापग्रहैरवलोकितः सद्यो मरणाय भवति तथैव सौम्या बुधबृहस्पतिशुक्रा अपि षष्ठेऽष्टमे वा स्थिताः वक्रिभिरशेषबलसंयुक्तैः पापैः पापग्रहैः रवि-भौम-शनैश्चरैः अवलोकिता न शुभदृष्टा शुभग्रहैर्नावलोकितास्तदा मासेन जातस्य मरणदा मृत्युदा भवन्ति । एवं लग्नपो लग्नाधिपतिः पापजितः पापग्रहैर्जितः पराजितः लग्नादस्ते सप्तमस्थाने गतस्तदा च शब्दान्मासेन मरणदाः स्युः । उक्तञ्च—

सौम्याः षष्ठाष्टमगाः पापैर्वक्रोपसङ्गतैर्दृष्टाः ।
मासेन मृत्युदास्ते यदि न शुभैस्तत्र संदृष्टाः ॥
होराधिपतिर्द्यूने पापजितो मरणमेव विदधाति ।
मासेन जन्मनाथस्तद्वच्चन्द्रो न शुभदृष्टः ॥

जितलक्षणमुच्यते— ।

दक्षिणदिक्स्थः परुषो वेपथुरप्राप्य सन्निवृत्तोऽणुः ।
अधिरूढो विकृतो निष्प्रभो विवर्णश्च यः स जितः ॥

अस्यार्थः—भौमादीनां मिथो युद्धसमागमे दक्षिणदिक्स्थः परुषो रूक्षः कान्तिरहितः वेपथुः कम्पमानः अप्राप्य सन्निवृत्तः अन्यग्रहमप्राप्य प्रतीपगतिमापन्नः अणुरस्थूलः अधिरूढोऽन्यग्रहेणाक्रान्तः विकृतः वैकृतिं गतः निष्प्रभः कान्तिरहितो विवर्णः वर्णरहितो यो ग्रहः स जितः जितसंज्ञको भवति । 'पापयुतो लग्नपश्चान्ते' इति पाठे लग्नपः लग्नाधीशः पापग्रहैर्युतो जन्मलग्नाद्द्वादशभावस्थस्तदा जातस्य मासेन मृत्युदो भवतीति ॥ २ ॥

**कोई शुभग्रह चन्द्रमा के नाईं स्थित होकर अर्थात् कोई शुभग्रह जन्मलग्न से या छठवें आठवें भाव में बैठा हुआ वक्री पापग्रह से**

देखा जाता हो शुभग्रह से न देखा जाता हो तो एक मास में बालक को मृत्युदायक होता है। ऐसे ही यदि जन्मलग्न का स्वामी पापग्रह से पराजित होकर ( पापग्रह के साथ उनकी राशि में स्थित होकर यदि पराजित हो ) जन्मलग्न से सप्तम भाव में पडा होतो भी एक महीने में बालक को मृत्युदायक होता है। 'पापयुतो लग्नपश्चान्ते, इस पाठ में— जन्मलग्न का स्वामी पापग्रह सेयुक्त होकर जन्मलग्न से द्वादश भाव में बैठा हो तो भी एक मास में बालक की मृत्यु होती है ॥ २ ॥

### अरिष्टान्तरम्।

**राश्यन्तस्थैः पापैः सन्ध्यायां हिममयूखहोरायाम्।**
**मृत्युः प्रत्येकस्थैः केन्द्रेषु शशाङ्कपापैश्च ॥ ३ ॥**

भट्टोत्पलः—अरिष्टान्तरमाह। यत्र यत्र राशौ पापग्रहो व्यवस्थित स नवमे नवांशके स्थितः एवं सर्वे ग्रहाः पापा यदा राश्यन्तस्था भवंति संध्याकालश्च भवति तदा जातस्य मृत्युर्भवति संध्यालक्षणम्।

'अर्धास्तसमयात्सन्ध्या व्यक्ती भूता न तारका यावत्।
तेजःपरिहानिमुखाद्भानोरर्धोदयं यावत् ॥' इति ॥

तस्मिन्सन्ध्याकाल इति प्रत्येकस्थैः केंद्रेषु शशाङ्कपापैश्चेति चतुर्षु केन्द्रेषु यथा तथाऽर्कचन्द्र भौमशनैश्चराणामन्यतमो भवति तदा जातस्य मृत्युर्वक्तव्यः॥ ३ ॥

वि०प्र०—अथारिष्टान्तरद्वयमाह। **राश्यन्तस्थैरिति**—पापैः पापग्रहैः क्षीणेन्दुसूर्यभौमशनिभी राश्यन्तस्थैः राशेरन्तोऽवसानस्तत्र स्थितैर्यत्र कुत्र राशौ नवमे नवमांशे स्थितैः सन्ध्यायां सन्ध्यालक्षणमुक्तं ग्रन्थकृता स्वसंहितायाम्—

अर्धास्तमितानुदितात्सूर्यादस्पष्टभं नभो यावत्।
तावत्सन्ध्याकालश्चिह्नैरेतैः फलं चास्मिन् ॥ इति ॥

गर्गेण तत्प्रमाणमप्युक्तम्—

अहोरात्रस्य यः सन्धिः सा च सन्ध्या प्रकीर्तिता ।
द्विनाडिका भवेत्सार्धुयावदाज्योतिदर्शनम् ॥ इति ॥

नारदेन घटिकात्रयं तत्प्रमाणं प्रोक्तम्—

अर्द्धास्तमनसन्ध्या हि घटिकात्रयसम्मिता ।
तथैवार्द्धोदयात्प्रातर्घटिकात्रयसम्मिता ॥ इति ॥

तत्रप्रातःसायंसन्ध्याकाले हिममयूखहोरायाम् हिमा मयूखा रश्मयो यस्य स हिममयूखश्चन्द्रस्तस्य होरायां राश्यर्द्धे यदि जन्म भवेत्तदा जातस्य मृत्युर्मरणं वक्तव्यम्। एवं शशाङ्कपापैः शश अङ्कं चिह्नं यस्मिन्स शशाङ्कश्चन्द्रः पापाः सूर्यभौमशनयः शशाङ्कश्चते पापाश्चतै स्तथोक्तैः केन्द्रेषु लग्नचतुर्थसप्तमदशमेषु चतुर्षु स्थानेषु यथा सम्भवं व्यवस्थितैश्चकाराद्बालकस्य मृत्युर्वाच्यः । अयमेव श्लोकः सारावल्यामप्युपलभ्यते ॥ ३ ॥

किसी भी राशि के अन्त में (नवम नवमांश में) सब पाप ग्रह पड़े हों और सन्ध्या काल का समय हो और चन्द्रमा का होरा हो वा चारों केन्द्रों में पापग्रह ( सूर्य-भौम-शनि ) और चन्द्रमा पड़े हों तो भी मृत्यु होती है ॥ ३ ॥

## अरिष्टयोगद्वयम् ।

**चक्रप्राक्पश्चार्द्धे पापशुभैः कीटभोदये मृत्युः ।**
**निधनचतुष्टयगैर्वा क्रूरः क्षीणे शशिन्युदये ॥ ४ ॥**

भट्टोत्पलः—अरिष्टयोगद्वयमाह । यावानंशो लग्नस्याऽभ्युदितस्तावत्संख्याकाद्दशमराशेरंशादारभ्य यावच्चतुर्थस्यैवराशेस्तावत्संख्यैवांशस्तावच्चक्रस्य पूर्वार्द्धं द्वितीयमपरार्धं ज्ञेयम् । यत्र यदा चक्रस्य पूर्वार्द्धे सर्वे पापा व्यवस्थिता भवंति अपरार्धे च यदा सौम्याः सर्वे व्यवस्थिता भवंति वृश्चिककीटयोरन्यतमं च लग्नं भवति तदा जातस्य मृत्युर्भवति। निधनचतुष्टयेत्यादि । अष्टमके-

न्द्रगैर्यथा तथा पापैः क्षीणे चन्द्रमसि लग्ने सति यस्य जन्म भवति स म्रियते ॥ ४ ॥

वि०प्र०–अथान्यदरिष्टयोगद्वयमाह–**चक्र इति**–चक्रपावपश्चार्द्धे चक्रस्य भगणस्य प्रागर्द्धे पश्चार्द्धे च यथाक्रमं पापशुभैर्व्यवस्थितैः चक्रस्य पूर्वार्द्धे गतैः पापग्रहैः परार्द्धस्थितैः सर्वशुभग्रहैरित्यर्थः। कीटभोदये कीटस्य कर्कटवृश्चिकयोरन्यतरस्योदये लग्ने सति जातस्य मृत्युर्भवति। अत्रैतदुक्तं भवति। लग्नस्यानुदितभागतुल्यं लग्नचतुर्थराशिभागमारभ्य पञ्चमषष्ठसप्तमाष्टमनवमराशयो दशमराशेर्लग्नोदितांशतुल्या अंशाश्चक्रस्य पश्चिमार्द्धम्। अवशिष्टं पूर्वार्द्धम्। तत्र चक्रस्य पूर्वार्द्धे पापग्रहाः परार्द्धे सर्वे शुभग्रहाः समवस्थिता भवन्ति कर्कट-वृश्चिकयोरन्यतरलग्नं च भवति तदा जातस्य मृत्युर्वाच्यः। उक्तञ्च कश्यपेन––

चक्रपूर्वापरार्द्धेषु क्रूरसौम्येषु कीटभे।
लग्नगे निधनं याति नात्र कार्या विचारणा ॥ इति ॥

कुत्रचित्कीटशब्देन वृश्चिकः कुत्रचिच्च कीटशब्देन जलचरराशयो गृहीता परन्त्वत्र पूर्वाचार्योक्तवचनस्वरसात् कर्कटवृश्चिकयोरेव ग्रहणं कृतमाचार्येण। तथा हि बादरायणः–

पूर्वापर भागगतैः शुभाशुभैरलिनि॰कर्कटे लग्ने।
जातस्य शिशोर्मरणं सद्यः कथयन्ति यवनेन्द्राः ॥ इति ॥

सारावलीकारेण कीटशब्देन वृश्चिकस्यैव ग्रहण कृतम्। तथाहि––

चक्रस्य पूर्वभागे पापाः सौम्यास्तथेतरे चैव।
वृश्चिकलग्ने जाता गतायुषो वज्रमुष्टियोगेऽस्मिन् ॥ इति ॥

निधनचतुष्टयगैः निधनमष्टमं चतुष्टयं केन्द्रस्थानानि तत्र गतैः क्रूरैः पापग्रहैः क्षीणे शशिनि चन्द्रमस्युदये लग्नगते जातस्य जातकस्य मरणं वाच्यम्। कल्याणवर्मा तु 'सौम्यग्रहानवलोकिते एवंविधे योगे मृत्युर्भवती' ति विशेषमाह। तथा च तद्वाक्यम्।

क्षीणे शशिनि विलग्ने कण्टकनिधनाश्रितैस्तथा पापैः।
सौम्यादृष्टे मृत्युः सद्यः सत्यस्य निर्देशः ॥ इति ॥ ४ ॥

चक्र ( भगण ) के [1]पूर्वार्द्ध में पापग्रह उत्तरार्द्ध में शुभग्रह स्थित हों और कर्कट या वृश्चिक लग्न का उदय हो तो बालक की मृत्यु शीघ्र होती है अथवा अष्टम और केन्द्र (१।४।७।१० ) में पापग्रह पड़े हों तथा लग्नमें क्षीणचन्द्रमा स्थित हों तो भी शीघ्र ही बालक की मृत्यु होती है ॥ ४ ॥

## अरिष्टान्तरम् ।

**सप्ताष्टान्त्योदयगे शशिनि सपापे शुभेक्षणवियुक्ते ।**
**न च कण्टकेऽस्ति कश्चिच्छुभस्तदा मृत्युरादेश्यः ॥५॥**

**भट्टोत्पलः**—अरिष्टान्तरमाह । सप्ताष्टद्वादशानामेकतमेऽपि स्थाने लग्ने वा चन्द्रःपापग्रहयुतो भवति । शुभग्रहेण बुधगुरुशुक्राणामेकतमेनापि न दृश्यते न च युक्तो न च केन्द्रेषु शुभग्रहः कश्चिदेवंविधे योगे जातस्य मरणमादेश्यम् ॥ ५ ॥

वि०प्र०—अथारिष्टान्तरमाह—**सप्तेति** । सप्ताष्टौ प्रसिद्धौ, अन्त्यं द्वादशमुदयं लग्नमेतेषामेकतमे स्थाने सपापे पापग्रहैः सहिते शशिनि चन्द्रे शुभेक्षणवियुक्ते शुभानामीक्षणमवलोकनं तेन वियुक्ते शुभग्रहदृष्टिरहिते इत्यर्थः। एवंविधे योगे यदा कश्चिच्छुभग्रहः कण्टके केन्द्रे नास्ति न तिष्ठति तदा (जातस्य) मृत्युरादेश्यः कथनीयः । तथाचोक्तं कल्याणवर्मणा—

व्ययाष्टसप्तोदयगे शशाङ्के पापेन युक्ते शुभदृष्टिहीने ।
केन्द्रेषु सौम्यग्रहवर्जितेषु प्राणैर्वियुक्तो भवति प्रजातः ॥ ५ ॥

जन्म लग्न से सप्तम-अष्टम-द्वादश और लग्न में से किसी स्थान में पाप ग्रहों से युक्त चन्द्रमा पड़ा हो शुभग्रह से न देखा जाता हो और कोई शुभग्रह ( बुध-बृहस्पति-शुक्र ) केन्द्र ( १।४।७।१०) में न पड़े हो तो भी बालक की मृत्यु का आदेश करना ॥ ५ ॥

---

(१)लग्न के जितने अंश उदित हों उतने अंश चतुर्थ भावमें छोड कर चतुर्थ के शेष अंश और ५।६।७।८।६ भाव तथा लग्न में 'उदित अंश के बराबर दशम राशि के अंशों की पूर्वार्द्ध संज्ञा और शेष की उत्तरार्द्ध संज्ञा है।

अन्यच्चारिष्टयोगद्वयम् ।

**चतुरस्रे सप्तमगः पापान्तस्थः शशी मरणदाता ।**
**उदयगतो वा चन्द्रः सप्तमराशिस्थितैः पापैः ॥ ६ ॥**

भट्टोत्पलः—अरिष्टयोगद्वयमाह । लग्नाच्चन्द्रमाश्चतुर्थे स्थानेऽष्टमे वा सप्तमे वा स्थितस्तत्र च पापग्रहयोर्मध्यगतस्तदा जातस्य मरणं करोति इत्यर्थः । उदयगतो वेत्यादि । लग्ने चंद्रमा भवति सप्तमस्थाः पापाश्च भवन्ति तदा जातस्य मृत्युर्वक्तव्यः ॥६॥

वि०प्र०—अथान्यरिष्टयोगमाह—**चतुरस्र इति** । जन्मलग्नाच्चतुरस्रे चतुर्थे स्थानेऽष्टमे भवने वा गतःसप्तमगःसप्तमस्थानगतःपापान्तस्थः पापयोरन्तगतः शशी चन्द्रो मरणदाता बालकस्य मृत्युं करोतीत्यर्थः । उक्तञ्च—

घूनचतुरस्रसंस्थे पापद्वयमध्यगे शशिनि जातः ।
विलयं प्रयाति नियतं देवैरपि रक्षितो बालः ॥

अथवा चन्द्र उदयगतो जन्मलग्नगतः सप्तमराशिस्थितैः पापैः जातकस्य मृत्युदाता भवति ॥ ६ ॥

जन्म समय में चन्द्रमा चतुर्थ-अष्टम-सप्तम इन स्थानों में से किसी स्थान में स्थित हो कर पापग्रहों के बीच में पड़ा हो तो बालक को मृत्यु देने वाला होता है। अथवा लग्न में चन्द्रमा पड़ा हो तथा जन्मलग्न से सप्तम राशि में पापग्रह पड़े हो तो भी बालक की मृत्यु दायक होता है ॥ ६ ॥

अरिष्टान्तरम् ।

**क्षीणेन्दौ द्वादशगे लग्नाष्टमराशिसंस्थितैः पापैः ।**
**सौम्यरहितैश्च केन्द्रे सद्यो मृत्युर्विनिर्देश्यः ॥ ७ ॥**

भट्टोत्पलः—अरिष्टान्तरमाह । यस्य जन्मलग्नाद्द्वादशस्थाने क्षीणश्चन्द्रो भवति लग्नाष्टमराशौ यदि पापा व्यवस्थिताः सौम्यरहितानि केन्द्राणि भवन्ति तदा जातस्य सद्यो मरणं वक्तव्यम् ॥ ७ ॥

वि०प्र०—अथारिष्टान्तरमाह—क्षीणेन्दाविति। क्षीणेन्दौ क्षीणचन्द्रे द्वादशगे जन्मलग्नाद्द्वादशराशिगते लग्नाष्टमराशिसंस्थितैः पापैः, पापग्रहैः रविभौमशनैश्चरैः सौम्यरहितैः सौम्यैः रहितानि तानि तैः शुभग्रहवर्जितैः केन्द्रैः सद्यः झटिति मृत्युर्विनिर्देश्यः कथनीयः। बालकस्येति शेषः। उक्तञ्च सारावल्याम्—

होरानिधनास्तगतैः पापैः क्षीणे व्यवस्थिते चन्द्रे।
जातस्य भवेन्मरणं सद्यः केन्द्रेषु चेन्न शुभाः॥ ७॥

क्षीणचन्द्रमा जन्मलग्न से वारहवें स्थान में वैठा हो और लग्न-अष्टम राशि में पापग्रह पड़े हों तथा किसी केन्द्र में कोई शुभग्रह न वैठे हों तो वालक की मृत्यु वहुत शीघ्र होती है॥ ७॥

अन्यच्च।

**सोपप्लवे शशाङ्के सक्रूरे लग्नगे कुजेऽष्टमगे।**
**मृत्युर्मात्रा सार्द्धं चन्द्रवदर्के सशस्त्रेण॥ ८॥**

**भट्टोत्पलः**—अरिष्टान्तरमाह। सह उपप्लवेन वर्तते सोपप्लवः चन्द्रग्रहणकाले लग्नगते चन्द्रमसि तत्रैव शनैश्चरे पापे व्यवस्थिते लग्नादष्टमगते च भौमे जातः शिशुर्म्रियते मात्रा सहैव। चन्द्रवदर्के सशस्त्रेणेति। चन्द्रेण तुल्यं चन्द्रवत् एतदुक्तं भवति आदित्यग्रहणकाले अर्को लग्नगतो भवति तत्रैव शनैश्चरः पापग्रहः अष्टमो भौमः तदा जातस्य तन्मातुश्च शस्त्रतो मृत्युर्भवति॥ ८॥

वि०प्र०—अन्यदरिष्टयोगमाह—**सोपप्लव** इति। शशाङ्के चन्द्रमसि सोपप्लवे राहुणा ग्रस्ते चन्द्रग्रहणकाल इत्यर्थः। 'राहुग्रस्ते त्विन्दौ च पूष्णि च। सोपलवो परक्तौ द्वौ' इत्यमरः। सक्रूरे क्रूरेण शनिना सहिते लग्नगे जन्मलग्नगते तथा कुजे भौमेऽष्टमगे जन्मलग्नादष्टमस्थानगते सति मात्रा जनन्या सार्द्धं मृत्युर्भवति। जातस्येतिशेषः। 'जनयित्री प्रसूर्माता जननी' इति, 'सार्द्धन्तु साकं सत्रा समं सह' इति चामरः। चन्द्रवत् चन्द्रतुल्ययोगयुतेऽर्के सूर्ये शस्त्रेणाऽऽयुधेन मृतिर्वाच्या। एतदुक्तं भवति। सूर्यग्रहणकाले सूर्ये लग्नगते तत्रैव क्रूरग्रहे शनौ बुधे वा

व्यवस्थिते कुजेऽष्टमराशिगते शस्त्रेण जनन्या सह जातकस्य मरणं वदेत् । कल्याणवर्माप्याह–

ग्रहणोपगते चन्द्रे सक्रूरे कुजेऽष्टमगे ।
मात्रा सार्द्धं म्रियते चन्द्रवदर्के च शस्त्रेण ॥ इति ॥

कश्यपेन सूर्यग्रहणकृते स्फुटमुक्तम्—

रवौ पापान्विते ग्रस्ते यदा लग्नं समाश्रिते ।
अष्टमस्थे कुजे शस्त्रान्मृतिः स्यान्मातृबालयोः ॥ इति ॥

अत्र सत्स्वनेकेषु पापेषु क्रूरपदेन शनिरेव बोध्यः । भौमाष्टमस्य पृथङ्निर्देशात् बुधस्य सर्वदा सूर्यसमीपवर्तित्वात्सूर्यस्य च चन्द्रात्षड्भान्तरितत्वात् । सूर्यग्रहणे तु अष्टमगभौमस्य पृथगुक्तत्वाद्विदः सर्वदा सूर्यानुगत्वात्क्रूरशब्देन बुधशनी व्याख्याताविति ॥ ८ ॥

चन्द्रमा सोपप्लव (ग्रस्त अर्थात् चन्द्रग्रहण काल) हो और क्रूर (पाप ग्रह) से युक्त होकर लग्न में पड़ा हो औरजन्मलग्न से अष्टम राशि में मङ्गल बैठा हो तो बालक माता के साथ मृत्यु का ग्रास होता है। यदि चन्द्रमा की तरह सूर्य हो (अर्थात् सूर्यग्रहणका समय हो सूर्य पापग्रह से युक्त होकर लग्न में बैठा हो और उससे अष्टम राशि में मङ्गल पड़ा हो ) तो बालक माता के सहित शस्त्राघात से काल का कवल होता है ॥ ८ ॥

## अरिष्टान्तरम् ।

**लग्नद्वादशनवमनैधनसंस्थितैश्चन्द्रसौरिसूर्यारैः ।**
**जातस्य भवति मरणं यदि न बलयुतः पतिर्वचसाम्॥९॥**

**भट्टोत्पलः**–अरिष्टान्तरमाह । यस्य जन्मनि लग्नगतश्चन्द्रमा भवति द्वादशस्थः शनैश्चरः नवमोऽर्कः अष्टमो भौमो भवति जीवश्च बलवान्न भवति तदा जातस्य मरणं भवति ॥ ९ ॥

वि०प्र०–अथारिष्टयोगान्तरमाह—**लग्नमिति** । लग्न-द्वादश-नवम-अष्टमेषु यथाक्रमं संस्थितैः व्यवस्थितैश्चन्द्र-शनि-सूर्य-भौमैः । लग्ने चन्द्रः, द्वादशभवने शनिः, नवमस्थाने सूर्यः, अष्टमस्थानगतो भौमः । एवं समवस्थितैः यदि वचसाम्पतिर्बृहस्पतिर्बलयुतो बलवान्न भवति

अर्थाद्बलवान्बृहस्पतिर्ना वलोकयति तदा जातस्योत्पन्नस्य जातकस्य मरणं भवति । उक्तञ्चाचार्येण बृहज्जातके—

असितरविशशाङ्कभूमिजैर्व्ययनवमोदयनिधनाश्रितैः ।

भवति मरणमाशु देहिनां यदि बलिना गुरुणा न वीक्षिताः ॥इति॥

अर्थादेव यदि बलिना गुरुणा पञ्चमभावगतेन सर्वे वीक्षितास्तदारिष्टाभावः ॥ ९ ॥

**जन्मलग्न में चन्द्रमा, जन्मलग्न से–द्वादश राशि में शनिश्चर नवमस्थान में सूर्य, अष्टम भाव में भौम पड़े हो और बृहस्पति यदि बलहीन हो तो बालक की मृत्यु होती है ॥ ९ ॥**

**अन्यच्च ।**

## सुतमदननवान्त्यलग्नरन्ध्रे-
## ष्वशुभयुतो मरणाय शीतरश्मिः ।
## भृगुसुतशशिपुत्रदेवपूज्ये-
## र्यदि बलिभिर्न युतोऽवलोकितो वा ॥ १० ॥

**भट्टोत्पलः—अरिष्टान्तरमाह ।लग्नात्पञ्चमसप्तमनवमद्वादशाष्टमस्थानानामन्यतमस्थानस्थः लग्नस्थो वा चन्द्रो भवति सच पापग्रहयुतो भवति शुक्रबुधबृहस्पतीनामन्यतमेन बलिना न युक्तो न दृश्यते वा तदा जातस्य मरणाय भवति ॥ १० ॥**

वि०प्र०—अन्यारिष्टयोगमाह—**सुत इति** । शीताः शीतला रश्मयो यस्य स शीतरश्मिश्चन्द्रः अशुभयुतोऽशुभग्रहैः सहितः, सुतः पञ्चमं मदनं सप्तमं नव नवमं अन्त्यं द्वादशं लग्नमुदयं रन्ध्रमष्टमस्थानं एषु स्थानेषु गतः एषामन्यतमस्थानगत इत्यर्थः । बलिभिर्बलयुक्तैर्भृगुसुतशशिपुत्रदेवपूज्यैर्भृगुसुतश्च शशिपुत्रश्च-देवपूज्यश्च भृगुसुतशशिपुत्रदेवपूज्यास्तैर्युतो नवाऽवलोकितो बलिना शुक्र-बुध-गुरुणामन्यतमेन न सहितो नापि दृष्ट इत्यर्थः । तदा मरणाय मृत्यवे भवति । जातस्येति शेषः । बलयुतेन शुक्रबुधगुरुणामन्यतमेन युतो दृष्टो वा तथा भूतश्चन्द्रः जातस्य मरणाय न प्रभवतीत्यर्थत एव सिद्ध्यति । अत्र कल्याणवर्मणा चन्द्रस्थाने क्षीणचन्द्र उक्तः—

निधनास्तव्ययलग्नत्रिकोणगाः क्षीणचन्द्रसंयुक्ताः ।
पापा बलिनः शुभैरदृश्यमाना गतायुषं प्रायः ॥ १० ॥

जन्मलग्न से पञ्चम, सप्तम, नवम, द्वादश, लग्न, अष्टम इन स्थानों में पापग्रह से युक्त चन्द्रमा स्थित हो और बलवान् शुक्र बुध, बृहस्पति इन तीनों ग्रहों से न देखा जाता हो और न युक्त हो तो बालक की मृत्यु के लिये होता है ॥१०॥

अरिष्टकालज्ञानम् ।

योगे स्थानं गतवति बलिन-
श्चन्द्र स्वं वा तनुगृहमथवा ।
पापैर्दृष्टे बलवति मरणं
वर्षस्यान्तः किल मुनिगदितम्॥११॥

इति श्रीवराहमिहिरकृते लघुजातके अरिष्टाऽध्यायः सप्तमः ॥ ७ ॥

भट्टोत्पलः—अनुक्तमरणकालानामरिष्टानां कालज्ञानमाह । यस्मिन्नरिष्टयोगे जातस्य मरणकालविधिर्नोक्तस्तस्मिन्योगे जातस्य ये योगकर्तारो ग्रहास्तेषां मध्ये यो बलवान्स यस्मिन्राशौ जन्मकाल व्यवस्थितस्तत्र चारक्रमाचन्द्रमासि प्राप्ते जातस्य मरण वक्तव्यम् । स्वं आत्मीयं स्थानं वा गते चन्द्रमसि जातकाले यत्र राशौ चन्द्रमा व्यवस्थितस्तमेव राशिं पुनरपि गते चन्द्रमसि तस्य मरणं वक्तव्यम् । तनुगृहं लग्नं तत्र चारक्रमात् गते चंद्रमसि तस्य मरण वक्तव्यम् । कदेत्युच्यते वर्षस्यान्तःसंवत्सरस्यांतरे । एतदुक्तं भवति अनुक्तमरणकालमारभ्य जातो वर्षन्नातिक्रमतीति तत्र प्रतिमासमेवैतानि चन्द्रमस्थराशित एवावगन्तव्यानि । तद्वर्षाभ्यन्तरे तस्य कदा मरणं वक्तव्यमित्यत आह, पापैर्दृष्टे बलवति । दर्शितराशित्रये एकस्मिन् राशौ यदा बलवान् चन्द्रो भवति

(१)अत्रान्तिमं बृहज्जातकस्य श्लोकद्वयं केनचित्प्रक्षिप्तं भातीति ।

पापैश्च दृष्टो भवति तदा तस्य मरणं वक्तव्यं न केवलगतमात्र एव चन्द्रे । किल मुनिगादितं किलेत्यागमसूचना । मुनिगदितमरिष्टलक्षणमित्यागमपारंपर्येण श्रूयत इति ॥ ११ ॥

इति भट्टोत्पलविरचितायां संक्षेपटीकायामरिष्टाध्यायः सप्तमः॥७॥

वि०प्र०--अथानुक्तमृत्युसमयानामरिष्टदयोगानां मरणकालज्ञानमाह-**योगे इति**। योगे अनिर्दिष्टमत्युकालारिष्टयोगे बलिनः स्थानम् । जातस्य योगकर्तॄणां ग्रहाणां मध्येऽधिकबलवता ग्रहेणाधिष्ठितो राशिर्बलिनः स्थानम् । तत्र चारक्रमेण गतवति अधिष्ठिते चन्द्रे, वा स्वं स्वीयं स्थानं गते जन्मनि यस्मिन्राशौ चन्द्रोऽधिष्ठितस्तस्मिन्नेव राशौ भूयोऽपि गते चन्द्रे अथवा तनुगृहं लग्नं चारक्रमेण गते चन्द्रमसि पापैः रविभौमशनिभिर्दृष्टे अवलोकिते बलवति सति । न केवलं तत्तत्स्थानगते चन्द्रे एवत्यर्थः । वर्षस्थान्तर्वर्षमध्ये एव किलेतिश्चयेन मुनिगदितं मरणं वाच्यम् । जातकस्येति शेषः । उक्तञ्च कल्याणवर्मणा

योगे बलिनःस्थानं स्वं लग्नंगतेऽपि वा चन्द्रे ।
बलवति पापैर्दृष्टे वर्षान्ते मृत्युकालः स्यात् ॥ इति ॥ ११ ॥

इत्याजमगढमण्डलान्तर्गत ब्रह्मपुरग्रामाभिजन श्रीपं०धर्मदत्तद्विवेदिसूनु-ज्यौ० आ० पं०विन्ध्येश्वरीप्रसादद्विवेदिकृतायां लघुजातकस्य बालबोधिनीटीकायामरिष्टाध्यायः समाप्तः ॥ ७ ॥

जिस योग में बालक का मृत्युकाल निर्दिष्ट नहीं है । (१) उस में जो योग कारकग्रहों में सब से बलिष्ठग्रह हो वह जन्म समय में जिस राशि पर व्यवस्थित हो उस राशि पर जब चारक्रम से चन्द्रमा आवे तब बालक का मरण कहै (२) अथवा जन्मकाल में चन्द्रमा जिस राशि पर समवस्थित हो फिर उसी राशिपर चन्द्रमा के आने पर बालक की मृत्यु कहना । वा (३) जन्मकाल में जो लग्न हो उस राशिपर चन्द्रमा के जाने पर बालक का मरण होता है। इन तीनों योगों में तत्तद्राशि में चन्द्रमा बलवान् हो और पापग्रहों से देखा जाय तब वर्ष के भीतरही बालक की मृत्यु होती है यह मुनियों ने कहा है ॥ ११ ॥

इति श्रीविन्ध्येश्वरीप्रसादद्विवेदि कृतायां लघुजातकस्य हिन्दीटीकयां सप्तमोऽध्यायः समाप्तः ॥ ७ ॥

# अथारिष्टभङ्गाऽध्यायः ८।



## गुरुकृतारिष्टभङ्गयोगः।

सर्वानिमानतिबलः स्फुरदंशुजालो
लग्नस्थितः प्रशमयेत्सुरराजमन्त्री।
एको बहूनि दुरितानि सुदुस्तराणि
भक्त्या प्रयुक्त इव शूलधरप्रणामः॥ १॥

भट्टोत्पलः–स्पष्टार्थः॥ १॥

वि०प्र०–अथ क्रमप्राप्तःकेनचित्प्रक्षिप्तोऽरिष्टभङ्गाध्यायो व्याख्यायते। तत्र तावत्सुरगुरुकृतारिष्टभङ्गयोगमाह–**सर्वानिति**। अतिबलोऽत्यन्तबलयुक्तः स्फुरदंशुजालो देदीप्यमानमण्डलः सुरराजमन्त्री सुराणां राजा सुरराजस्तस्य मन्त्री स तथोक्तो बृहस्पतिः एक एकाक्यपि लग्नस्थितो लग्नगतस्तदा सर्वानिमान् पूर्वोक्तानरिष्टान् प्रशमयेन्नाशयेत्। भक्त्याऽनन्यमनसा प्रयुक्तो विहितः शूलधरप्रणामः धरतीति धरः शूलस्य धरः शूलधरस्तस्य प्रणामो महेश्वरनमस्कारः सुदुस्तराणि दुरितानि पापानीव। यथा भक्त्या कृतो महादेवप्रणामो महान्ति पापानि नाशयति तथैव बलवान् बृहस्पतिर्लग्नस्थोऽपि सर्वानरिष्टान्निहन्तीति भावः। उक्तञ्च जातकाभरणे—

मरीचिमालामलकान्तिशाली प्रसूतिकाले प्रबलो यदि स्यात्।
बृहस्पतिर्मूर्तिगतो निहन्ति रिष्टानि नूनं मुनयो ब्रुवन्ति॥ इति॥

कश्यपोऽपि—

एक एव बली जीवो लग्नस्थो रिष्टसञ्चयम्।
हन्ति पापक्षयं भक्त्या प्रणाममिव शूलिनः॥ इति॥ १॥

सम्पूर्ण शुभग्रहों के अपेक्षा अधिक बलवान् और दीप्तकिरण हो कर लग्न में बैठा हुआ अकेला बृहस्पति अनेकों अत्यन्त दुस्तर दुरितों ( अरिष्टों ) को नष्ट कर देता है जैसे भक्ति पूर्वक किया हुआ महादेव जी का प्रणाम अनेक अत्यन्त कठिन पाप को नाश कर देता है ॥ १ ॥

लग्नेशकृतारिष्टभङ्गयोगः ।

लग्नाधिपोऽतिबलवानशुभैरदृष्टः
केन्द्रस्थितैः शुभखगैरवलोक्यमानः ।
मृत्युं विधूय विदधाति स दीर्घमायुः
सार्द्धं गुणैर्बहुभिरूर्जितया च लक्ष्म्या ॥२॥

भट्टोत्पलः—स्पष्टार्थः ॥ २ ॥

वि०प्र०—अथान्यमरिष्टभङ्गयोगमाह—**लग्नाधिप इति** । लग्नाधीशो लग्नेशोऽतिबलवानत्यन्तबलयुक्तोऽशुभैः पापग्रहैः रविभौमशनिभिरदृष्टोऽनवलोकितः केन्द्राणि 'लग्न-चतुर्थ-सप्तम-दशमाख्यानि तत्रस्थैः शुभखगैः शुभग्रहैरवलोक्यमानो यत्रकुत्रापि भवने स्थितस्तदा स मृत्युं मरणं विधूय विहाय बहुभिर्गुणैः दानदाक्षिण्यादिभिरूर्जितया वर्धनशीलया लक्ष्म्या सम्पत्या च सार्द्धं दीर्घमायुः विदधाति तथाचोक्तम्—

अत्यन्तसत्वे यदि लग्ननाथे सौम्यान्विते तादृशदृष्टियोगे ।
केन्द्रस्थिते पापदृशा विहीने सद्भाग्ययुग्जीवति दीर्घमायुः ॥ २ ॥

जन्म लग्न का स्वामी अत्यन्त बलवान् हो कर पाप ग्रहों की दृष्टि से रहित और केन्द्र में [ १ । ४ । ७ । १० ] पड़े हुए शुभग्रहों की दृष्टि से युक्त हो तो मृत्यु को नष्ट करके अनेक गुणों से युक्त बड़ी सम्पत्ति के साथ अत्यन्त दीर्घायु को देता है ॥ २॥

## अन्योरिष्टभङ्गयोगः ।

**लग्नादष्टमवर्त्यपि गुरुबुधशुक्रद्रेष्काणगश्चन्द्रः ।**
**मृत्युप्राप्तमपि नरं परिरक्षत्येव निर्व्याजम् ॥ ३ ॥**

**भट्टोत्पलः**—स्पष्टार्थः ॥ ३ ॥

वि०प्र०—अथान्योरिष्टभङ्गः—**लग्नादिति** । लग्नाज्जन्मकालिकलग्नादष्टमवर्त्यपि अष्टमस्थानगतोऽपि चन्द्रो यदि गुरुबुधशुक्रद्रेष्काणगो गुरुबुधशुक्राणामेकतमस्य द्रेष्काणे त्रिभागे गतस्तदा मृत्युं प्राप्तं कालप्राप्तमपि नरं जातकं परिरक्षत्येव न तु मारयतीत्यर्थः ॥ ३ ॥

**लग्न से अष्टमस्थान में पड़ा हुआ भी चन्द्रमा यदि बृहस्पति, बुध, शुक्र इन ग्रहों में से किसी ग्रह के द्रेष्काण में बैठा हो तो मृत्यु को प्राप्त मनुष्य की भी रक्षा निःसन्देह करता है ॥ ३ ॥**

## अन्योरिष्टभङ्गः ।

**चन्द्रः सम्पूर्णतनुः सौम्यर्क्षगतः स्थितः शुभस्यान्तः ।**
**प्रकरोति रिष्टभङ्गं विशेषतः शुक्रसंदृष्टः ॥ ४ ॥**

**भट्टोत्पलः**—स्पष्टार्थः ॥ ४ ॥

वि०प्र०—अथारिष्टभङ्गयोगान्तरमाह—**चन्द्र इति** । सम्पूर्णतनुः परिपूर्णमण्डलश्चन्द्रः सौम्यर्क्षगतः सौम्यग्रहाणां बुधगुरुशुक्राणामन्यतमस्यर्क्षे राशौ गतो व्यवस्थितः 'राशिक्षेत्रगृहर्क्षभानि भवनं चैकार्थसम्प्रत्ययाः' इति । तथा च शुभस्यान्तः द्वयोः शुभग्रहयोर्मध्ये स्थितोरिष्टभङ्गं प्रकरोति अरिष्टं नाशयति । शुक्रसंदृष्टः शुक्रेण संदृष्टः पूर्णदृष्ट्याऽवलोकितो विशेषतोऽरिष्टनाशं विदधाति । क्वचित्पुस्तके 'शुभेक्षितश्चापी' तिपाठोऽवलोक्यते । तत्र 'शुभैर्बुधगुरुशुक्रैरीक्षितोऽवलोकित' इत्यर्थो वोध्यः । सारावलीकृता कल्याणवर्मणा तु 'शुभवर्गस्थः शुभेक्षितः क्षीणोऽपीन्दुररिष्टभङ्गकरो भवति किमुत पूर्णचन्द्र' इत्युक्तः।तथा च तद्वाक्यम्-

चन्द्रः शुभवर्गस्थः क्षीणोपि शुभेक्षितो हरति रिष्टम् ।
फलमिव महातिसारं जातीफलवल्कलक्वथितम् ॥ इति ॥ ४ ॥

पूर्णचन्द्रमा शुभग्रह की राशि [ मिथुन-कन्या-धनुर्मीन-वृष-तुला ] में स्थित हो कर शुभग्रह के मध्य में पड़ा हो तो अरिष्ट का भङ्ग करता है। यदि वही [ शुभ ग्रहों की राशि और शुभ ग्रहों के बीच में बैठा हुआ ] चन्द्रमा शुक्र से देखा जाता हो तो विशेष करके अरिष्ट को नाश करता है ॥ ४ ॥

अन्यच्च ।

**बुधभार्गवजीवानामेकतमः केन्द्रमागतो बलवान् ।**
**युद्यक्रूरसहायः सद्यो रिष्टस्य भङ्गाय ॥ ५ ॥**

भट्टोत्पलः—स्पष्टार्थः ॥ ५ ॥

वि०प्र०—अथान्यमरिष्टभङ्गयोगमाह—बुध इति। बुध-भार्गव-जीवानामेकतमो ग्रहो बलवान् बलयुक्तःसन् केन्द्रमागतः केन्द्राणि लग्न-चतुर्थ-सप्तम-दशमानि तत्र व्यवस्थितो यदि अक्रूरसहायः अक्रूराः शुभग्रहाः सहायाः सहायका यस्य स तथोक्तस्तदा सद्यः अरिष्टस्य भङ्गाय नाशाय भवतीति शेषः। क्वचित् पुस्तके 'यद्यपि क्रूरसहाय' इति पाठो दृश्यते तदसङ्गतम्। क्रूरग्रहसम्बन्धात् सर्वशुभग्रहाणां निर्बलत्वसम्भवात् पूर्वपाठे च प्राक्तनोक्तानुकूल्यात्। यदाह कश्यपः—

एकोऽपि ज्ञार्यशुक्राणां लग्नात्केन्द्रगतो यदि ।
अरिष्टं निखिलं हन्ति तिमिरं भास्करो यथा ॥ इति ॥

यवनाचार्येण ज्ञगुरुशुक्राणां त्रिकोणस्थानस्थित्याप्यरिष्टाभाव उक्तस्तथा हि—

एकोऽपि यदि केन्द्रस्थः शुक्रो ज्ञो वा गिरांपतिः ।
नवमे वा सुतस्थाने सर्वारिष्टं निवारयेत् ॥ इति ॥ ५ ॥

बुध, शुक्र, बृहस्पति, इनमें से एक भी ग्रह बली हो कर केन्द्र में

बैठा हो और यदि अक्रूर ग्रह की सहायता से युक्त हो तो शीघ्र ही अरिष्ट के नाश के लिये होता है अर्थात् अरिष्ट को नाश करताहै ॥५॥

चन्द्रकृताऽरिष्टभङ्गयोगान्तरम् ।

**रिपुभवनगतोऽपि शशीगुरुसितचन्द्रात्मजदृक्काणस्थः ।**
**गरुड इव भोगिदष्टं परिरक्षत्येव निर्व्याजम् ॥ ६ ॥**

भट्टोत्पलः—स्पष्टार्थः ॥ ६ ॥

वि०प्र०—अथारिष्टभङ्गयोगान्तरमाह—**रिपुरिति** । रिपुभवनगतोपि जन्मलग्नात्षष्ठस्थानाधिष्ठितोऽपि शशी चन्द्रः यदि गुरुसितचन्द्रात्मजदृक्काणस्थो बृहस्पति-शुक्र-बुधानामन्यतमद्रेष्काणे व्यवस्थितस्तदा भोगिदष्टं भोगिना सर्पेण दष्टं दंशितं जनं गरुड इव निर्व्याजं परं रक्षत्येव नतु नाशयतीति भावः ॥ ६ ॥

जन्म लग्न से छठवें स्थान में बैठा हुआ भी चन्द्रमा यदि बुध बृहस्पति, शुक्र इन ग्रहों में से किसी ग्रह के द्रेष्काण में बैठा हो तो साँप से डसे गये मनुष्य की रक्षा गरुड़ के नाँई निश्चय करताहै॥६॥

अन्यच्च ।

**सौम्यद्वयान्तरगतः सम्पूर्णः स्निग्धमण्डलः शशभृत् ।**
**निःशेषरिष्टहन्ता भुजङ्गलोकस्य गरुड इव ॥ ७ ॥**

भट्टोत्पलः--स्पष्टार्थः ॥ ७ ॥

वि०प्र०—अन्यमरिष्टयोगमाह—**सौम्य इति** । सोम्यद्वयान्तर्गतः शुभग्रहद्वयमध्यवर्ती एकः शुभग्रहश्चन्द्राद्द्वादशस्थानगतोऽन्यो द्वितीयस्थानगत इत्यर्थः । संपूर्णः स्निग्धमण्डलः स्फुरदंशुजालः पूर्णचन्द्रश्चेत्तदा भुजङ्गलोकस्य गरुड इव जातस्य निःशेषाणामरिष्टानां हन्ता विनाशको भवति ॥ ७ ॥

दो शुभग्रहों के बीच में बैठा हुआ सम्पूर्णमण्डल चन्द्रमा सम्पूर्णरिष्टों को नाश करने वाला होता है जैसे सर्पों के समूह को गरुड नष्ट कर देते हैं ॥ ७ ॥

अन्यच्च ।

शशभृति पूर्णशरीरे शुक्ले पक्षे निशाभवे काले ।
रिपुनिधनस्थे रिष्टं प्रभवति नैवाऽत्र जातस्य ॥ ८ ॥

भट्टोत्पलः--स्पष्टार्थः ॥ ८ ॥

वि०प्र०—अथाऽरिष्टभङ्गान्तरमाह—शशभृदिति । शशभृति चन्द्रमसि पूर्णशरीरे परिपूर्णमण्डले शुक्ले पक्षे निशाभवे काले रात्रौ जन्म भवति तदा रिपुनिधनस्थे जन्मलग्नात्षष्ठाष्टमस्थानगतेऽपि चन्द्रे जातस्योत्पन्नस्य बालकस्य रिष्टं नैव प्रभवति ॥ ८ ॥

चन्द्रमा पूर्ण मण्डल हो शुक्ल पक्ष हो और रात्रि का समय हो तो जन्म लग्न से छठवें आठवें भाव में गत भी चन्द्रमा बालक का अरिष्ट करने में समर्थ नहीं होता ॥ ८ ॥

गुरुकृतारिष्टभङ्गः ।

प्रस्फुरितकिरणजाले स्निग्धामलमण्डले बलोपेते ।
सुरमन्त्रिणि केन्द्रगते सर्वारिष्टं शमं याति ॥ ९ ॥

भट्टोत्पलः--स्पष्टार्थः ॥ ९ ॥

वि० प्र०—अथ बृहस्पतिकृतारिष्टभङ्गयोगमाह—प्रस्फुरित इति । प्रस्फुरितकिरणजाले स्निग्धमण्डले अमलमण्डले स्वच्छमण्डले सुरमन्त्रिणि सुराणां देवानां मन्त्रिणि बृहस्पतौ केन्द्रगते केन्द्राणि लग्न-चतुर्थ-सप्तम-दशमानि तत्र स्थिते सति सर्वारिष्टं शमं नाशं याति प्राप्नोति ॥ ९ ॥

यदि आकाश मे चमकीला और बृहन्मण्डल देखाई देता

हुआ बृहस्पति जन्म समय में केन्द्रस्थित हो तो सब अरिष्टों का नाश करता है ॥ ९ ॥

सौम्यग्रहकृतारिष्टभङ्गः ।

**सौम्यभवनोपयाताः सौम्यांशकसौम्यदृक्काणस्थाः ।**
**गुरुचन्द्रकाव्यशशिजाः सर्वेऽरिष्टस्य हन्तारः ॥ १० ॥**

**भट्टोत्पल**--स्पष्टार्थः ॥ १० ॥

वि० प्र०—अथ सौम्यग्रहकृतारिष्टभङ्गयोगमाह—**सौम्यभवनइति।** गुरुर्बृहस्पतिश्चन्द्रः प्रसिद्धः काव्यः शुक्रः 'शुक्रो दैत्यगुरुः काव्य' इत्यमरः । शशिनो जातः शशिजो बुध एते सर्वे सौम्यभवनोपयाता सौम्यानां बुध-गुरु-शुक्र-पूर्णेन्दूनां भवने राशौ मिथुन-कन्या-वृष-तुला-धनुर्मीन-कर्काणामन्यतमराशावुपयाता व्यवस्थिता वा सौम्यानां नवमांशके वा सौम्यग्रहाणां द्रेष्काणे संस्थिताः सन्तोरिष्टानां हन्तारो भवन्ति ॥१०॥

शुभग्रह [ शुक्र, बृहस्पति, बुध, पूर्णचन्द्रमा ] के राशि में शुभग्रह के द्रेष्काण, में शुभग्रह के नवमांश में स्थित बृहस्पति, पूर्ण चन्द्रमा, शुक्र और बुध स्थित हो तो ए सब अरिष्ट के नाश करने वाले होते हैं ॥ १० ॥

चन्द्रराशीशकृतारिष्टभङ्गः ।

**चन्द्राध्यासितराशेरधिपः केन्द्रे शुभग्रहो वापि ।**
**प्रशमयति रिष्टयोगं पापानि यथा हरिस्मरणम् ॥११॥**

**भट्टोत्पलः**—स्पष्टार्थः ॥ ११ ॥

वि० प्र०—अथ चन्द्रराशीशकृतारिष्टभङ्गयोगमाह—**चन्द्राध्यासित इति ।** चन्द्राध्यासितराशेः जन्मसमये चन्द्रमा यस्मिन्राशावधिष्ठितः स चन्द्राधि-ष्ठितराशिस्तस्याधिपस्स्वामी अथवा शुभग्रहः केन्द्रे समवस्थितः

रिष्टयोगं प्रशमयति नाशयति यथा हरिस्मरणम् पापानि दुरितानि प्रशमयति ॥ ११ ॥

चन्द्रमा जिस राशि पर स्थित हो उस राशिका स्वामी अथवा शुभग्रह केन्द्र [१।४।७।१०।] में पड़े हों तो सब अरिष्टों को नाश करते हैं जैसे श्रीविष्णु भगवान् का स्मरण सब पापों को नष्ट कर देता है ॥ ११ ॥

## अन्यो योगः ।

**पापा यदि शुभवर्गे सौम्यैर्दृष्टाः शुभेशवर्गस्थैः ।**
**निघ्नन्ति तदा रिष्टं पतिं विरक्ता यथा युवतिः॥१२॥**

भट्टोत्पलः--स्पष्टार्थः ॥ १२ ॥

वि० प्र०—अथान्यमरिष्टभङ्गयोगमाह—**पापा** इति । पापा रविभौमशनिक्षीणेन्दवो यदि शुभवर्गे शुभग्रहाणां वर्गे समवस्थिताः शुभेशवर्गस्थैः सौम्यैर्दृष्टा अवलोकितास्तदारिष्टं निघ्नन्ति नाशयन्ति । क इवेति दृष्टान्तेन द्रढयति । यथा विरक्ता सुरतादिक्रियाकलापैरपरितुष्टा युवती पतिं भर्त्तारं निहन्ति ॥ १२ ॥

पापग्रह यदि शुभग्रहों के वर्ग में व्यवस्थित हो कर शुभग्रहों के वर्ग में बैठे हुए शुभग्रहों से देखे जाते हों तो रिष्टों को नाश करते हैं जैसे विरक्त स्त्री [ केलिकलह मे रमण से सन्तोष न पाने वाली रमणी ] प्रियतम पति का नाश कर देती है ॥ १२ ॥

## राहुकृतारिष्टभङ्गः ।

**राहुस्त्रिषष्ठलाभे लग्नात्सौम्यैर्निरीक्षितः सद्यः ।**
**नाशयति सर्वदुरितं मारुत इव तूलसंघातम् ॥ १३ ॥**

भट्टोत्पलः—स्पष्टार्थः ॥ १३ ॥

वि०प्र०—अथ राहुकृतारिष्टभङ्गयोगमाह—**राहुरिति** । लग्नाज्जन्मलग्नात्त्रिषष्ठलाभे ऽधिष्ठितः सौम्यैः शुभग्रहैर्निरीक्षितो राहु सद्यः झटिति सर्वदुरितं मारुतः पवनः तूलसङ्घातमिव नाशयति शमयति ॥१३॥

जन्म लग्न से तीसरे, छठवें, एग्यारहवें राहु बैठा हो और शुभ ग्रहों से देखा जाता हो तो रूई के समूह को प्रबल वायुके नाईं सब अरिष्टों को उड़ाय देता है ॥ १३ ॥

अन्यो योगः ।

**शीर्षोदयेषु राशिषु सर्वे गगनाधिवासिनः सूतौ ।**
**प्रकृतिस्थैश्चारिष्टं विलीयते घृतमिवाग्निस्थम् ॥१४॥**

भट्टोत्पलः--स्पष्टार्थः ॥ १४ ॥

वि० प्र०—अथान्यमरिष्टभङ्गयोगमाह—**शीर्षोदयेष्विति** । सूतौ जन्मसमये यदि सर्वे गगनाधिवासिनो गगन आकाशे ऽधिवसन्तीति तथोक्ता ग्रहाः शीर्षोदयेषु राशिषु मिथुन-सिंह-कन्या-तुला-वृश्चिक-कुम्भेषु स्थिता-तदाऽरिष्टं प्रकतिस्थैः विलीयते । अग्निस्थं कृतमिवेति ॥ १४ ॥

जन्म समय में शीर्षोदय राशि ( मिथुन, सिंह, कन्या, तुला, वृश्चिक, और कुम्भ ) में सब ग्रह बैठे हों तो घृत को अग्नि के तरह सब अरिष्टों को जलाय देते हैं ॥ १४ ॥

तथा च ।

**तत्काले यदि विजयी शुभग्रहः शुभनिरीक्षितोऽवश्यम् ।**
**नाशयति सर्वरिष्टं मारुत इव पादपान्प्रबलः ॥ १५ ॥**

**इत्यरिष्टभङ्गाध्यायोऽष्टमः ॥ ८ ॥**

**भट्टोत्पलः**- स्पष्टार्थः ॥ १५ ॥

वि० प्र०—अथान्यमरिष्टभङ्गयोगमाह—**तत्काल इति**। तत्काले जन्मसमये यदि विजयी ग्रहयुद्धे विजयशाली शुभग्रहः शुभनिरीक्षितः शुभग्रहैरवलोकितस्तदाऽवश्यं सर्वरिष्टं पादपान् वृक्षान् प्रबलो मारुत इव नाशयति। अथान्येऽरिष्टभङ्गकरा योगा ग्रन्थान्तरात्संगृह्येहोपन्यस्यन्ते-

चन्द्रः सम्पूर्णतनुः शुक्रेण निरीक्षितः सुहृद्भावे।
कष्टहराणां श्रेष्ठो वातहराणां यथा वस्तिः॥ १॥

परमोच्चे शिशिरतनुर्भृगुतनयनिरीक्षितो हरति कष्टम्।
सम्यग्विरेकवमनं पित्तकफानां यथा दोषम्॥ २॥

युक्तः शुभफलदायिभिरिन्दुः सौम्यैर्निहन्त्यरिष्टानि।
तेषामेव त्र्यंशे लवणमिश्रघृतं यथा शूलम्॥ ३॥

एकोपि केन्द्रभवने नवपञ्चमे वा
भास्वान्मयूखविमलीकृतदिग्विभागे।
निःशेषदोषमपहृत्य सुखप्रसूतिं
दीर्घायुषं विगतरोगभयं करोति॥ ४॥

वन्ध्वास्पदोदयविलग्नगतौ कुलीरे
गीर्वाणनाथसचिवः सकलश्च चन्द्रः।
जूके रवीन्दुतनयावपरे च लाभे-
दुश्चिक्य शत्रुभवनेष्वमितं तदायुः॥ ५॥

यदा यामिनीशो दिनेशं प्रपश्ये-
द्बुधो वा गुरुर्वीक्षते यामिनीशम्।
तदा दैववेदी किमर्थं विमृश्ये-
त्सुखी दीर्घजीवी भवेज्जातकश्च॥ ६॥ इत्यादि ॥ १५ ॥

इत्याजमगढ़मण्डलान्तर्गतब्रह्मपुरग्रामभिजन श्रीपं० धर्मदत्तद्विवेदि-
सूनु-ज्यौ० आ० प० विन्ध्येश्वरीप्रसादद्विवेदिकृतलघु-
जातकस्य बालबोधिनीटीकायामरिष्टभङ्गा-
ध्यायोऽष्टमः समाप्तः ॥ ८ ॥

तत्काल [ जन्म समय ] में यदि विजयी शुभग्रह शुभग्रहों से देखे जाते हों तो सब अरिष्टों को उखाड़ देते हैं जैसे प्रचण्डवायु बड़े २ वृक्षों को उखाड़ देता है ॥ १५ ॥

इति श्रीविन्ध्येश्वरीप्रसादद्विवेदिकृतायां लघुजातकस्य हिन्दी-
टीकायामरिष्टभङ्गाध्यायोऽष्टमः समाप्तः ॥ ८ ॥



## अथ ग्रहायुर्दायाध्यायः ९ ।



### ग्रहायुर्दायः ।

**राश्यंशकला गुणिता द्वादशनवभिर्ग्रहस्य भगणेभ्यः ।**
**द्वादशहृतावशेषेऽब्दमासदिननाडिकाः क्रमशः ॥ १ ॥**

भट्टोत्पलः- अथायुर्दायाध्यायं व्याख्यास्यामस्तत्र पुरुषजन्मकाले स्फुटगणितेन विशेषकर्मणा स्फुटाग्रहास्तात्कालिकाश्च कर्तव्याः लग्नं च तात्कालिकं कर्तव्यं तात्कालिकस्यैवार्कस्यायुर्दायः कर्तव्यः । तत्करणोपायमाह । तात्कालिकग्रहस्य राश्यंशकलाविकलाः पृथक् द्वादशभिर्गुणितास्ततो नवभिर्गुणिता एवमष्टाधिकशतेन गुणिताः कार्याः विलिप्तानां मध्ये व्युत्क्रमेण षष्ट्या भागमपहृत्यावाप्तं कलासु योज्यम् यदवशिष्टं पलानि । कलाभ्यो षष्ट्या भागमपहृत्यावाप्तं अंशेषु योज्यं शेषं घट्यः ततो भागेषु

त्रिंशता भागमपहृत्यावाप्तं राशिषु योज्यं शेषं दिवसाः । ततो-राशिषु द्वादशभिर्भागमपहृत्यावाप्तं ते भगणाः शेषं मासाः। भगणानामपि द्वादशभागमपहृत्यावाप्तं त्याज्यम् शेषाणि वर्षाणि। एवमब्दमासदिननाडिकाः क्रमश इति । उदाहरणम् ।तद्यथा--स्फुट ग्रहः ३ । २९ । ५९ । ५२ अस्य राश्यंशकलाविकला द्वादशभिर्गु-णिता जातं ३६ । ३४८ । ७०८ । ७०८ पुनरपि नवभिर्गुणिता ३२४ । ३१३२ । ६३७२ । ६३७२ ततो विलिप्तिकासु एतासु षष्ट्या भागमपहृत्यावाप्तं १०६ तत्कलासु योजितं ६४७८ शेषम् १२ पलानि ताभ्यो षष्टिभागमपहृत्यावाप्तं १०७ अंशेषु योजितं ३२३९ शेषम् ५८ एता घट्यः । एषु त्रिंशता लब्धम् १०७ तद्राशिषु युक्तम् ४३१ शेषम् २९एते दिवसाः पुना राशौ द्वादश-भागेन लब्धम् ३५ एते भगणाःशेषम् ११ एते मासाः भगणेभ्यो द्वादशभागेन लब्धम् २ निरुपयोगत्वात्त्याज्यं शेषम् ११ वर्षा-णि। वर्षमासदिनघटीपलादेरधोऽधः स्थापना कार्या । एवं सर्वेषां ग्रहाणांकरणीयम् । एवं कृते आयुर्दायो भवति ॥ १ ॥

वि०प्र०—अथायुर्ज्ञानस्यापि जातकफले प्रधानप्रयोजकत्वादायुर्दायाध्याय आरभ्यते । तत्राऽऽयुर्द्विविधं योगजं गणितागतं च । तत्राऽपि योगजं चतुर्विधम् रिष्टिजं परमं नियतममितमिति । गणितागतमपि पञ्चधा अंशजं पिण्डजं नैसर्गिकं सप्तांशजं मिश्रं चेति । तत्रापि मिश्रं चतुर्विधम्-चन्द्रार्कसम्बन्धजं लग्नेन्दुजं लग्नसूर्यभवं लग्नसूर्येन्दुभवञ्चेति । एवं द्वादशप्रकारा आयुर्भेदा इति व्यावर्णयन्त्याचार्याः । उक्तञ्च होरामकरन्दे:—

आयुर्मुनीन्द्रैर्द्विविधं प्रदिष्टं योगोद्भवं चानियताख्यमेतत् ।
आद्यं चतुर्भेदविभिन्नमाहुरन्यत्तथा पञ्चभिरत्र भेदैः ॥
रिष्टं परं नियतमत्र तथा मितं च भेदा भवेयुरिति योगसमुद्भवस्य ।
पैण्डं तथांशजनितं च निसर्गमन्यत्सप्तांशमिश्रमिति चानियतस्य भेदाः॥

चन्द्रार्कयोश्चन्द्रविलग्नयोश्च लग्नेनयोः सूर्यविधूदयानाम् ।
साम्ये बलानामिति मिश्रभेदादायुर्भवेद् द्वादशधैवमत्र ॥ इति ॥

प्रथमायुर्भेदानां ग्रन्थान्तरात्संगृह्य लिख्यन्ते । तत्र रिष्टजस्योदाहरणान्यस्यैव ग्रन्थस्यारिष्टाध्याये द्रष्टव्यानि ।

परमायुष उदाहरणम्—

अनिमिषपरमांशके विलग्ने शशितनये गवि पञ्चवर्गलिप्ते ।
भवति हि परमायुषः प्रमाणं यदि सहिताः सकलाः स्वतुङ्गभेषु ॥

नियतस्य—

लग्नाष्टमारीन्दुयुता न चेत्स्युः क्रूराः स्वगस्था यदि खेचरौ द्वौ ।
बलान्वितावम्बरगौ भवेतां जात शतायुः कथितो मुनीन्द्रैः ॥

अमितस्य—

गुरुशशिसहिते कुलीरलग्ने शशितनये भृगुजे च केन्द्रयाते ।
भवरिपुसहजोपगैश्च शेषैरमितमिहायुरनुक्रमाद्विना स्यात् ॥ इति ॥

द्वितीयायुर्भेदानामुदाहरणानि गणिताधीनानि । तत्र ग्रहाणां गणितागतायुःप्रमाणमाह—**राश्यंश इति** । अथ तावन्महदुपयोगित्वाद् ग्रहाणां पञ्चाङ्गस्थितमिश्रकालिकग्रहात्तात्कालिकीकरणम्प्रदर्श्यते—

गतैष्यदिवसाद्येन गतिर्निघ्नी खषड्हृता ।
लब्धमंशादिकं शोध्यं योज्यं स्पष्टो भवेद्ग्रहः ॥

पञ्चाङ्गस्थितमिश्रकालापेक्षया पूर्वञ्चेदिष्टकाल स्तदेष्टकाल मिश्रकालयोरन्तरं [ गतदिवसाद्यं स्यात्तथा मिश्रकालतोऽग्रे इष्टकालश्चेत्तदेष्टकालमिश्रकालयोरन्तरमेष्यदिवसाद्यं स्यात् । तेन गतदिवसाद्येनैष्यदिवसाद्य न वा गतिः पञ्चाङ्गस्थमिश्रकालिकस्फुटग्रहगतिः कलादिका निघ्नी सषड्भिः षष्ट्या हृता लब्धमंशादिकं अंशकलाविकलात्मकं पञ्चाङ्गस्थितस्पष्टग्रहेषु क्रमेण शोध्यं वा योज्यं गतदिवसाद्यं स्यात्तदा शोध्यमैष्यदिवसाद्यं चेत्तदा योज्यं तर्हि तात्कालिकः स्फुटग्रहो भवति । तत्र वक्रग्रहे राहुकेत्वोश्च मार्गग्रहापेक्षया विपरीतं कार्यम् ।

**अथोदाहरणम्**—विक्रमसंवत् १९८६ ज्येष्ठशुक्लदशम्यां रविवासरे घट्यः ५२ पलानि ३३ हस्तनक्षत्रघट्यः ११ पलानि ४४ वरियसि योगे-घट्यः ३३ पलानि ५९ तत्र सूर्योदयादिष्टघटी ३२ पलेषु ३५ श्रीमतो जन्म। तत्र रव्यादयो ग्रहाः साध्याः। तत्र जन्मकालिकवारादिमध्ये १।३२।३५ मिश्रकालिकवारादिना ०।४८। ६ शोधिते जातं गतं दिवसाद्यम् ०।४४।२९ अनेन रवेः कलात्मिका (५६।५७) गतिगुणनार्थं न्यासः-

गुण्यः = ०।४४।२९

गुणकः = ५६।५७

गुणनफलं = ०।२४६४।१६२४

०।२५०८।१६५३

= ०।२४६४।४१३२।१६५३

= ४२।१३।१९।३३

षष्ट्या ६० भक्ते जातमंशादिकं फलं = ०।४२।१३।१९।३३

पञ्चांगस्थितस्पष्टरवौ २।३।१०।४ गतदिवसादित्वाच्छोध्यं एवं सर्वग्रहेषु चालनं देयम्।

अथ चन्द्रस्फुटीकरणोपयोगि भयात-भभोगज्ञानमदुक्तम्—

गतर्क्षनाड्य नखतर्कदण्डैर्युतेष्टनाडीति भवेद्भयातम्।
ताभिर्घटीभिः सहिता निजर्क्षनाडीति ज्ञेयो विबुधैर्भभोगः॥

स्फुटार्थमिदम् पद्यम्—

पञ्चाङ्गस्य नक्षत्राच्चन्द्रस्पष्टीकरणम्—

खषट्घ्नं भयातं भभोगोद्धृतं तत्खतर्कधिष्ण्येषु युक्तं द्विनिघ्नम्।
नवाप्तं शशी भागपूर्वस्तु भुक्तिः खखाभ्राष्टवेदा भभोगेन भक्ताः॥

भयातं पलीकृतभयातं खषट्घ्नं षष्ट्या गुणितं भभागोद्धृतं पलात्मकभभोगेन भक्तं लब्धं यतत् खतर्कघ्नधिष्ण्येषु षष्टिगुणिताश्वि-न्यादिगतनक्षत्रेषु युक्तं द्विनिघ्नं द्वाभ्यां गुणितं नवाप्तं नवभिर्भजनेन लब्धमंशादिकं भागपूर्वोऽशादिकः शशी चन्द्रस्ता-

त्कालिको भवति खखाभ्राष्टवेदा ४८००० भभोगेन भक्ता भुक्तिश्चन्द्रमसः स्फुटा गतिः स्यात् ॥

**अत्रोदाहरणम्**—भयातं घटिकादिकं = २०।५० षष्ट्या गुणितं जातं पलात्मकम् = १२५० एवं भभोगो घट्यादिः ६१।५० षष्ट्या गुणितो जातः पलात्मकः = ३७१० । ततो भयातं १२५० षष्ट्या गुणितं १२५०× ६०=७५००० पलात्मकभभोगेन भक्त २०।१२। ५६ .लब्धं षष्टिगुणितगतनक्षत्रसंख्यासु १३×६०=७८० युक्तं ८००।१२।५६ द्विनिघ्नं १६००। २५ ।५२ नवभिर्भक्तं लब्धं १७७।४९।३२ = अंशादिकश्चन्द्रः । अत्र प्रथमाङ्के त्रिंशता भक्ते जातो राश्यादिकः स्फुटचन्द्रः=५।२७।४६।३२ अथ खखाभ्राष्टवेदाः ४८००० भभोगेन ६१।५० घटिकादिकेन भक्ता जाता कलादिका स्फुटा चन्द्रगतिः=७७६।२०

अथ लग्नस्फुटीकरणोपयोगीनि पलभा-चरखण्डान्युच्यन्ते—

मेषादिगे सायनभागसूर्ये दिनार्धजा भा पलभा भवेत्सा।
त्रिष्ठा हताःस्युर्दशभिर्भुजङ्गैर्दिग्भिश्चरार्धानि गुणोद्धृतान्त्या ॥

यस्मिन्दिने सायनमेषादौ सूर्यो भवति तस्मिन्दिने दिनार्धसमये समायां भूमौ निहितस्य द्वादशाङ्गुलशङ्कोर्या छाया भवति सा पलभा भवेत्। सा पलभा त्रिषु स्थानेषु स्थाप्या क्रमेण दशभिर्भुजङ्गैर्दिग्भिर्गुणिताऽन्त्या तृतीया त्रिभिर्भाज्या तदा त्रीणि चरखण्डानि भवन्ति ।

**उदाहरणम्**—आजमगढ़ीया पलभा ५।,५१ स्थानत्रये स्थाप्याः ५।५१, ५।५१, ५।५१ । क्रमेण दशभिरष्टाभिर्दिग्भिर्गुणिताः-५८।३०, ४६।४८, ५८।३० अन्त्या त्रिभिर्भक्ता १९। ३० ततोऽर्धाधिके रूपं ग्राह्यमर्धाल्पे त्याज्य' मिति नियमेन द्वितीयाङ्कस्य सर्वत्रापनोदे कृते जातानि त्रीणि चरखण्डानि ५८।४७।१९ ॥

अथ लङ्कोदयास्तेभ्यः स्वदेशीयोदयज्ञानञ्चाह—

लङ्कोदया विघटिका गजभानिगोङ्क-
दस्राक्षिपक्षदहनाः क्रमगोत्क्रमस्थाः ।

हीनान्विताश्चरदलैः क्रमगोत्क्रमस्थै-

मेंषादितो घटतउत्क्रमतस्त्विमे स्युः॥

| लङ्कोदयाः च.खं. स्वदेशोदयाः |
| --- |
| २७८ – ५८ = २२० |
| २९९ – ४७ = २५२ |
| ३२३ – १९ = ३०४ |
| ३२३ + १२ = ३४२ |
| २९९ + ४७ = ३४६ |
| २७८ + ५८ = ३३६ |

गजभानि २७८ गोङ्कदस्राः २९९ त्रिपक्षदहना ३२३ एते मेषादित्रयाणाम्। त एवोत्क्रमेण कर्कादिराशित्रयाणां लङ्कोदया विघटिका भवन्ति । एते पूर्वानीतस्वदेशीयचरदलैः क्रमगोत्क्रमस्थैर्हीनान्विताःकार्याः। क्रमस्था लङ्कोदयास्त्रयः क्रमस्थैश्चरखण्डकैः हीना उत्क्रमस्थास्त एव लङ्कोदया उत्क्रमस्थैश्चरखण्डकैर्युक्ताः कार्यास्तदा मेषादितो मेषमारभ्य षण्णां राशीनामुदयाः स्वदेशीयाः स्युः । एत एवोत्क्रमेण तुलादिषण्णां राशीनामुदयाः स्युः ॥

अथायनांशानयनम्—

भूनेत्रवेदोनशकस्त्रिनिघ्नो व्योमाभ्रनेत्रैर्विहृतोऽयनांशाः ।

त्रिघ्नोऽर्कराशिः स्वदलेन युक्ता तावन्मिताभिर्विकलाभिराढ्या ॥

स्फुटार्थोऽयम्—

अथ लग्नसाधनम्—

तत्कालार्कः सायनः स्वोदयघ्ना:

भोग्यांशाः खत्र्युद्धृता भोग्यकालः ।

एवं यातांशैर्भवेज्जातकालो

भोग्यः शोध्योभीष्टनाडीपलेभ्यः ॥

तदनु जहीहि गृहोदयाँश्च शेषं

गगनगुणघ्नमशुद्धहृल्लवाद्यम् ।

सहितमजादिगृहैरशुद्धपूर्वै-

र्भवति विलग्नमदोऽयनांशहीनम् ॥

स्फुटसूर्यः २।३।२७।५१ अयनांशाः २१।२७।९सायनार्कः २।२४।५५।० भुक्तांशास्त्रिंशतः शोधिता जाता भोग्यांशाः ५।५।० मिथुनोदय३०४ मानेन गुणिताः १५४५।२०।० ततस्त्रिंशता भक्ते लब्धो ५१।३०।४० भोग्यकालः पलादिकः। अभीष्टनाडीपलेभ्यः ३२।३५ = १९५५ शोधिते शेषम् १९०३।२९।२० ततः कर्क-सिंह-कन्या-तुला-वृश्चिकोदयानां ३४२+३४६+३३६+३३६+३४६=१७०६ योगे शोधिते शेषं १९७।२९।२० अतो धनुरुदयो न शुद्धयत्यतो धनुरशुद्धः। शेषम् १९७।२ ।२० गगनगुणघ्नम् ५९२४।४०।० अशुद्धोदयमानेना३४२ नेन भक्तं लब्धमंशादिकफलम् १७।१९।२५ शुद्धोदयसंख्यया ८ युतं जातं सायनलग्नम् ८।१७।१९।२५।

एवं भुक्तांशाः २४।५५।० स्वदेशीयमिथुनोदय ३०४ मानेन गुणिताः ७५७४।४० त्रिंशता भक्ता लब्धः २५२।२९।२० भुक्तकालः पलादिकः। ततः षष्टिशुद्धाभीष्टनाडीपलेभ्यः २७।२५=१६४५ शोधितः १६४५–[२५२।२९।२०]=१३९२।३०।४० शेषं। तत उत्क्रमतो वृष-मेष-मीन-कुम्भ-मकरोदयानां २५२+२२०+२२०+२५२+३०४= १२४८ योगेऽपनीते जातं शेषम् १४४।३०।४० अत्राप्यशुद्धो धनूराशिः। ततः शेषम् १४४।३०।४० गगनगुणघ्नम् ४३३५।२०।० अशुद्धोदयेनानेन३४२विहृतं लब्धमंशादिकं १२।४०।३५ फलमशुद्धराशिसंख्यातः शोधिते ९–[०।१२।४०।३५]=८।१७।१९।२५ जातं राश्यादिकं सायनलग्नम्। ततोऽयनांशैः २१।२७।९ रहितं जातं स्फुटलग्नम् ७।२७।५२।१६ राश्यादिकम्।

एवं सर्वान्ग्रहाँल्लग्नं च तात्कालिकं विधाय सर्वेषां पृथक् पृथक् राश्यंशकला राशयोंऽशाः कलाश्च पृथक् पृथगादौ द्वादशभिस्ततो नवभिर्थादष्टोत्तरशतेन गुणिता विधेयाः। अत्र विलिप्तानां षष्ट्या ६० भागमपहृत्य लब्धं लिप्तास्थाने योज्यं शेषं विलिप्तिकास्थाने स्थाप्यम् तत्फलानि भवन्ति। लिप्तानां ६० षष्ठ्या विहृते लब्धमंशस्थाने योज्यं

शेषं कला स्थाने स्थाप्यं तद्घटिका भवन्ति । अंशस्थाने त्रिंशता हृते लब्धं राशिस्थाने योज्यं शेषमंशस्थान एव निवेश्यं तद्दिनानि भवन्ति । एवं राश्यादयोऽष्टोत्तरशतेन गुणिता भवन्ति । ततो राशिस्थाने द्वादशभिर्विभाजिते लब्धं वर्षाणि, शेषं मासा भवन्ति । अत्र लब्धवर्षाण्यपि द्वादशभिर्भक्त लब्धं निष्प्रयोजनत्वात्त्याज्यं यतो द्वादशतोऽधिका अब्दा न भवन्ति कस्यापि ग्रहस्य । शेषं द्वादशाल्पं वर्षाणि भवन्ति । एवं क्रमशो वर्षमासादयो ग्रहस्य स्फुटायुर्दायो भवति । एवं सर्वेषां ग्रहाणामायुर्दायः साध्यः ॥ १ ॥

स्पष्टग्रह के राशि, अंश, कला, विकला इत्यादि को पहले बारह से फिर नव से अर्थात् १०८ से गुणा करै फिर विकला स्थान के गुणनफल में ६० का भाग देने से जो लब्ध हो उसे कला स्थान के गुणनफल में जोड़ दे,शेष को विकला स्थान में रहने दे वह पल होगा। एवं लब्ध से युक्त कला स्थान के गुणनफल में ६० का भाग देने से जो लब्ध हो उसको अंश स्थान के गुणनफल में जोड़ कर शेष को कलास्थान में ही रखै । वह घटी होगी । ऐसे ही कलास्थान सवन्धी लब्ध से युक्त अंश स्थान के गुणनफल में ३० का भाग देकर लब्ध को राशि स्थान के गुणनफल में जोड़ देवै, शेष को अंश स्थान में रहने देवै, वह दिन होगा । फिर अंश स्थानीय लब्धि से युक्त राशि स्थानीय गुणनफल में १२ का भाग देने से लब्ध (भगण) वर्ष होगा, शेष मास वचेगा । भगण ( वर्ष ) में भी १२ बारह का भाग देने से जो शेष हो वही वर्ष होगा लब्ध को प्रयोजनाभाव से त्याग (छोड़) देना चाहिये । ऐसे ही वर्ष, मास, दिन, घटी, पलादि ग्रहों की स्पष्टायु होती है ॥ १ ॥

## लग्नायुर्दायः ।

**होरादायेऽप्येवं बलयुक्ताऽन्यानि राशितुल्यानि ।**
**वर्षाणि संप्रयच्छन्त्यनुपाताच्चांशकादिफलम् ॥ २ ॥**

भट्टोत्पलः—लग्नायुर्दायमाह । होरा लग्नं तद्दायः यथा ग्रहस्यायुर्दायः कृतस्तथा लग्नस्य कार्यः। सा होरा यदि बलयुक्ता तदाऽन्यानि वर्षाणि राशितुल्यानि प्रयच्छति । लग्नस्य यावन्तो भुक्तराशयः तत्समानानि वर्षाणि ददाति तानि आयुर्दाये योज्यानि अनुपाताच्चांशकादिफलम् । अनुपातस्त्रैराशिकगणितमभिधीयते । लग्नस्य राशीनपास्य भागादिलिप्तापिण्डः कार्यः तल्लिप्तापिण्डं द्वादशभिः संगुण्य अष्टादशभिः शतै १८०० विंभज्यावाप्तं मासाः मासशेषं त्रिंशता ३० संगुण्य अष्टादशशतविभागेन लब्धं दिवसाः । दिनशेषम् षष्टिगुणितं कृत्वा अष्टादशशतैर्लब्धं घटिका शेषम् षष्टिगुणं कार्यम् अष्टादशशतैर्लब्धं पलानि । एवमनुपातेन लब्धो मासादिर्लग्नस्यायुर्दायो ज्ञेयः ॥ २ ॥

वि०प्र०—अथ वादरायणोक्तं ग्रहाणामंशायुष्प्रमाणमुक्त्वेदानीं लग्नास्यायुर्दायमाह—होरेति । होरादायः होरा लग्नं तस्य दाय आयुर्दायो लग्नाऽऽयुर्दायप्रमाणमप्येवमुक्तप्रकारेण साध्यम् । यथा ग्रहस्य "राश्यंशकला गुणिता" इत्यादिना स्फुटाऽऽयुर्दायो वर्षादिकः साधितस्तथैव लग्नस्याप्युर्दायः साध्यः । तत्र यदि लग्नं "जीवस्वनाथशशिजैर्युतदृष्टा बलवती भवति होरा" इत्यादि वादरायणोक्तदिशा बलयुक्तं भवति तदा राशितुल्यानि, लग्नस्य यावन्तो राशयो गता भवन्ति तावन्ति वर्षाणि संप्रयच्छति । तत्तुल्यवर्षाणि गणितागतायुर्मध्ये योज्यानीत्यर्थः । अनुपाताच्चांशकादिफलं अंशकादीनां फलं मासाद्यं अनुपातात्त्रैराशिकेनानयितव्यम् । अनुपातलक्षणं श्रीमता भास्कराचार्येणोक्तम्—

"प्रमाणमिच्छा च समानजाती आद्यन्तयोस्तत्फलमन्यजातिः ।
मध्ये तदिच्छाहतमाद्यहृत्स्यादिच्छाफलं ............॥" इति

अनुपातो यथा—त्रिंशद्भिरंशैर्द्वादशमासास्तदा लग्नस्य भुक्तभागैः कियानिति लग्नस्य भुक्तभागा द्वादशभिः संगुण्य त्रिंशता भागमपहृत्यावाप्तं

मासाः। मासशेषं त्रिंशता संगुण्य पूर्वभाजकेनैव हृते लब्धं दिवसाः। पुनर्दिनशेषं षष्ट्या संगुण्य त्रिंशद्भिर्विभज्याप्तं घटिकाः। पुनस्तच्छेषं षष्ट्या संगुण्य तेनैव भाजकेनापहृत्य लब्धं पलानि। एवं त्रैराशिकेन लब्धं मासादिकं राशिसंख्यवर्षयुतं लग्नायुर्दायमध्ये योज्यं तदा लग्नायुर्दायः स्फुटं भवति। इदं कर्म वीर्यवतस्य लग्नस्य न कर्तव्यमिति। उक्तञ्च सारावल्यां कल्याणवमणा—

"होरा सर्वबलोपेता राशितुल्या नियच्छति।
वर्षाण्यन्यानि मासादि भागैस्त्रैराशिकात्पुनः॥" इति।

अविकलमिदं पद्यद्वयं वादरायणस्येहोपन्यस्तमाचार्येणेति॥ २॥

जिस प्रकार ग्रहों का आयुर्दाय स्फुट किया है उसी प्रकार लग्न का भी आयुर्दाय स्पष्ट करना। यदि लग्न बलवान् हो तो लग्न के गतराशि के तुल्य वर्षों को देता है अर्थात् गत राशि तुल्य वर्ष स्पष्ट लग्नायु के वर्षों में जोड़ देना और अनुपात ( त्रैराशिक ) से अंशादि पर से मासादि का ज्ञान करना। अनुपात का स्वरूप। अंशादि का कला बना कर बारह से गुणा करना फिर १ राशि की कला (१८०० कला ) से भाग देना लब्ध मास होगा। फिर शेष को ३० से गुणा कर १८०० से भाग देने पर लब्धि दिन होगा। पुनः शेष को ६० से गुणा करके १८०० से भाग देने से लब्ध घटी होगी। एवं शेष को ६० से गुणा करके १८०० से भाग देने पर लब्ध पल होगा। इस तरह लग्न का वर्षादिक स्फुटायुर्दाय होगा॥ २॥

## ग्रहायुर्दायविशेषम्।

**वर्गोत्तमस्वराशिद्रेष्काणनवांशक सकृद्द्विगुणम्।**
**वक्रोच्चयोस्त्रिगुणितं द्वित्रिगुणत्वे सकृत्त्रिगुणम्॥३॥**

**भट्टोत्पलः**—ग्रहायुर्दायविशेषमाह। यो ग्रहो वर्गोत्तमस्थितः तदायुर्दायो द्विगुणः कार्यः। यः स्वराशौ भवति स्वद्रेष्काणं

स्वनवांशके भवति तद्दत्तायुर्दायो द्विगुणः कार्यः। यस्तु वक्री भवति तद्दत्तायुर्दायस्त्रिगुणः यस्तूच्चराशौ भवति तस्यापि त्रिगुणः कार्यो द्वित्रिगुणत्वे सकृत्त्रिगुणं सकृदेकवारं त्रिगुणं वक्तव्यम् ॥ ३ ॥

वि० प्र०—अथैवमानीतस्यायुर्दायस्य ग्रहाणां वर्गोत्तमादिस्थत्वे कर्मविशेषमाह- **वर्गोत्तम इत्यादि** । वर्गोत्तमे वर्गोत्तमनवांशे (१।१९) स्वराशौ स्वकीयराशौ, स्वद्रेष्काणे स्वकीयत्रिभागे, स्वनवांशके नैजे नवमांशे (१।८-७) यो ग्रहः स्थितस्तदा तद्दत्तायुर्दायः सकृदेकवारं द्विगुणं द्विगुणितं कार्यम् । वक्रोच्चयोस्त्रिगुणितं यो ग्रहो वक्री प्रतीपगतिस्तथा स्वोच्चराशौ स्वकीयतुङ्गराशौ व्यवस्थितस्तदा तद्दतायुः सकृत्त्रिगुणं विधेयम्। द्वित्रिगुणत्वे प्राप्ते सकृत्त्रिगुणं यत्र वर्गोत्तमादिव्यवस्थितत्वाद्‌द्विगुणत्वं त्रिगुणत्वं च प्राप्तं तत्र सकृदेकवारमेव त्रिगुणं कार्यम्। अत्रासकृद्‌द्विगुणत्वे प्राप्ते सकृदेव द्विगुणमसकृत्त्रिगुणत्वेऽवगते सकृदेव त्रिगुणं कार्यमित्यपि बोध्यम् । कल्याणवर्माप्याह—

वर्गोत्तमे स्वभवने स्वद्रेष्काणे नवांशके ।
द्विगुणं सम्प्रयच्छन्ति त्रिगुणं वक्रतुङ्गयोः ॥ इति ।

अत्राचार्येण यत्सकृत्पदमुपन्यस्तं तत् "स्वराशिगो ग्रहो द्विगुणमायुः प्रयच्छति । यदा च स एव ग्रह स्वराश्यंशके स्थितस्तदा भूयोपि द्विगुणं प्रयच्छति । स्वद्रेष्काणे च यदि भवति तदा पुनः द्विगुणमायुः प्रयच्छति । स एव वक्रश्चेत्तदा भूयस्त्रिगुणमायुः करोति । स्वोच्चगश्चेत्तदा पुनस्त्रिगुणं प्रयच्छति" इत्यनवस्था व्युदासार्थम् ॥ अत उक्तमाचार्येण बृहज्जातके "स्वल्पं तु यद्भूरि तदेव कार्यम्" इति ॥ ३ ॥

**जो ग्रह अपने वर्गोत्तम, अपनी राशि, अपने द्रेष्काण, अपने नवमांश में स्थित हो उस ग्रह की आयु द्विगुणित ( दूनी ) करना। और यदि कोई ग्रह वक्री हो या अपने उच्चराशि में बैठा हो तो उस ग्रह की आयुर्दाय त्रिगुणित ( तिगुनी ) करना। जहाँ द्विगुणित करना और त्रिगुणित करना दोनों प्राप्त हो वहाँ एक ही बार ( केवल ) त्रिगुणित करना ॥ ३ ॥**

शत्रुक्षेत्रस्थग्रहायुर्हानिः ।

**शत्रुक्षेत्रे त्र्यंशं नीचेऽर्धं सूर्यलुप्तकिरणश्च ।**
**क्षपयति स्वायुर्दायान्नास्तं यातौ रविजशुक्रौ ॥ ४ ॥**

**भट्टोत्पलः**—शत्रुक्षेत्रस्थितग्रहायुर्दायहानिमाह । भौमं वर्जयित्वा शत्रुराशिव्यवस्थितो ग्रहः स्वदत्तायुषस्त्रिभागमपहरति । यश्च स्वनीचराशौ भवति स स्वदत्तायुषोऽर्धमपहरति । अस्तंगता ग्रहोऽर्धं हरति । शुक्रशनैश्चरौ अस्तंगतावपि नार्धं हरतः ॥ ४ ॥

वि० प्र०—अथाधुनानीतायुर्दायस्य शत्रुस्थानादिस्थितिवशेन कर्मविशेषमाह—**शत्रुक्षेत्र इति** । ग्रहः शत्रुक्षेत्रे स्वशत्रुराशौ समवस्थितः त्र्यंशं स्वदत्तायुर्दायस्य तृतीयभागमपहरति । अत्र भट्टोत्पलेन वक्रमगारकं हित्वा शत्रुराशिव्यवस्थितो ग्रहः स्वदत्तायुषस्त्रिभागमपहरति" इति वादरायणवचनानुरोधाद्व्याख्यातम् । तथाहि तद्वाक्यम्—

"भूम्याः पुत्रं वर्जयित्वाऽरिभस्था हन्युः स्वात्स्वादायुषस्ते त्रिभागम् ।"

आचार्येणापि बृहज्जातके प्रोक्तम्—"हित्वा वक्रं रिपुगृहगतैर्ह्रीयते स्वत्रिभागः" । इति । केनचिदत्र 'हित्वा वक्रं' इत्यत्र "वक्रं वक्रगतं ( प्रतीपगतिग्रहं ) वर्जयित्वा शत्रुराशिगतेन ग्रहेण स्वादायुषस्त्रिभागो हीयते । वक्रितो ग्रहः शत्रुक्षेत्रगतोपि नापहरतीत्यर्थः । तथाहि—'वक्रचारं विना त्र्यंशं शत्रुराशौ हरेद्ग्रहः ।' इति एतद्बहूनां सम्मतत्वेनाचार्यस्याप्येष एव पक्षोभिमतः अन्यथा 'हित्वा भौमं रिपुगृहगतैर्ह्रीयते स्वत्रिभागः' इत्येवावक्ष्यत् ।" इतिव्यावर्ण्यते । किन्तु फलिते वृद्धवाक्यमेव प्रमाणत्वेन स्वीकारात्संशयग्रस्तचेतसा वराहेण वक्रपदमुपन्यस्तमिति प्रतिभाति । कल्याणवर्मापि वक्रपदमेवेह संरक्षितम् । यथाच तद्वाक्यम्—

रिपुराशौ त्रिभागोनं..........................।
पूर्वोक्तं चिन्तयेत्सर्वं वक्रं मुक्त्वारिराशिषु ॥ इति ।

नीचे स्वनीचराशौ समवस्थितो ग्रहोऽर्द्धं स्वदत्तायुषोऽर्धभागं ह्रपयति। तथा सूर्यलुप्तकिरणश्च सूर्येण लुप्ता किरणा रश्मयो यस्य स तथोक्तो ग्रहोऽपि स्वदत्तायुषोऽर्धभागं ह्रपयति हरति। किन्तु नास्तं यातौ रविजशुक्रौ शनिशुक्रावस्तगतावपि स्वस्वदत्तायुर्दायस्यार्द्धं नापहरतः। उक्तञ्च बादरायणेन—

'अस्तं याताः सर्व एवार्धहानिं कुर्युर्हित्वा दैत्यपूज्यार्कसूनौ'। इति।

कल्याणवर्मणापि—

अर्धोनं निम्नगास्तगाः.......................।

दायं ग्रहाः प्रयच्छन्ति नास्तगौ सितभानुजौ॥ इति।

दीपिकायां तु सर्वं स्फुटं प्रतिपादितम्—

"विनारं शत्रुभे त्र्यशं स्वादर्धं नीचसूर्यगाः।

हित्वा सिताऽसितौ हन्युश्चक्रपातश्च पूर्ववत्॥" इति॥ ४॥

जो ग्रह अपने शत्रु की राशि में स्थित हो उस ग्रह की स्पष्टायु में उस ( स्पष्टायु ) का तृतीयांश कम हो जाता है। जो ग्रह अपने नीच राशि में पड़ा हो अथवा सूर्य के किरण से लुप्त हो गया हो अर्थात् अस्त हो उस ग्रह की स्पष्टायु आधी कम हो जाती है। परन्तु शुक्र और शनि अस्त होने पर भी आयु के आधे का अपहरण नहीं करते अर्थात् यदि शुक्र-शनि अस्त हो तो भी स्पष्टायु ज्यों की त्यों रह जाती है॥ ४॥

## चक्रपातेनायुर्हानिः।

**सर्वार्धत्रिचतुर्थेन्द्रियषष्ठभागान् व्ययाद्धरन्त्यशुभाः।**
**सन्तोऽर्धमतो वामं बलवानेकर्क्षगेष्वेकः॥ ५॥**

**इति श्रीवराहमिहिरकृते लघुजातके आयुर्दायाऽध्यायो नवमः॥ ९॥**

भट्टोत्पलः—चक्रपातेनाप्यायुषो हानिमाह। यः पापग्रहो वामं विपरीतं सप्तमभवनं यावल्लग्नाद्द्वादशे स्थितः स सर्वमा-

युर्दायं हरति। यः एकादशे स अर्धम्, यो दशमे स त्रिभागं, यः नवमे स चतुर्थांशं, योऽष्टमे स पञ्चमांशं, सप्तमस्थः षड्भागमेवं हरंति पापाः। शुभास्तु सौम्यग्रहो लग्नाद्द्वादशस्थः स्वादायुषोऽर्धं हरति, एकादशस्थश्चतुर्भागं, दशमस्थः षड्भागं, नवमस्थोऽष्टमभागं, अष्टमस्थो दशमभागं, सप्तमस्थो द्वादशभागं, द्वादशैकादशदशमनवमाष्टमसप्तमेषु यावत् बहुषु ग्रहेषु एकर्क्षगेषु यो बलवान्स एव यथोक्तं स्वायुर्दायमपहरति, नान्यः ॥ ५ ॥

वि०प्र०—अथ चक्रपातेन ग्रहाणां स्वायुषो हानिमाह—**सर्वमिति**। व्ययाद्द्वादशस्थानाद्वामसुत्क्रमेण सप्तमस्थानान्तं यावत्स्थानेषु व्यवस्थिता अशुभाः पापग्रहाः सर्वार्द्धादीन् भागान् हरन्ति। यथा लग्नाद्द्वादशस्थानस्थः पापग्रहः सर्वमात्मन आयुर्दायं हरति। एकादशस्थः पापः स्वायुषोऽर्धमपहरति। दशमस्थाने स्थितः पापग्रहः स्वायुषस्त्रिभागमपहरति। नवमस्थः पापः स्वायुषश्चतुर्थभागमपहरति। अष्टमस्थः पापः स्वायुषः पञ्चमभागमपहरति। सप्तमस्थः पापः स्वायुषः षड्भागमपहरति। एवं शुभग्रहा अर्धमशुभग्रहोक्तादर्धं हरन्ति। लग्नाद्द्वादशस्थः शुभग्रहः स्वायुषोऽर्द्धमपहरति। एकादशस्थानगतः शुभः स्वायुषश्चतुर्थभागमपहरति। दशमस्थानगतः शुभग्रहः षड्भागमपहरति। नवमस्थानगतः शुभग्रहः स्वदत्तायुर्दायस्याष्टभागमपहरति। अष्टमस्थानगतः शुभग्रहः स्वदत्तायुषो दशमभागमपहरति। सप्तमस्थः शुभग्रहः स्वायुषो द्वादशभागमपहरति। उक्तस्थानेषु यदा द्वौ ग्रहौ बहवो ग्रहा वा व्यवस्थिताः स्युस्तदा तेष्वेवैकर्क्षगेषु बलवान् बलयुक्त एक एव ग्रहःशुभोऽशुभो वा यथोक्तं स्वायषो भागमपहरति। नान्ये तत्रस्था ग्रहा अपहरन्ति। आचार्येणेदं सत्यमतमिहागमानुश्रुतिदर्शनार्थं प्रदर्शितम्। तथा च सत्याचार्यः—

"एकादशोत्क्रमात्सप्तमादिति प्राह हरणकर्माणि।
एकर्क्षगेषु वीर्याधिकः स्वभागं हरेदेकः॥
अर्धं तृतीयभागं चतुर्थकं पञ्चमं च षष्ठं च।

आयुः पिण्डात्पापा हरन्ति सौम्यास्तथार्द्धानि ॥
द्वादशसंस्थः पापः स्वादायं शोभनस्ततोर्द्धं तु।
अपहरति सर्वमायुर्यथा च योगं तथा वक्ष्ये ॥" इति।
"एकर्क्षोपगतानां यो भवति बलाधिको विशेषेण।
क्षपयति यथोक्तमंशं स एव नान्योऽपि तत्रस्थः ॥" इति।

कल्याणवर्मापि—

"सर्वमर्धं तृतीयांशश्चतुर्थः पञ्चमस्तथा।
षष्ठश्चांशः क्षयं याति व्ययाद्वामं ग्रहे स्थिते ॥
सौम्ये चार्धमितो याति नाशं बहुभिरेकगैः।
एक एव बली हन्ति स्वायुषः सर्वदा ग्रहः ॥" इति।

अत्रापि चक्रपातमपहाय पूर्ववत् शत्रुक्षेत्रगतत्वेन नीचस्थत्वेन अस्तंगतत्वेन च द्विवारं त्रिवारं च हानिः प्राप्ता तत्रैकवारमेव हानिः कार्या। यत्र बहुवारमपहानिः गुणना च प्राप्ता तत्र सकृदेवापहानिं कृत्वा सकृदेव गुणना कार्या। किन्त्वपहानौ कर्तव्यायां चक्रपातसम्बन्धिनीमपहानिं कृत्वा शत्रुक्षेत्रादिस्थस्य सकृदपहानिं विधाय ततः सकृदेव गुणना कार्या। अत एव सर्वं स्फुटमाह भगवान् गार्गिः—

राशितुल्यांशसंख्यानि ग्रहोऽब्दानि प्रयच्छति।
लग्नश्च सबलोऽन्यानि भुक्तराशि समानि तु ॥
मासाद्यानयनं कार्यमनुपातादतः परम्।
सर्वार्धत्रिचतुर्थांशान्वामं पञ्च चतुःसमित् ॥
हरन्ति पापाः स्वादायात्तदर्धमितरे ग्रहाः।
व्ययाच्चक्रापहानिस्तु कथितेयं तथा ध्रुवम् ॥
एकस्त्वेकर्क्षगेष्वेव करोति बलवान्ग्रहः।
शत्रुक्षेत्रगतस्त्र्यंशं नीचेर्द्धं सूर्यगस्तथा ॥
हन्ति स्वाद्दायाद्रविगौ न सितादित्यनन्दनौ।
न चावनिसुतश्चांशं शत्रुक्षेत्रगतस्तथा ॥

ध्रुवापहानिः कर्तव्या ततोऽन्यासु बहुष्वपि ।
प्राप्तास्वेकैव कर्तव्या या स्यात्तासु महत्तरा ॥
ततोऽपि गुणना कार्याऽप्येकैव महती सकृत् ।
द्वाभ्यां वर्गोत्तमे स्वांशे स्वद्रेष्काणे स्वके गृहे ॥
त्रिभिर्वक्रगतस्याथ स्वोच्चराशिगतस्य च ।
ग्रहदायो भवत्येवं शोध्यक्षेपकृतस्तु यः ॥ इति ।

यद्यप्याचार्येणेहांशायुः स्वीकृतं तथापि लग्नार्केन्दूनां मध्ये लग्नेऽतिबलवति अंशायुः, सूर्ये बलोपेते पिण्डायुश्चन्द्रे ब लयुक्ते निसर्गायुः स्वीकर्तव्यम् । त्रिष्वपि बलरहितेषु जीवशर्मोक्तमायुर्ग्राह्यमित्याह कल्याण वर्मा—

अंशोद्भवं विलग्नात्पैण्डयं भानोर्निसर्गजं चन्द्रात् ।
एतेषां जो बलवानेकतमस्तस्य कल्पयेदायुः ॥
लग्नदिवाकरचन्द्रास्त्रयोपि बलरिक्तितां यदा यान्ति ।
परमायुषः स्वरांशं ददति खगा जीवशर्मोक्तम् ॥ इति ॥ ५ ॥

इत्याजमगढमण्डलान्तर्गतब्रह्मपुरग्रामाभिजन श्री पं० धर्मदत्त-
द्विवेदिसूनु-ज्यौ०आ० विन्ध्येश्वरीप्रसादद्विवेदिकृतायां
लघुजातकस्य बालबोधिनीटीकायामायुर्दायाध्यायो
नवमः समाप्तः ॥ ९ ॥

पापग्रह बारहवें स्थान से विपरीत सप्तम स्थान तक अर्थात् बारहवें, इग्यारहवें इत्यादि स्थानों में स्थित हों तो क्रम से निम्न लिखित प्रकार से आयु का अपहरण करते हैं। जैसे पापग्रह बारहवें स्थान में हो तो अपनी पूरी स्पष्टायु का अपहरण करता है। इग्यारहवे स्थान में पापग्रह हो तो अपनी आयु का आधा हरण करता है । दशवें स्थान में पापग्रह पड़ा हो तो अपनी आयु का तृतीयांश, नवें में स्थान पापग्रह स्थित हो तो अपनी आयु का चतुर्थांश, आठवें भाव में पापग्रह व्यवस्थित हो तो अपनी आयु का पञ्चमांश,एवं सातवें

स्थान में पापग्रह बैठा हो तो अपनी आयु का षष्ठांश नाश करता है। इसी तरह शुभग्रह बारहवें, इग्यारहवें इत्यादि स्थानों में हो तो उक्त का आधा नष्ट करते हैं। जैसे लग्न से बारहवें स्थान में शुभग्रह हो तो अपने आयुर्दाय का आधा, इग्यारहवें स्थान में शुभग्रह हो तो अपने आयुर्दाय का चतुर्थांश, दशवें शुभग्रह हो तो अपने स्पष्टायु का षष्ठांश, नववें स्थान में शुभग्रह हो तो अपनी आयुर्दाय का अष्टमांश, आठवें स्थान में शुभग्रह हो तो अपने आयुर्दाय का दशमांश, तथा सातवें स्थान में शुभग्रह हो तो अपनी आयु का द्वादशांश अपहरण करता है। यदि इन ( १२।११।.....७) स्थानों में कई ग्रह स्थित हों तो उनमें जो सबसे बली ग्रह हो वही अपनी स्फुटायु में से अपहरण करता है, शेष ग्रह अपनी २ आयु का ह्रास नहीं करते ॥ ५ ॥

इति ज्यौ०आ० विन्ध्येश्वरीप्रसादद्विवेदिकृतायां लघुजातकस्य हिन्दीटीकायामायुर्दायाध्यायो नवमः समाप्तः ॥ ९ ॥



## अथ दशान्तर्दशाध्यायः १० ।



### तत्रादौ दशाप्रमाणम् ।

**शोध्यक्षेपविशुद्धः कालो यो येन जीविते दत्तः ।**
**स विचिन्त्यस्तस्य दशा स्वदशासु फलप्रदाः सर्वे ॥१॥**

भट्टोत्पलः–अथ दशाप्रमाणमाह । प्रथमं ग्रहस्यायुर्दायः कर्तव्यः । ततस्तस्य चक्रपातेन हानिर्या भवति सा कार्या । यत्र द्वित्रिगुणितं भवति तदपि कार्यम् । एवं कृते शोध्यक्षेपविशुद्धः कालो भवति । शोध्यो हानिः क्षेपो गुणना तेन शुद्धः कालो येन ग्रहेण जीविते दत्तस्तावत्कालं तस्य ग्रहस्य सम्बन्धिनी दशा भवेदेवं विचिन्त्य शुभाऽशुभफलं ग्रहाणां दशाजं बोध्यम् ॥ १ ॥

वि० प्र०—अथ दशान्तर्दशाध्यायो व्याख्यायते। तत्र दशाप्रमाणं तत्फलपरिपाककालञ्चाह—**शोध्यक्षेप** इति। शोध्यक्षेपविशुद्धः शोध्योऽपहरणं क्षेपो गुणनं ताभ्यां विशुद्धः कालः। प्रथमं 'राश्यंश-कला गुणिता' इत्यादिना ग्रहस्यायुर्दायः कर्तव्यः। ततश्चक्रपातेन 'सर्वार्धत्रिचतुर्थेन्द्रियतुभागा' नित्यादिना या हानिर्भवति सा कर्तव्या। ततः 'शत्रुक्षेत्रे त्र्यंश' मित्यादिना प्राप्ता हानिः कर्तव्याः। तत्रापि द्वित्रि-गुणत्वादिप्राप्ते एकमेव कार्यमित्येवं कृते शोध्यक्षपविशुद्धः कालः ग्रहायुर्दायरूपो भवति। स यावन्मितो येन ग्रहेण जीविते आयुर्दाये दत्तस्तावन्मितं वर्षादि तस्य ग्रहस्य सम्बन्धिनी दशा भवति। आयुर्दाय-तुल्यमेव ग्रहदशामानं भवतीत्यर्थः। इति विचिन्त्यः। सर्वे ग्रहा लग्नं च स्वदशासु फलप्रदाः शुभाशुभफलप्रदातारो भवन्ति। उक्तञ्च सारा-वल्याम्—

आयुषो येन यद्दत्तं दशा तस्य प्रकीर्तिता।
स्वदोषगुणयोगेन स्वदशासु फलप्रदाः॥ इति॥ १॥

पूर्व के ( आयुर्दाय ) अध्याय में जिस ग्रह का जो वर्षमासादि आयुर्दाय शोधन करने पर या द्विगुणित त्रिगुणित इत्यादि विधि करने पर आवे वही वर्षादि उस ग्रह की दशा का प्रमाण होता है। सब ग्रह अपनी अपनी दशा अन्तर्दशा में अपना २ शुभाशुभ फल देते हैं॥१॥

### दशाक्रमः।

**लग्नार्कशशाङ्कानां यो बलवांस्तद्दशा भवेत्प्रथमा।**
**तत्केन्द्रपणफराऽऽपोक्लिमगतानां बलाच्छेषा॥ २॥**

**भट्टोत्पलः**—ग्रहदशाप्रमाणे क्रममाह। लग्नार्कचन्द्राणां मध्ये योबलवांस्तस्य प्रथमा दशा भवेत्। तत प्रथमदशापतेर्यावन्तो ग्रहाः केन्द्रस्था भवन्ति तेषां बलाधिक्येन भवेद्दशा। एवं सर्वेषां केन्द्र-

स्थानां कल्पयित्वा ततः पणफरस्थानामनेन क्रमेण कर्तव्या । ततः आपोक्लिमस्थानगतानां तेनैव क्रमेण दशा भवति । शेषां बलात् ज्ञातव्याः ॥ २ ॥

वि० प०—अथ ज्ञातायां प्रत्येकग्रहसम्बन्धिनीदशायां तद्भोगक्रममाह—लग्नार्केइति । लग्नार्कशशाङ्कानां लग्नं चार्कश्च चन्द्रश्च ते तथोक्तास्तेषां मध्ये योऽधिकबलवान् तद्दशा तस्य ग्रहस्य दशा प्रथमा पूर्वं भवति । ततस्तत्केन्द्रपणफरापोक्लिमगतानां तस्य प्रथमदशाधिपतेः केन्द्रस्थस्य ग्रहस्य दशा भवति । यदि प्रथमदशाधिपतेः केन्द्रे बहवो ग्रहा स्युस्तदा तेषां मध्याद्बलवतो ग्रहस्य दशा कल्प्या । ततो दशाधिपतेः पणफरस्थानां मध्याद्बलयुक्तस्य ग्रहस्य दशा, तत आपोक्लिमस्थानगतानां मध्याद्बलिनो ग्रहस्य दशा भवति । केन्द्रस्थानां ग्रहाणामभावे प्रथमदशाधिपतेरनन्तरं तत्पणफरगतानां ग्रहाणां मध्याद्बलयुक्तस्य ग्रहस्य दशा भवति । तत आपोक्लिमगतानां दशा कल्पनीया । केन्द्रस्थानां पणफरस्थानां चाऽभावे आपोक्लिमगतानामेव । यदि केन्द्रस्था ग्रहा भवन्ति, परफरस्था न भवन्ति, आपोक्लिमस्था भवन्ति । तदा केन्द्रस्थानां कल्पयित्वा आपोक्लिमस्थानामेव कल्पनीया । केवलं केन्द्रस्था एव भवन्ति तदा, केन्द्रस्थानामेव कल्पनीया । एवं पणफरस्था एव भवन्ति तदा पणफरस्थानामेव कल्प्या । तथाऽऽपोक्लिमस्था एव सन्ति तदा तेषामेव कल्पनोया । तदनन्तरं लग्नार्कशशांकानामधिकबलाग्रहापेक्षया ऽल्पबलिनो ग्रहस्य दशा ततस्तस्य केन्द्रादिस्थग्रहदशा कल्पनीया । तत एवं बलक्रमेण दशा ज्ञेया । उक्तञ्च कल्याणवर्मणा—

होरादिनेशशशिनां प्रबलो भवेद्य-
स्तत्कण्टकादिषु गताः कथिताः दशेशाः ।
पूर्वा दशाऽतिबलिनः सदशेऽब्दवृद्धेः
साम्ये भवेच्च शरदां प्रथमादितस्य ॥ इति ।

तथा चोक्तं यवनेश्वरेण—

निशाकरादित्यविलग्नमध्ये तत्कालयोगाधिकं बलं यः ।
विभर्त्ति तस्यादिदशेष्यते सा शेषास्ततः शेषबलक्रमेण ॥
पूर्वे तु केन्द्रोपगताः फलन्ति मध्ये वयः पणफरा निविष्टाः ।
आपोक्लिमस्थाः फलदा वयोन्त्ये यथाबलं स्वं समुपैति पूर्वम् ॥इति।

बलानां साम्येऽधिकवर्षदस्य वर्षसाम्येऽपि प्रथमोदितस्य दशा कल्पनीया । तथा चाह भगवान् गार्गिः—

बली लग्नेन्दुसूर्याणां दशामाद्यां प्रयच्छति ।
तस्मात्ततः प्रयच्छन्ति केन्द्रादिस्थाः क्रमेण तु ॥
तत्रापि बलिनः पूर्वं तत्साम्ये बहुदायकाः ।
तत्साम्येऽपि प्रयच्छति ये पूर्वं रविविच्युताः ॥ इति ।

अत्र बलसाम्यं स्वसुहृत्त्रिकोणोच्चादिस्थानदिक्चेष्टाकालनिसर्गबलवशाद्बोध्यम् ॥ २ ॥

लग्न, सूर्य और चन्द्रमा इन तीनों में जो अधिक बली हो उसी की दशा पहले होती है। उसके बाद उससे केन्द्र(१।४।७।१०)स्थितग्रहों में सबसे अधिक बलवान् ग्रह की दशा होती है। उसके अनन्तर पणफर [ २।५।८।११ ] स्थितग्रहों में सब से अधिक बलवान् ग्रह की दशा होती है। तत्पश्चात् आपोक्लिम ( ३।६।९।१२ ) स्थित ग्रहों में से अधिक बलवाले ग्रह की दशा होती है। उसके बाद शेषग्रहों में जो बली हों उसकी दशा होती है । इसके बाद बल क्रम से दशाक्रम जानना ॥ २ ॥

## दशाशुभाशुभज्ञानम् ।

**मित्रोच्चस्वगृहांशोपगतानां शोभना दशाः सर्वाः ।**
**स्वोच्चाभिलाषिणामपि न तु कथितविपर्ययस्थानाम् ३**

**भट्टोत्पलः**—एवं दशापतौ ज्ञाते तद्दशाशुभाशुभज्ञानमाह । जन्मकाले यो ग्रहो मित्रक्षेत्रस्थः, यश्च स्वोच्चस्थः, यश्च स्वक्षे-

त्रस्थः, स्वनवांशगतः तस्य दशा शोभना । उच्चाद् द्वादशराशौ नवमनवांशस्थ उच्चाभिलाषी तस्यापि दशा शोभना । न तु विपरीतगतानां । जन्मकाले यो ग्रहः शत्रुक्षेत्रस्थः शत्रुनवांशस्थः नीचस्थः नीचाभिलाषी तस्य दशा दुष्टा अशुभा अन्यस्थानस्थितस्य ग्रहस्य मध्या दशा भवति ।। ३ ।।

वि० प्र०—अथ दशाधीशे ज्ञाते तद्दशायाः शुभाशुभत्वज्ञानमाह-- **मित्रोच्च इति** । मित्रोच्चस्वगृहांशोपगतानां जन्मकाले स्वमित्रराशिगतानां स्वोच्चगतानां स्वराशिगतानां स्वनवमांशगानां स्वद्रेष्काणगतानां ग्रहाणां सर्वा सम्पूर्णा दशा शोभनाः स्युः । तथा स्वोच्चाभिलाषिणामपि उच्चादद्वादशराशेनवमे नवमांशे गतानां ग्रहाणामपि सर्वा दशा शोभना भवति । न तु कथितविपर्ययस्थानाम् कथितादुक्ताद्विपरीतस्थानगतानाम् । अर्थात् जन्मकाले स्वशत्रुराशि-स्वशत्रुनवांश-स्वशत्रुद्रेष्काण-स्वनीचगानां-स्वनीचाभिलाषिणामपि दशा अशुभफला भवन्ति । एभ्यो स्वोच्चादि-स्वनीचादिभ्यो भिन्नस्थानगतानां ग्रहाणां दशा मध्यफला भवति । भगवता गार्गिणा उच्चादिस्थानगतानां सम्पूर्णाख्यादिसंज्ञामुक्त्वा तत्फलं प्रतिपादितम् । तथाहि —

"सर्वैर्बलैरुपेतस्य परमोच्चगतस्य च ।
सम्पूर्णाख्या दशा ज्ञेया धनारोग्यविवर्धिनी ॥
सर्वैर्बलैर्विहीनस्य नीचराशिगतस्य च ।
रिक्तानाम दशा ज्ञेया धनारोग्यविनाशिनी ॥
स्वोच्चराशिगतस्याथ किञ्चिद्बलयुतस्य च ।
पूर्णा नाम दशा ज्ञेया धनवृद्धिकरी शुभा ॥
यः स्यात्परमनीचस्थस्तथा चारिनवांशके ।
तस्यारिष्टफला नाम व्याध्यनर्थविवर्धिनी ॥" इति ॥ ३ ॥

**जन्म काल में जो ग्रह अपने मित्र के राशिमें, अपने उच्चराशि ( या परमोच्च ) में, अपनी राशि में अथवा अपने नवमांश में स्थित**

हो उस ग्रह की ( पूरी ) दशा नाना प्रकार के शुभफलों को देने वाली होती है। और जो ग्रह उच्चाभिलाषी अर्थात् उच्चराशि से बारहवें राशि के नववें नवमांश में पड़ा हो उस ग्रह की दशा भी शुभफलों को देने वाली होती है। जो इस से विपरीत अर्थात् अपने शत्रु की राशि, अपनी नीच राशि,अपने शत्रु के नवमांश में स्थित हो वा नीचाभिलाषी अर्थात् अपनी नीच राशि से बारहवीं राशि के नववें नवमांश में वर्तमान हो तो उसग्रह की दशा अनेक अशुभफलों को देने वाली होती है। इन उक्त स्थानों से अतिरिक्त स्थानों में स्थित ग्रह की दशाऽन्तर्दशा मध्यम ( न उत्तम और न अधम ) फल देने वाली होती है ॥ ३ ॥

लग्नदशाफलम् ।

होरादशा दृकाणैः पूजितमध्याधमा चरेत्क्रमशः ।
द्विशरीरे विपरीता स्थिरेषु पापेष्टमध्यफला ॥ ४ ॥

भट्टोत्पलः—होरा लग्नं तस्य दशा द्रेष्काणैः शुभाशुभा ज्ञेया। तत्र चरराशौ लग्नगते प्रथमद्रेष्काणे जातस्य पूजिता दशा भवेत्। द्वितीये मध्यफला, तृतीये अधमा नेष्टा। अनुक्रमेण द्विशरीरे विपरीता तत्र द्विस्वभावराशौ लग्नगते प्रथमद्रेष्काणे अधमा, द्वितीयद्रेष्काणे मध्यफला, तृतीयद्रेष्काणे पूजिता शुभा। स्थिरे स्थिरराशौ लग्नगते प्रथमद्रेष्काणे पापा द्वितीये इष्टफला तृतीये द्रेष्काणे मध्यफला बोध्या ॥ ४ ॥

वि०प्र०—अथ लग्नदशायां द्रेष्काणवशेन शुभाशुभफलज्ञानमाह—होरादशेति। चरे चरराशौ लग्नगते द्रेष्काणैः क्रमशः द्रेष्काणक्रमेण पूजितमध्याधमा होरादशा ज्ञेया। चरराशेः प्रथमद्रेष्काणे जातस्य पूजिता शोभना दशा, द्वितीयद्रेष्काणे जातस्य मध्या सामान्यफला ( न शुभा नाप्यशुभेति ) तृतीयद्रेष्काणे जातस्याधमाऽशुभफला दशा ज्ञेया। द्विशरीरे द्विस्वभावराशौ विपरीता द्रेष्काणक्रमेण विपरीतफला लग्न-

दशा ज्ञेया । तद्यथा द्विस्वभावराशौ लग्नगते प्रथमद्रेष्काणेऽशुभफला, द्वितीयद्रेष्काणे जातस्य मध्यफला, तृतीयद्रेष्काणे जातस्य शोभना दशा ज्ञेया । एवं स्थिरेषु स्थिरराशिषु लग्नगतेषु द्रेष्काणक्रमेण पापेष्टमध्यफला दशा ज्ञेयाः । स्थिरराशौ प्रथमद्रेष्काणे जातस्य पापफलाऽशुभफलदा, द्वितीयद्रेष्काणे जातस्येष्टफला शोभनफलदा, तृतीयद्रेष्काणे जातस्य मध्यफला मिश्रफला लग्नदशा ज्ञेयाः। आह च सारावल्यां कल्याणवर्मापि–

द्रेष्काणे च दशा मूर्तेः पूजिता मध्यमाऽधमा ।
चरे मिश्रप्रतीपा च स्थिरे पापेष्टमध्यमाः ॥ इति ॥ ४ ॥

चरलग्न के पहले द्रेष्काण में जन्म हो तो लग्न की दशा शुभफलदायिका, दूसरे द्रेष्काण में जन्म हो तो मध्य ( न उत्तम, न अधम ) फल देने वाली, और तीसरे द्रेष्काण में जन्म हो तो लग्न की दशा अशुभफलदायिनी होती है। द्विस्वभाव लग्नमें विपरीत फल होता है अर्थात् द्विस्वभावराशि के प्रथम द्रेष्काण में जन्म हो तो लग्नदशा का फल अशुभ, द्वितीय द्रेष्काण में जन्म हो तो मध्यफल और तृतीय द्रेष्काण में जन्म हो तो शुभ फल होता है। एवं स्थिर लग्न के प्रथम द्रेष्काण में जन्म हो तो पाप ( अशुभ ) फल, दूसरे द्रेष्काण में जन्म हो तो इष्ट ( शुभ ) फल और तीसरे द्रेष्काण में जन्म हो तो मध्य ( न शुभ और न अशुभ ) फल होता है ॥ ४ ॥

## अन्तर्दशाक्रमः ।

**एकर्क्षेऽर्धं त्र्यंशं त्रिकोणयोः सप्तमे तु सप्तांशम् ।**
**चतुरस्रयोस्तु पादं पाचयति गतो ग्रहः स्वगुणैः ॥५॥**

भट्टोत्पलः–अन्तर्दशामाह । येन ग्रहेण सह यो ग्रहः एकर्क्षे स्थितः स तद्दत्तदशाया अर्धमपहृत्य स्वैर्दशागुणैः पाचयति । दशापतेस्त्रिकोणयोः स्थितो ग्रहः दशापतिदत्तदशायाः त्र्यंशं पाचयति दशापतेः सप्तमे स्थाने स्थितो ग्रहो दशापतिदत्तदशाका-

लात्सप्तमांशं स्वैर्गुणैः पाचयति । दशापतेश्चतुर्थस्थानस्थोऽष्टमस्थानस्थो वा ग्रहः पादं चतुर्थांशं दशापतिदत्तकालादपहृत्य स्वगुणैः पाचयति । न केवलं ग्रहाल्लग्नादपि एतेषु स्थानेषु समवस्थितो ग्रहः यथोक्तमंशं पाचयति यत्रैकस्था बहवो भवंति तदा तेषु मध्ये यो बलवान् स एव पाचयति नान्यः ॥ ५ ॥

वि० प्र०—अथान्तर्दशापाकज्ञानमाह—एकर्क्षं इति । एकर्क्षे स्थितः दशाधीशेन सहैकराशिगतो ग्रहो दशाधीशदत्तदशाकालस्य यदर्धं तदपहृत्य स्वगुणैः स्वदशागुणैः पाचयति । त्रिकोणयोर्दशापतेस्त्रिकोणयोर्नवपञ्चमयोरन्यतमस्थानव्यवस्थितो ग्रहस्त्र्यंशं दशापतिदत्तान्तर्दशाकालस्य यत्तृतीयांशं तत्स्वगुणैः पाचयति । सप्तमे तु सप्तांशं दशापतितः सप्तमस्थाने गतो ग्रहो दशापतिदत्तान्तर्दशाकालस्य सप्तमांशमपहृत्य स्वदशागुणैः पाचयति । चतुरस्रयोस्तु पादं दशाधीशस्य चतुरस्रयोश्चतुर्थाष्टमस्थानयोरन्यतमस्थानगतो ग्रहो पादं दशापतिदत्तान्तर्दशाकालस्य चतुर्थांशमपहृत्य स्वदशागुणैःशुभाऽशुभैः पाचयति । न केवलं ग्रहादेवग्रहाः पाचयन्ति किन्तु लग्नादपि एकर्क्षेऽर्धमित्यादिदर्शितदिशा परिपाचयन्ति । अत्रैकवचननिर्देशा 'यद्येकस्मिन्स्थाने बहवो ग्रहा भवन्ति तदा तेष्वधिकबलवानेक एव ग्रहः परिपाचयति नान्ये' इत्यवगम्यते । उक्तञ्च सत्याचार्येण—

अर्धं तृतीयमर्धात्तथार्धं स्वाच्च सप्तमं भागम् ।<br>
एकर्क्ष-नव-पञ्चम-चतुर्थ निधनाद्य-सप्तानाम् ॥<br>
दद्युर्ग्रहा ग्रहाणां स्वदशा स्वान्तर्दशाख्यानाम् ।<br>
फलकालामिश्रविविधं क्रमेण भेद्याश्च तेऽप्येवम् ॥<br>
एकर्क्षगेषु बलवान्भागहरो मित्रतो रिपोर्वाऽपि ।<br>
मित्रे च पुष्टफलं तस्मिन्काले रिपोर्नैवम् ॥ इति ॥ ५ ॥

पहले जो दशा आनयन किया है उसमें जो ग्रह किसी ग्रह के साथ एकही राशिमें स्थित हो वह अपने साथी ग्रह के आनीत स्पष्ट दशाकाल में से आधा दशाकाल अपहरण कर के अपना शुभ या

अशुभ फल देता है। और दशाधिपति से त्रिकोण ( नवम–पञ्चम ) में स्थित ग्रह दशापति के स्थूलदशाकाल का तीसरा भाग अपहरण करके स्वकीय शुभाशुभ फल देता है। जो ग्रह दशापति से सातवें स्थान में स्थित हो वह स्थूलदशाधीशके दशामानमें से सातवाँ हिस्सा लेकर अपना शुभाऽशुभ फल देता है। जो ग्रह दशाधीश से चौथे या आठवें भाव में पड़ा हो वह दशाधीश के दशाकाल में से उसका चौथा हिस्सा अपहरण करके अपना शुभाऽशुभ फल देता है। एवं लग्न से भी दशाकाल का भाग अपहरण करके ग्रह अपना२ फल देते हैं। यदि एक स्थान में कई ग्रह हो तो उनमें जो ग्रह सबसे बलवान् हो वही दशाकाल के भाग का अपहरण करता है। शेष ग्रह अपहरण नहीं करते ॥ ५ ॥

विशेषान्तर्दशाक्रमः ।

भागा सदृशच्छेदैर्विवर्जिताः संयुता दशाच्छेदाः ।
प्रत्यंशगुणाकाराः पृथक् पृथक् चान्तर्दशास्ताःस्युः॥६॥

इति श्रीवराहमिहिराचार्यविरचिते लघुजातके
दशान्तर्दशाध्यायो दशमः ॥ १० ॥

भट्टोत्पलः–'भागादौ तु सदा रूपं विन्यस्य सदृशीकृतम् ।
सर्वच्छेदांशसंयोगैश्छिद्यादंतर्दशाफलम् ॥
रूपस्थानगतैरंशैर्यल्लब्धं अंगुणीकृतम् ।
दशा ह्यंतर्दशा प्रोक्ता नित्यं यवनसूरिभिः" ॥

दशापते "रेकर्क्षेऽर्धं त्र्यंशं त्रिकोणयो" रित्यादि दर्शितस्थानेषु यो ग्रहो भवति तत्स्थानोक्तसंस्था भागाःरूपस्याधः स्थाप्याः दशापतेरादावेव रूपं परिकल्पयेत् । ततःपरस्परच्छेदहता कार्याः एकैकं प्रत्येकेन छेदेन गुणयेत् । एवं कृते भागाः सदृशच्छेदा भवन्ति । उपरिगता राशयो दशापिण्डस्य पृथक् पृथक् गुणाकारा भवन्ति । एकीकृताश्च सर्वेषां एक एव भागहारः एव

गुणिताविभक्ता ग्रहदत्तायुःपिण्डात्पृथक् पृथक् अन्तर्दशा लभ्यते। तद्यथाभागाः एते भागाः

| | | | | |
|---|---|---|---|---|
| १ | १ | १ | १ | १ |
| १ | २ | ३ | ७ | ४ |

परस्परच्छेदेन हताः सांशाः कार्याः यावत्सर्व एव समच्छेदा भवंति कृता एवंविधा जाताः एते एव संयुक्ता जाताः ३७४

| | | | | |
|---|---|---|---|---|
| १६८ | ८४ | ५६ | २४ | ४२ |
| १६८ | १६८ | १६८ | १६८ | १६८ |

छेदाः ग्रहदत्तायुःपिण्डं वर्षमासादिवसघटिकांतं संस्थाप्य पृथक् पृथक् गुणकारेण गुणयेत् घटिकानां षष्ट्या भागमपहृत्य दिवसेषु क्षिपेत् दिवसानां त्रिंशता भागमपहृत्य मासेषु क्षिपेत् मासानां द्वादशभिर्भागमपहृत्य वर्षेषु क्षिपेत्, अवशेषं सर्व स्थाप्यं ततो वर्षस्थानेषु भागहारेण ३७४ भागमपहृत्यावाप्तं वर्षाणि। शेषं द्वादशभिः संगुण्यावस्थितान् मासान् संयोज्य छेदेन विभज्य अवाप्तं मासाः वर्षाणामधः स्थाप्याः। तदेवं शेषं त्रिंशता संगुण्यावस्थितानि दिनानि संयोज्य छेदेन विभज्यावाप्तं दिवसाः ते मासानामधः स्थाप्याः। तदेवं शेषं षष्ट्या संगुण्यावस्थिता घटिका संयोज्य छेदेन विभज्यावाप्तं घटिका दिवसानामधः स्थाप्याः। एवं यथासम्भवं सर्वेषां ग्रहाणामन्तर्दशाः कार्याः। दशाविभागक्रमेणैवान्तर्दशाविभागकल्पना कर्तव्या। विदशोपदशाविभागोऽप्येवमेव॥ ६॥

इति दशान्तर्दशाऽध्यायो दशमः॥ १०॥

वि० प्र०—अथान्तर्दशापरिकल्पनज्ञानमाह—**भागा इति**। दशाधिपतेः प्रोक्तस्थानेषु यत्र ग्रहो भवति तत्स्थानोक्ता अर्धादिका संख्या (राशयः) भागशब्देन व्यवह्रियन्ते। ते भागाः शहशच्छेदै-र्विवर्जिता स्तेषां भागानां "अन्योन्यहाराभिहतौ हरांशौ राश्योः समच्छेदविधानमेव" मित्यादि भास्कराचार्योक्तविधिना समच्छेदीकृत्य ते छेदा अपास्याः। केवलमुपरिगता एवाङ्काः स्थाप्याः। तेषां योगस्तु सर्वत्र दशाच्छेदः दशाभागहारः। त एव मूलदशापिण्डस्य पृथक् २ गुणका भवन्ति। अर्धादशा-

पिण्डः वर्षमासादिकः पृथक्पृथक् तेन भागेन गुणनीयस्तत्र गुणनफलेषु पलस्थाने षष्ट्या भागमपहृत्यावाप्तं घटिकास्थाने योज्यं शेषं पलास्थाने स्थाप्यम् एवं घटिकानां षष्ट्या भागमपहृत्य लब्धं दिनस्थाने क्षेप्यम्। शेषं घटिकास्थाने एव स्थाप्यम्। एवं दिनानां त्रिंशद्भागमपनोद्य लब्धं मासेषु योज्यम्। शेषं दिनस्थाने एव निवेश्यम्। एवमेव मासानां द्वादश-भागमपहृत्य लब्धं वर्षेषु योज्यम्। शेषं मासस्थाने एव स्थाप्यम्। एवं वर्षादिकं गुणनफलं भवति। ततः सर्वेषां योगरूपभागहारेण विहृते लब्धं वर्षाणि, शे ं द्वादशभिः संगुण्य मासशेषं क्षिप्त्वा तेनैव भागहारेणावाप्तं मासाः, मासशेषं त्रिंशता संगुण्य दिनशेषं प्रक्षिप्य तेन भागहारेण भक्ते लब्धं दिनानि, पुनः दिनशेषं षष्ट्या संगुण्य पूर्वस्थापितदिनानि प्रक्षिप्य तनैव हारेण विहृते लब्धं घटिका भवन्ति। एवं दिनशेषात्प-लान्यानेयानीति वर्षादिकाऽन्तर्दशा भवति। अमुनैव प्रकारेण सर्वेषां ग्रहाणामन्तर्दशा आनेयाः। तत्र दशाविभागक्रमेणैवाऽन्तर्दशा कल्प-नीया। तद्यथा—दशाधीशेन सहैक एव कश्चिद्ग्रहः स्थितो नान्येषु स्थानेषु तदा स एव स्वदशागुणैः पाचको भवति। यदि च दशापतेश्चतुरस्त्रयोर न्यतमस्थानगतः कश्चिद्ग्रहो नान्येषु तदा स एव दशापाचकः। एवं द्वित्रिस्थानेषु गता ग्रहाः स्वस्वप्रोक्तभागसमा दशापाचका भवन्ति। इति सर्वत्र बोध्यम्। तत्र प्रथमं मूलदशाधिपतेरेवान्तर्दशापाचकस्तत एकर्क्षगस्य ततस्त्रिकोणस्थस्य ततः सप्तमगस्य ततश्चतुरस्रस्थस्येति। दशाक्रमपाचने यस्य ग्रहस्यान्तर्दशा पाचकत्वं न प्राप्तं तस्य न कथनीयं, यस्य च प्राप्तं तस्यैव वक्तव्यमिति ॥ ६ ॥

इत्याजमगढमण्डलान्तर्गतब्रह्मपुरग्रामाभिजन श्री पं० धर्मदत्त-
द्विवेदिसूनु-ज्यौ०आ० विन्ध्येश्वरीप्रसादद्विवेदिकृतायां
लघुजातकस्य बालबोधिनीटीकायां दशान्तर्दशा-
ध्यायो दशमः समाप्तः ॥ १० ॥

पूर्व श्लोक में कहे गये भागहारों में १ अंश कल्पना करके सबों का 'अन्योन्यहाराभिहतौ हरांशौ, इत्यादि लीलावती में कहे हुए प्रकार से समच्छेद करके हरों को त्याग देवे। फिर सब अंशोके योग को दशा का हार ( भाजक ) कल्पना कर। फिर प्रत्येक अंशो को दशाधिपति के वर्षादि दशामान से गुण के दशा के भाग हार से भाग देना तो अन्तर्दशा का मान वर्षादिक होता है ॥ ६ ॥

इति ज्यौ०आ० विन्ध्येश्वरीप्रसादद्विवेदिकृतायां
लघुजातकस्य हिन्दीटीकायां दशान्तर्दशा-
ध्यायो दशमः समाप्तः ॥ १० ॥



## अथाष्टकवर्गाऽध्यायः ॥ ११ ॥



### तत्रादौ सूर्याष्टकवर्गः ।

**केन्द्रायाष्टद्विनवस्वर्कः स्वादार्किभौमतश्च शुभः ।**
**षट्सप्तान्त्येषु सितात् षडायधीधर्मगो जीवात् ॥१॥**
**उपचयगोऽर्कश्चंद्रादुपचयनवमांत्यधीयुतः सौम्यात् ।**
**लग्नादुपचयबन्धुव्ययस्थितः शोभनः प्रोक्तः॥ २ ॥**

भट्टोत्पलः—अथाष्टकवर्गः । जन्मकाले यत्रार्को व्यवस्थितः तस्मात्स्थानात्केन्द्रायाष्टद्विनवसु १।४।७।१०।११।८।२।९ अर्कः शुभः, आर्किभौमाभ्यां एतेषु स्थानेषु शुभः । षट्सप्तान्त्येषु सितात् ६।७।१२ एतेषु शुक्राच्छुभः। षडायधीधर्मगो जीवात् ६।११।५।९ एतेषु स्थानेषु गुरोः सकाशाच्छुभः । चंद्रांदुपचयगाः ३।६।११।१० एतेषु चन्द्राच्छुभः । सौम्यादुपचयनवान्त्यधीयुतः ३।६।११।१०। ९।१२।५ एतेषु सौम्याच्छुभः । लग्नादुपचयबन्धुव्ययस्थितः ३।६।११।१०।४।१२ एतेषु लग्नात् शुभः। इति सूर्यः ॥ १-२ ॥

वि० प्र०—अथ दशान्तर्दशाकथनानन्तरं स्थिराष्टकवर्गस्यावसरप्राप्ते लग्नाष्टमेभ्यः सर्वग्रहेभ्यः सकाशात्संचारवशात्प्रतिराशौ विचरत एकैकस्य ग्रहस्य शुभाशुभफलनिरूपणार्थमष्टकवर्गा निरूप्यन्ते। तदाह गुणाकरः—

यद्गोचरे जन्मगृहाद्ग्रहाणां पृथक्फलं द्वादशराशिपूक्तम्।
नृणां तदेकत्वभुवां फलस्य भेदादनेकान्तिकमुक्तमार्यैः॥
यत्र स्थितो शीतकरो नराणां तं जन्मराशिं समुदाहरन्ति।
यथा तथा स्वेषु खगाः समस्ताः स्थितानि ते सप्तकुतो भवन्ति॥
अतोऽष्टराशिर्मनुजोऽत्र सर्वः प्रोक्तोऽत्र तेभ्यश्च शुभाशुभानि।
फलानि तेषां च वियोगयोगादद्यष्टवर्गैस्तथफलं स्फुटं स्यात्॥ इति।

तत्रादावादित्यस्याष्टकवर्गमार्याभ्यामाह। **केन्द्रादिति**। पुरुषस्य जन्मकाले यस्मिन्राशौ सूर्यो व्यवस्थितः स एव सूर्यस्य स्वस्थानम्। एवं सर्वेषां ग्रहाणां स्वस्थानं बोध्यम्। तस्मात्स्वस्थानात्केन्द्राष्टद्विनवसु लग्नचतुर्थसप्तमदशमाष्टमद्वितीयनवमेषु स्थानेषु (१।४।७।१०।८।२।९) अर्कः शुभः शोभनफलदो भवति। अर्थादेवान्यस्थानेषु व्यवस्थितोऽनिष्टफलदायकः। "स्थानेष्वेतेषु शुभाः शेषेष्वहिता भवन्ती" तिवक्ष्यमाणत्वादित्येवं सर्वत्र ज्ञातव्यम्। आर्किभौमतश्चोक्तस्थानेष्वर्कःशुभः। येषु स्थानेषु स्वादर्कः शुभस्तेष्वेव स्थानेषु शनिभौमाभ्यामप्यर्कः शोभन इत्यर्थः। सिताच्छुक्रात्षट्सप्तान्त्येषु षष्ठसप्तमद्वादशस्थानेषु ( ६।७।१२ ) अर्कः शोभनः। जीवाद्गुरोः षडायधीधर्मगः षष्ठैकादशपञ्चमनवमेषु (६।११।५।९) स्थानेषु व्यवस्थितोऽर्कः शोभनः। चन्द्रादुपचयगस्तृतीयषष्ठदशमैकादशस्थानस्थितोऽर्कः शुभः। सौम्याद्बुधादुपचयनवमान्त्यधीयुतस्तृतीयषष्ठदशमैकादशनवमद्वादशपञ्चम ( ३।६।१०।११।९।१२।५ ) स्थानेषु समवस्थितोऽर्कः शुभफलदाता भवति। लग्नाज्जन्मलग्नादुपचयबन्धुव्ययस्थितः तृतीय-षष्ठ-दशमैकादश-चतुर्थद्वादशस्थान (३।६।१०।११।४।१२) गत आदित्यः शोभनः समीचीनफलदः प्रोक्तः कथितः॥ १–२॥

जन्मकालमें-सूर्य जहाँ(जिस भाव में)स्थित हो उस स्थानसे केन्द्र (१।४।७।१०),इग्यारवें, आठवें,दूसरे,नववें राशि पर चार वश जाय तो शुभदायक होता है। शनैश्चर और मङ्गल से भी इन्हीं (१।४।७।१०।११। ८।२।९) स्थानों में सूर्य हो तो शुभफलदाता होता है। शुक्र से छठवें, सातवें और बारहवें स्थान में; बृहस्पति से छठवें, इग्यारहवें, पाँचवें और नववें स्थान में सूर्य शुभफलका देने वाला होता है। एवं चन्द्रमा से उपचय (३।६।१०।११) स्थानमें; बुध से उपचय (३।६।१०।११),नववें बारहवें, पाचवें स्थान में; लग्न से उपचय (३।६।१०।११), चौथे, बारहवें स्थान में सूर्य हो तो अच्छे फलों का देने वाला होता है ॥ १-२ ॥

रवेरष्टकवर्गाङ्काः ॥ ४८ ॥

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | ल. |
|---|---|---|---|---|---|---|---|
| १ | ३ | १ | ३ | ५ | ६ | १ | ३ |
| २ | ६ | २ | ५ | ६ | ७ | २ | ४ |
| ४ | १० | ४ | ६ | ९ | १२ | ४ | ६ |
| ७ | ११ | ७ | ९ | ११ | ० | ७ | १० |
| ८ | ० | ८ | १० | ० | ० | ८ | ११ |
| ९ | ० | ९ | ११ | ० | ० | ९ | १२ |
| १० | ० | १० | १२ | ० | ० | १० | ० |
| ११ | ० | ११ | ० | ० | ० | ११ | ० |

चन्द्राष्टकवर्गः ।

शश्युपचयेषुलग्नात्साद्यमुनिःस्वात्कुजात्सस्वनवधीस्थः।
सूर्यात्साष्टस्मरगस्त्रिषडायसुतेषु सूर्यसुतात् ॥ ३ ॥

**ज्ञात्केन्द्रत्रिसुतायाष्टगो गुरोर्व्ययायमृत्युकेन्द्रेषु ।**
**त्रिचतुःसुतनवदशमसप्तमायगश्चन्द्रमाः शुक्रात् ॥४॥**

भट्टोत्पलः—चन्द्रो लग्नात् ३।६।१०।११ एतेषु शुभः। स्वात् स्वस्थानात् प्रथमसप्तमसाहितेपूपचयेषु ३।६।११।१०।१।७ एतेषु शुभः। कुजात्स्वनवधीसहितेपूपचयेषु ३।६।११।१०।२।९।५ एतेषु शुभः। सूर्यात्साष्टस्मरगः ३।६।११।१०।८।७एतेषु शुभः। शनैश्चरात् त्रिषडायसुतेषु ३।६।११।५ एतेषु शुभः। बुधात् १।४।७।१०।३।५।११।८ एतेषु शुभः। गुरोः १२।११।८।१।४।७।१० एतेषु शुभः शुक्रात् ३।४।५।९।१०।७।११ एतेषु शुभः। इति चंद्रः ॥ ३–४ ॥

वि० प्र०—अथ चन्द्राष्टकवर्गमाह। **शशीति**। शशी चन्द्रो लग्नादुपचयेषु तृतीय-षष्ठ-दशमैकादशसु .( ३।६।१०।११ ) स्थानेषु शुभः। चन्द्रः स्वादात्मीयस्थानात्साद्यमुनिषु प्रथमसप्तमसहितेषूपचयेषु ( ३।६।१०।११।१।७ ) स्थानेषु शुभः। शशी कुजाद्भौमादेपूपचयेषु स्वनवधीसहितेषु तृतीय-षष्ठ-दशमैकादश-द्वितीय-नवम-पञ्चमेषु ( ३।६।१०।११।२।९।५ ) स्थानेषु शोभनः। शशी सूर्यात्साष्टस्मरगः सप्तमाष्टमसहितेषूपचयेषु तृतीय-षष्ठैकादश-पञ्चमेषु ( ३।६।११।५ ) स्थानेषु शुभः। ज्ञाद् बुधात् केन्द्रत्रिसुतायाष्टगः प्रथम-चतुर्थ-सप्तम-दशम-पञ्चमैकादशाष्टम ( १।४।७।१०।५।११।८ ) स्थानगतः शुभः। गुरोर्बृहस्पतेर्व्ययायमृत्युकेन्द्रेषु द्वादशैकादशाष्टमाद्यचतुर्थसप्तमदशमेषु (१२।११।८।१।४।७।१०)व्यवस्थितःशुभः। शुक्रात् त्रिचतुःसुतनवदशमसप्तायगःतृतीयचतुर्थपञ्चमनवमदशमसप्तमैकादशसु स्थानेषु समवस्थितश्चन्द्रमाः शोभनो ज्ञेयः ॥ ३–४ ॥

चन्द्रमा लग्न से उपचय ( ३।६।१०।११ ) स्थानो में, स्वकीयस्थान ( चन्द्रमा जिस स्थान पर स्थित हो वहाँ ) से प्रथम और सप्तम स्थान से सहित उपचय स्थान ( अर्थात् ३।६।१०।११।१।७ ) में, मंगल से

दूसरे, नववें, पाँचवें इस स्थानों में और उपचय स्थान (३।६।१०।११।२।९।५) में; सूर्य से उपचय (३।६।१०।११), सातवें, आठवें स्थानों में; शनैश्चर से तीसरे, छठवें, एग्यारवें, पांचवें स्थान में; बुध से केन्द्र (१।४।७।१०), तीसरे पाँचवें; इग्यारहवें, आठवें इन स्थानों में; बृहस्पति से बारहवें, इग्यारहवें, आठवें और केन्द्र ( १।४।७।१० ) इन स्थानों में, — से तीसरे, चौथे, पाँचवें, नववें, दशवें, सातवें, इग्यारहवें स्थानों में शुभफलदाता होता है ॥ ३-४ ॥

चन्द्रस्याष्टकवर्गाङ्काः ॥ ४९ ॥

| चं | मं. | बु. | बृ. | शु. | श. | सू. | ल. |
|---|---|---|---|---|---|---|---|
| १ | २ | १ | १ | ३ | ३ | ३ | ३ |
| ३ | ३ | ३ | ४ | ४ | ५ | ६ | ६ |
| ६ | ५ | ४ | ७ | ५ | ६ | ७ | १० |
| ७ | ६ | ५ | ८ | ७ | ११ | ८ | ११ |
| १० | ९ | ७ | १० | ९ | ० | १० | ० |
| ११ | १० | ८ | ११ | १० | ० | ११ | ० |
| ० | ११ | १० | १२ | ११ | ० | ० | ० |
| ० | ० | ११ | ० | ० | ० | ० | ० |

## भौमाष्टकवर्गः ।

भौमः स्वादायस्वाष्टकेन्द्रगस्त्र्यायषट्सुतेषु बुधात् ।
जीवाद्दशायशत्रुव्ययेष्विनादुपचयः सुतेषु ॥ ५ ॥
उदयादुपचयतनुषु त्रिषडायेष्विन्दुतः समो दशमः ।
भृगुतोन्त्यषडष्टायेष्वसितात्केन्द्रायनववसुषु ॥ ६ ॥

**भट्टोत्पलः**—भौमः स्वस्थानतः ११।२।८।१।४।७।१० एतेषु शुभः। बुधात् ३।११।६।५ एतेषु शुभः। जीवात् १०।११।६।१२ एतेषु शुभः। सूर्यादुपचयसुतेषु ३।६।११।१०।५ एतेषु शुभः। भौमो लग्नात् ३।६।११।१०।१ एतेषु शुभः। इन्दुतः ३।६।११ एतेषु शुभः। चन्द्राद्दशमे समः न शुभो नाप्यशुभः। शुक्रात् १२।६।८।११ एतेषु शुभः। शनैश्चरात् १।४।७।१०।११।६।८ एतेषु शुभः। इति भौमः ॥ ५–६ ॥

वि० प्र०—अथ भौमाष्टकवर्गमाह। **भौम इति**—भौमो मङ्गलः स्वादात्मीयस्थानादायस्वाष्टकेन्द्रग एकादशद्वितीयाष्टमप्रथमचतुर्थसप्तमदशमेषु (११।२।८।१।४।७।१०) स्थानेषु व्यवस्थितः। बुधाद् बुधाधिष्ठितराशितस्त्र्यायषट्सुतेषु तृतीय-षष्ठैकादश-पञ्चमेषु ( ३।६।११।५ ) स्थानेषु समवस्थितः शुभः। जीवाद् गुरोर्दशायशत्रुव्ययेषु दशमैकादशषष्ठद्वादशसु ( १०।११।६।१२ ) स्थानेषु शुभः। इनात्सूर्यादुपचयसुतेषु तृतीय-षष्ठदशमैकादशपञ्चमेषु (३।६।१०।११।५) स्थितः शुभः। उदयाल्लग्नादुपचयतनुषु तृतीय-षष्ठ-दशमैकादशप्रथमेषु (३।६।१०।११।१) स्थानेषूपगतः शुभः। इन्दुतश्चन्द्रमसस्त्रिषडायेषु ( ३।६।११ ) स्थानेषु स्थितः शोभनः। भौमश्चन्द्राद्दशमस्थानगतः समः न शुभो नाप्यशुभः विफल इत्यर्थः। भृगुतः शुक्रादन्त्यषडष्टायेषु द्वादशषष्ठाष्टमैकादशसु(१२।६।८।११) गतः शोभनः। असितात् शनैश्चरात्केन्द्रायनववसुषु प्रथमचतुर्थसप्तमदशमैकादशनवमाष्टमेषु ( १।४।७।१०।११।९।८ ) स्थानेषु समवस्थितो भौमः शोभनफलदः प्रोक्तः ॥ ५–६ ॥

**मंगल अपने स्थान ( जिस राशिपर अधिष्ठित हो वहाँ ) से इग्यारहवें, दूसरे, आठवें, केन्द्र में अर्थात् ( ११।२।८।१।४।७।१० ) इन स्थानों में, बुधसे तीसरे, इग्यारहवें, छठवें, पाँचवें ( ३।११।६।५ ) स्थानों में, बृहस्पति से दशवें इग्याहवें, छठवें, बारहवें, (१०।११।६।१२) स्थानों में सूर्य से उपचय ( ३।६।१० ) और पाँचवें इन स्थानों में,**

लग्न से उपचय ( ३।६।१०।११ ) प्रथम इन स्थानों में, चन्द्रमा से तीसरे, छठवें, इग्यारहवें (३।६।११) स्थानों में शुभ फल के देने वाला होता है। मंगल, चन्द्रमा से दशवें स्थान में सम फल देता है। एवं मंगल शुक्र से बारहवे, छठवें, आठवें, इग्यारहवें (.१२।६।८।११) इन स्थानों में, शनैश्चर से केन्द्र, इग्यारहवें, नववें, आठवें ( १।४।७।१०।११।९।८ ) स्थान में अभीष्ट फलों को देनेवाला होता है ॥ ५–६ ॥

भौमाष्टकवर्गाङ्काः ॥ ३९ ॥

| मं. | बु. | बृ. | शु. | श. | ल. | सू. | चं. |
|---|---|---|---|---|---|---|---|
| १ | ३ | ६ | ६ | १ | १ | ३ | ३ |
| २ | ५ | १० | ८ | ४ | ३ | ५ | ६ |
| ४ | ६ | ११ | ११ | ७ | ६ | ६ | ११ |
| ७ | ११ | १२ | १२ | ८ | १० | १० | ० |
| ८ | ० | ० | ० | ९ | ११ | ११ | ० |
| १० | ० | ० | ० | १० | ० | ० | ० |
| ११ | ० | ० | ० | ११ | ० | ० | ० |

बुधाष्टकवर्गः ।

सौम्योऽन्त्यषरणवायात्मजेष्त्रिनात्स्वात्त्रितनुदशयुतेषु ।
चन्द्राद् द्विरिपुदशायाष्टसुखगतः सादिषु विलग्नात् ७
प्रथमसुखायद्विनिधनधर्मेषु सितात् त्रिधीसमेतेषु ।
साशास्मरेषु सौरारयोर्व्ययायारिपुवसुषु गुरोः ॥ ८ ॥

भट्टोत्पलः—बुधः सूर्यात् १२।६।९।११।५ एतेषु शुभः । स्वस्थानात् १२।६।९।११।५।३।१।१० एतेषु शुभः । चन्द्रात् २।६।१०।११।८।४ एतेषु शुभः । लग्नात् २।६।१०।११।८।४।१ एषु शुभः । बुधः शुक्रात् १।४।११।२।८।९।३।५ एतेषु शुभः । शनैश्चरात् १।४।११।२।८।९।३।५।१०।७ एतेषु शुभस्तथा भौमात् १।४।११।२।८।९।३।५।१०।७ एतेषु शुभः । जीवात् १२।११ ६।८ एतेषु शुभः । इति बुधः ॥ ७-८ ॥

वि० प्र०—अथ बुधाष्टकवर्गमाह—**सौम्य इति**। सौम्यो बुधः इनात्सूर्यादन्त्यषरणवायात्मजेषु द्वादश-षष्ठ-नमैकादशपञ्चमेषु ( १२।६।९।११।५ ) स्थानेषु अधिष्ठितः शुभः । स्वान्नैजस्थानात् त्रितनुदशयुतेषु एष्वेवार्थाद्द्वादश-षष्ठ-नवमैकादश-पञ्चम-तृतीय-प्रथम-दशमेषु ( १२।६।९।११।५।३।१।१० ) स्थानेषु गतः शुभः । चन्द्राद् द्विरिपुदशायाष्टसुखगतो द्वितीय-षष्ठ-दशमैकादशाष्टमचतुर्थस्थान ( २।६।१०।११।८।४ ) गतः शोभनः । विलग्नात्सादिषु पूर्वोक्तस्थानेषु द्वितीय-षष्ठ-दशमैकादशाष्टम-चतुर्थ-प्रथम ( २।६।१०।११।८।४।१ ) स्थानेषु शुभः । सिताच्छुक्रात्त्रि-धीसमेतेषु प्रथम-सुखायद्विनिधनधर्मेषु प्रथम-चतुर्थैकादश-द्वितीयाष्टमनवम-तृतीय-पञ्चमेषु (१।४।११।२।८।९।३।५) शुभः । शौरारयोः साशास्मरेषु दशम-सप्तमसहितेष्वेष्वेव स्थानेषु शनैश्चरात्प्रथम-चतुर्थैकादशद्वितीयाष्टम-नवम-तृतीय-पञ्चम-दशम-सप्तमेषु ( १।४।११।२।८।९।३।५।१०।७ ) भौमादपि एष्वेव ( १।४।११।२।८।९।३।५।१०।७ ) स्थानेषु स्थितो बुधः शोभनः । गुरोर्बृहस्पतेः व्ययायरिपुवसुषु द्वादशैकादशषष्ठाष्टमेषु ( १२।११।६।८ ) स्थानेषु समवस्थितः शुभफलदो भवति ॥ ७-८ ॥

बुध सूर्य से बारहवें, छठवें, नववें, ग्यारहवें, पाँचवें, स्थान में, अपने अधीष्ठित राशि से तीसरे, पहले, दशवें और पूर्वोक्त ( १२।६।९।११।५ ) स्थानों में, चन्द्रमा से दूसरे, छठवें, दशवें ग्यारहवें, आठवें चौथे राशि के होने पर, लग्न से उक्तस्थान (२।६।१०।११।८।४) और प्रथम राशि का होने से, शुक्र से पहले, चौथे, इग्यारहवें, दूसरे, आठवें,

नववें राशियों में होने पर; शनैश्चर और मङ्गल से शुक्र के लिये उक्त ( १।४।११।२।८।९ ) स्थानों में और तीसरे, पाँच वे दशवें तथा सातवें इन दश १० स्थानो में, और वृहस्पति से बारहवें, ग्यारहवें, छठवें इन राशियों में होने पर शुभ फल देने वाला होता है ॥ ७-८ ॥

बुधाष्टकवर्गाङ्काः ॥ ५४ ॥

| बु. | वृ. | शु. | श. | ल. | सू. | चं. | मं. |
|---|---|---|---|---|---|---|---|
| १ | ६ | १ | १ | १ | ५ | २ | १ |
| ३ | ८ | २ | २ | २ | ६ | ४ | २ |
| ५ | ११ | ३ | ३ | ४ | ९ | ६ | ३ |
| ६ | १२ | ४ | ४ | ६ | ११ | ८ | ४ |
| ९ | ० | ५ | ७ | ८ | १२ | १० | ७ |
| १० | ० | ८ | ८ | १० | ० | ११ | ८ |
| ११ | ० | ९ | ९ | ११ | ० | ० | ९ |
| १२ | ० | ११ | १० | ० | ० | ० | १० |
| ० | ० | ० | ११ | ० | ० | ० | ११ |

गुरोरष्टकवर्गः ।

जीवो भौमाद्द्व्यायाष्टकेन्द्रगोऽर्कात्सधर्मसहजेषु ।
स्वात् सत्रिकेषु शुक्रान्नवदशलाभस्वधीरिपुषु ॥९॥
शशिनः स्वरात्रिकोणार्थलाभगास्त्रिरिपुधीव्ययेषु यमात् ।
नवदिक्सुखाद्यधीस्वायशत्रुषु ज्ञात्सकामगो लग्नात् १०

भट्टोत्पलः—जीवो भौमात् २।११।८।१।४।७।१०एतेषु शुभः। सूर्यात्२।११।८।१।४।७।१०।९।३एतेषु शुभः।स्वस्थानात्२।११।८। १।४।७।१०।३एतेषु शुभः। शुक्रात्९।१०।११।२।५।६एतेषु शुभः। जीव शशिनः७।९।५।२।११ एतेषु शुभः। शनैश्चरात् ३।६।१२ एतेषु शुभः। बुधात् ९।१०।४।१।५।२।११।६ एतेषु शुभः। लग्नात्९।१०।४।१।५।२।११।६।७एतेषु शुभः। इति गुरुः॥९–१०॥

वि० प्र०—अथ गुरोरष्टक वर्गमाह। **जीव इति**। जीवो बृहस्पतिः भौमात् द्व्यायाष्टकेन्द्रगः द्वितीयैकादशाष्टमप्रथमचतुर्थसप्तमदशमस्थानेषु ( २।११।८।१।४।७।१० ) स्थितः शुभः। अर्कादादित्यात्सधर्मसहजेषु धर्मसहजाभ्यां सह पूर्वोक्तस्थानेषु द्वितीयैकादशाष्टमप्रथमचतुर्थ-सप्तम-दशम-नवम-तृतीयेषु ( २।११।८।१।४।७।१०।९।३ ) स्थानेषु शुभ-फलदः। स्वादात्मीयस्थानात्सत्रिकेषु तृतीयस्थानसहितपूर्वोदितस्थानेषु द्वितीयैकादशाष्टमप्रथमचतुर्थसप्तमदशमतृतीयेषु(२।११।८।१।४।७।१०।३) शुभः। शुक्रात् नवदशलाभस्वधीरिपुषु नवम-दशमैकादशद्वितीय-पञ्चमषष्ठेषु ( ९।१०।११।२।५।६ ) स्थानेषु शुभः। शशिनश्चन्द्रमसः स्वरत्रिकोणार्थलाभगः सप्तम-नवम-पञ्चम-द्वितीयैकादशसु ( ७।९।५।२।११ ) स्थानेषु व्यवस्थितः शुभः। यमात् शनैश्चरात्त्रिरिपुधीव्ययेषु तृतीय-षष्ठ-पञ्चम-द्वादश ( ३।६।५।१२ ) स्थानेषु शोभनः। ज्ञाद् बुधात नवदिक्सुखाद्यधीस्वायशत्रुषु नवम-दशम-चतुर्थ-प्रथम-पञ्चम-द्वितीयैकादशषष्ठेषु ( ९।१०।४।१।५।२।११।६) स्थानेषु शोभनः। लग्नात्सकामगः सप्तमसहितपूर्वप्रतिपादितस्थानगतः नवम-दशम-चतुर्थ-प्रथम-पञ्चम-द्वितीयैकादश-षष्ठ-सप्तम ( ९।१०।४।१।५।२।११।६।७ ) स्थानेषु समवस्थितो गुरुः शोभनफलदः स्यात् ॥ ९–१० ॥

**बृहस्पति मङ्गल से दूसरे, इग्यारहवें, आठवें, और केन्द्र ( १।४। ७।१० ) इन स्थानों में, सूर्य से मङ्गल के लिये कहे हुये ( २।११।८।१। ४।७।१० ) भावों में और नववें, तीसरे इन सब स्थानों का होने पर;**

अपने अधिष्ठित राशि से मङ्गल के लिये कहे हुए (२।११।८।१।४।७।१०) स्थानों में और तीसरे इन आठ स्थानों पर आने से, शुक्र से नववें, दशवें, इग्यारहवें, दूसरे, पाचवें, छठवें स्थानों में; चन्द्रमा से सातवें, पाँचवें, नववें, दूसरे, इग्यारवें स्थानों में; शनि से तीसरे, छठवें, पाचवें, बारहवें स्थानों में; बुध से नववें, दशवें, चौथे, प्रथम, पाँचवें, दूसरे, इग्यारहवें, और छठवें स्थानों में; लग्न से नववें, दशवें, चौथे, पहले(प्रथम), पाँचवें दूसरे, इग्यारहवें, छठवें और सातवें इन ९ स्थानों में चारवश आने पर अभीष्ट फलों को देनेवाला होता है ॥९-१०॥

गुरोरष्टकवर्गाङ्काः ॥ ५५ ॥

| वृ | शु | श | ल | सू | चं | मं | बु |
|---|---|---|---|---|---|---|---|
| १ | २ | ३ | १ | १ | २ | १ | १ |
| २ | ५ | ५ | २ | २ | ५ | २ | २ |
| ३ | ६ | ६ | ४ | ३ | ७ | ४ | ४ |
| ४ | ९ | १२ | ५ | ४ | ९ | ७ | ५ |
| ७ | १० | ० | ६ | ७ | ११ | ८ | ६ |
| ८ | ११ | ० | ७ | ८ | ० | १० | ९ |
| १० | ० | ० | ९ | ९ | ० | ११ | १० |
| ११ | ० | ० | १० | १० | ० | ० | ११ |
| ० | ० | ० | ११ | ११ | ० | ० | ० |

## शुक्राष्टकवर्गः ।

शुक्रो लग्नादासुतनवाष्टलाभेषु सव्ययश्चन्द्रात् ।
स्वात्सादिगासितात्त्रिसुखात्मजाष्टदिग्धर्मलाभेषु ॥११॥

**वस्वन्त्यायेष्वर्कान्नवदिक्लाभाष्टधीस्थितो जीवात् ।**
**ज्ञात्त्रिसुतनवायारिष्वायसुताऽऽपोक्लिमेषु कुजात्॥१२॥**

भट्टोत्पलः—शुक्रो लग्नात् १।२।३।४।५।९।८।११एतेषु शुभः, चन्द्रात् १।२।३।४।५।९।८।११।१२ एतेषु शुभः, स्वात् स्वस्थानात् १।२।३।४।५।९।८।११।१ ।१० एतेषु शुभः, शनैश्चरात् ३।४।५।८।९।१०।११ एतेषु शुभः। शुक्रः सूर्यात् ८।१२।११। एतेषु शुभः। जीवात् ९।१०।११।८।५ एषु शुभः। ज्ञाद् बुधात् ३।५।९।११।६ एषु शुभ, भौमात् ११।५।३।६।९।१२ .एतेषु शुभः। इति शुक्रः ॥११–१२॥

वि० प०—अथ शुक्राष्टकवर्गमाह। **शुक्र इति**। शुक्रो लग्नादासुतनवाष्टलाभेषु आसुतं लग्नादारभ्य पञ्चमस्थानपर्यन्तं तथा नवाष्टलाभस्थानानि प्रसिद्धानि तेषु प्रथम-द्वितीय-तृतीय-चतुर्थ-पञ्चम-नवमाष्टमैकादशस्थानेषु (१।२।३।४।५।९।८।११) शोभनः। चन्द्रात्सव्ययः द्वादशस्थानसहितपूर्वोक्तस्थानगतः प्रथम-द्वितीय-तृतीय-चतुर्थ-पञ्चम-नवमाष्टमैकादश-द्वादशस्थानेषु (१।२।३।४।५।९।८।११।१२)पगतः शुभप्रदः। स्वात्स्त्रीयस्थानात्सदिक् दशमस्थानसहित-लग्नोदितस्थानेषु प्रथमद्वितीयतृतीयचतुर्थपञ्चमनवमाष्टमैकादशदशमेषु (१।२।३।४।५।९।८।११।१०) स्थानेषु शुभः। असिताच्छनैश्चरात्त्रिसुखात्मजाष्टदिग्धर्मलाभेषु तृतीय-चतुर्थ-पञ्चमाष्टम-दशम-नवमैकादश (३।४।५।८।१०।९।११)स्थानेषु व्यवस्थितः शुभः। अर्कात्सूर्याद्वस्वन्त्यायेषु अष्टम-द्वादशैकादशेषु (८।१२।११) शुभः। जीवाद् बृहस्पतेर्नवदिक्लाभाष्टधीस्थितःनवमदशमैकादशाष्टमपञ्चमेषु (९।१०।११।८।५)स्थानेषु अधिष्ठितःशुभदायको भवति। ज्ञाद्बुधात्त्रिसुतनवायारिषु तृतीय-पञ्चम-नवमैकादश-षष्ठेषु(३।५।९।११।६)स्थानेषु शुभः। कुजाद्भौमादायसुतापोक्लिमेषु एकादश-पञ्चम-तृतीय-षष्ठ-नवम-द्वादशेषु (११।५।३।६।९।१२ ) स्थानेषु स्थितः शोभनफलदो भवति॥११–१२॥

शुक्र लग्न से (१-५) भाव तक, नववें, आठवें, इग्यारहवें स्थानों में; चन्द्रमा से लग्नोक्त ( १।२।३।४।५।६।८।११ ) स्थानों में और बारहवें इन नव स्थानों में; अपनी अधिष्ठित राशि से लग्नोक्त ( १।२।३।४।५।६।८।११ ) और दशवें स्थानों में; शनि से तीसरे,चौथे, पाँचवें, आठवें, दशवें, नववें, इग्यारहवें राशियों में; सूर्य से आठवें, बारहवें, इग्यारहवें इनमे; बृहस्पति से नववें, दशवें, इग्यारहवें, आठवें, पाचवें स्थानों में स्थित होने पर; बुध से तीसरे, पाँचवें, नववें, इग्यारहवें, छठवें राशियों में होने पर और मङ्गल से इग्यारहवें, पाँचवें, और आपोक्लिम (३।६।९।१२) स्थानों में आनेपर शोभन फलों को प्रदान करता है ॥ ११-१२ ॥

| शुक्राष्टकवर्गाङ्काः ॥ ५६ ॥ | | | | | | | |
|---|---|---|---|---|---|---|---|
| शु. | श. | ल. | | चं. | मं. | बु. | बृ. |
| १ | ३ | १ | ८ | १ | ३ | ३ | ५ |
| २ | ४ | २ | ११ | २ | ५ | ५ | ८ |
| ३ | ५ | ३ | १२ | ३ | ६ | ६ | ९ |
| ४ | ८ | ४ | ० | ४ | ९ | ९ | १० |
| ५ | ९ | ५ | ० | ५ | ११ | ११ | ११ |
| ८ | १० | ८ | ० | ८ | १२ | ० | ० |
| ९ | ११ | ९ | ० | ९ | ० | ० | ० |
| १० | ० | ११ | ० | ११ | ० | ० | ० |
| ११ | ० | ० | ० | १२ | ० | ० | ० |

शनेरष्टकवर्गः ।

स्वात्सौरिस्त्रिसुतायारिगः कुजादन्त्यकर्मसहितेषु ।
स्वायाष्टकेन्द्रगोऽर्काच्छुक्रात्षष्ठान्त्यलाभेषु ॥ १३ ॥

**त्रिषडायगः शशाङ्कादुदयात्ससुखाद्यकर्मगोऽथ गुरोः।**
**सुतषड्व्ययायगो ज्ञात् व्ययायरिपुदिङ्नवाष्टस्थः १४**

भट्टोत्पलः—शनिः स्वस्थानात् ३।५।११।६ एतेषु शुभः। कुजात् ३।५।११।६।१२।१० एतेषु शुभः । सूर्यात् २।११।८।१। ४।७।१० एतेषु शुभः। शुक्रात् ६।१२।११ एतेषु शुभः। चन्द्रात् ३।६।११ एतेषु शुभः। लग्नात् ३।६।११।४।१।१० एतेषु शुभः। जीवात् ५।६।११।१२ एतेषु शुभः। बुधात् १२।११।६।१०।८।६ एतेषु शुभः। इति शनिः ॥ १३–१४॥

वि० प्र०—अथ शनेरष्टकवर्गमाह—**स्वादिति**। सौरिः शनैश्चरः स्वादात्मीयस्थानात त्रिसुतायारिगस्तृतीय-पञ्चमैकादश-षष्ठेषु(३।५।११।६) स्थानेषु शुभः । कुजाद्भौमादन्त्यकर्मसहितेषु पूर्वोक्तस्थानेषु तृतीय-पञ्चमैकादश-षष्ठ-द्वादश-दशमेषु( ३।५।११।६।१२।१०) शुभः। अर्का-त्सूर्याधिष्ठितराशितः स्वायाष्टकेन्द्रगो द्वितीयैकादशाष्टम-प्रथम-चतुर्थ-सप्तम-दशमेषु ( २।११।८।१।४।७।१० ) स्थानेषु व्यवस्थितः शोभनफलदः। शुक्रात्षष्ठान्त्यलाभेषु षष्ठ-द्वादशैकादशेषु ( ६।१२।११ ) स्थानेषु शुभः। शशाङ्काचन्द्रमसस्त्रिषडायगस्तृतीय-षष्ठैकादशेषु (३।६।११) स्थानेषु स्थितः शोभनः। उदयाल्लग्नात्ससुखाद्यकर्मगः एष्वेव चतुर्थ-प्रथम-दशम-सहितेषु तृतीयषष्ठैकादश-चतुर्थ-प्रथम-दशमेषु ( ३।६।११।४।१।१० ) स्थानेषु समवस्थितः शुभः। गुरोर्बृहस्पतेः सुतषड्व्ययायगः पञ्चम-षष्ठ-द्वादशैका-दशस्थानेषु ( ५।६।१२।११ ) अधिष्ठितः शोभनः । ज्ञात् बुधात् व्यया-यरिपुदिङ्नवाष्टमस्थः द्वादशैकादशषष्ठदशमनवमाष्टमस्थानेषूपगतः (१२।११।६।१०।६।८)शनैश्चरः समीचीनफलदाता भवति॥१३-१४॥

शनि अपने स्थान ( जिस राशि पर स्थित हो वहाँ ) से तीसरे पाँचवें, इग्यारहवें, छठवें स्थानों में; मंगल से उक्त स्थानों ३।५। ११।६ में और बारहवें, दशवें स्थानों में; सूर्य से दूसरे, आठवें, ग्या-रहवें, केन्द्र ( १।४।७।१० ) में; शुक्र से छठवें, बारहवें, इग्यारहवें

स्थानों में; चन्द्रमा से तीसरे, छठवें, इग्यारहवें भावों में; लग्न से चन्द्रोक्त स्थानों ( ३।६।११ ) में और चौथे, पहले, दशवें अर्थात् ( ३।६।११।४।१।१० ) स्थानों में; वृहस्पति से पाँचवें, छठवें, बारहवें, इग्यारहवें स्थान में; बुध से बारहवें, इग्यारहवें, छठवें दशवें, नववें, आठवें स्थानों में स्थित होने पर शुभफलों को देता है ॥ १३-१४ ॥

शनेरष्टकवर्गाङ्काः ॥ ३६ ॥

| श. | ल. | सू. | चं. | मं. | बु. | बृ. | शु. |
|---|---|---|---|---|---|---|---|
| ३ | १ | १ | ३ | ३ | ६ | ५ | ६ |
| ५ | ३ | २ | ६ | ५ | ८ | ६ | ११ |
| ६ | ४ | ४ | ११ | ६ | ९ | ११ | १२ |
| ११ | ६ | ७ | ० | १० | १० | १२ | ० |
| ० | १० | ८ | ० | ११ | ११ | ० | ० |
| ० | ११ | १० | ० | १२ | १२ | ० | ० |
| ० | ० | ११ | ० | ० | ० | ० | ० |

## अष्टकवर्गफलम् ।

स्थानेष्वेतेषु शुभाः शेषेष्वहिता भवन्ति चाष्टानाम् ।
अशुभशुभविशेषफलं ग्रहाः प्रयच्छन्ति चारगताः ॥ १५ ॥

इति श्रीवराहमिहिरकृते लघुजातकेऽष्टक-
वर्गाध्याय एकादशः ॥ ११ ॥

भट्टोत्पलः-स्थानेष्वेतेषु शुभा इति । ते ग्रहाः एतेषु स्थानेषु पूर्वोक्तेषु हिताः शेषेषु अशुभाः । तत्र शुभाऽशुभविषममन्तरं कृत्वा यद्वशिष्यते तद्वशात् शुभाऽशुभं वाच्यम् । तदेव ग्रहाः राशौ राशौ चारतः फलं प्रयच्छन्ति । एतदुक्तं भवति । केन्द्राया-

ष्टद्विनवास्वित्यनेन पाठेन यान्युक्तानि तेषु शोभनं फलं शेषेषु अशोभनम्। यानि शुभस्थानानि गदितानि तानि बिन्दूपलक्षितानि कार्याणि यानि अशुभानि तानि रेखोपलक्षितानि ततः इष्टानिष्टयोर्विशेषं कृत्वा यदधिकं भवति तत्फलं ज्ञेयम्। एवमेकत्र मिश्रितानि अष्टौ फलानि भवन्ति। यत्र शुभाऽशुभयोः साम्यं तत्र समत्वं ज्ञेयम्। यत्र बिन्द्वष्टकं जातं तत्र शुभं पूर्णम्। यत्र षड्बिन्दवः तत्र पादोनं फलम्। यत्र बिन्दुचतुष्टयं तत्रार्धम्। यत्र बिन्दुद्वयं तत्र पादफलं ज्ञेयम्। एवमष्टकवर्गः सर्वेषां करणीयः।

बिन्दोरधिके शुभदं रेखाऽधिके नैव शोभनं भवति।
विफलं गोचरगणितमष्टकवर्गेण निर्दिष्टम् ॥ १५ ॥

इति श्रीलघुजातकटीकायामष्टकवर्गाध्याय एकादशः ॥ ११ ॥

वि०प्र०—अथाष्टकवर्गफलनिश्चयार्थमाह। **स्थानेष्विति**। अष्टानां जन्मकाले स्वाधिष्ठितराशेः परेणां ग्रहाणां स्थानात् लग्नाच्चैवमष्टानां स्थानानां एतेषु पूर्वोक्तेषु 'केन्द्राष्टायद्विनवसु' इत्यादिषु स्थानेषु चारवशाद्व्यवस्थिता ग्रहाःशुभाः भवन्ति। शेषेषु पूर्वोक्तेभ्योऽन्यस्थानेषु चारवशाद् गतेषु अशुभा भवन्ति। चारगता ग्रहा अशुभशुभविशेषफलं अशुभशुभयोः फलयोर्विशेषादन्तरादधिकं यदवशिष्यते तत्सम्बन्धेन फलं प्रयच्छन्ति। आचार्येण यानि शुभस्थानानि पठितानि तानि बिन्दूपलक्षितानि, यानि चाशुभस्थानानि पठितानि तानि रेखोपलक्षितानि कार्याणि एवमिष्टानिष्टफलयोरन्तरं कृत्वाऽवशिष्टस्य फलं शुभाशुभं ग्रहाः प्रयच्छन्तीत्यर्थः। यत्र बिन्द्वष्टकं जातं तत्र शुभफलं सम्पूर्णम्। यत्र षड् बिन्दवस्तत्र शुभफलं चतुर्थांशोनम्। यत्र बिन्दुचतुष्टयं तत्र शुभफलमर्धम्। यत्र च बिन्दुद्वयम् तत्र शुभफलं पादमितम्। एवमशुभफलस्यापि रेखाभिः कल्पना कार्या। तत्र जन्मकाले लग्नाचन्द्राद्वोपचयगः स्वक्षेत्रगः स्वोच्चस्थः मित्रक्षेत्रगः स्वमूलत्रिकोणगश्च यदा शुभफलं प्रयच्छति तदाऽपि पुष्टं शुभफलं, शुभ स्थानाद्भिन्नस्थोऽशुभफलमप्यतिपुष्टं ददाति तदपि चारवशेनेति। उक्तञ्च देवकीर्तिना—

"लग्नादुपचयसंस्थश्चन्द्राद्वा स्वगृहमूलतुङ्गस्थः।
मित्रक्षेत्रगतो वा फलमतिशयितः शुभं दद्यात् ॥
अपचयराशौ नीचे शत्रुक्षेत्रे च जन्मकाले स्यात्।
वस्तु स दद्यात्पापं फलपतिशयितां यथाकालम्" इति।

चन्द्रविषये विशेषमुक्तं तेनैव—

पुष्टमपुष्टं स्वफलं दद्यात्सबलो बलेन हीनस्तु।
ग्रह इव सर्वश्चन्द्रः कष्टफलो बलविहीनश्च ॥ इति ॥ १५ ॥

इत्याज़मगढ़मण्डलान्तर्गतब्रह्मपुरग्रामाभिजन श्री पं०धर्मदत्त-द्विवेदिसूनु ज्यौ०आ०विन्ध्येश्वरीप्रसादद्विवेदिकृतायां लघुजातकस्य बालबोधिनीटीकायामष्टकवर्गाऽध्याय एकादशः समाप्तः ॥ ११ ॥

जिस २ ग्रह से जो २ घर जिस ग्रह के लिये कह आए है उन २ घरोंमें चारवश आने पर वह ग्रह शुभफल देता है। और जिन स्थानों की गणना नहीं लिखी गई है उन स्थानों में चारवश आने पर अशुभ फल ग्रह देता है॥ जिन स्थानों में ग्रह शुभ फल देता है उनमें विन्दु जिन स्थानों में अशुभ फल होता है उनमें रेखा लिखें। सब ग्रहों से विन्दु और रेखा का न्यास करके जिस २ स्थान में विन्दु और रेखाओं का अन्तर करने पर विन्दु अधिक हो उस स्थान में ग्रह के आने पर शुभ फल और रेखा अधिक हो तो अशुभ फल होता है॥१५॥

उदाहरणार्थं सूर्याष्टकवर्गचक्रम्।

च.२।।। शु.बु.१२ ।।
।।।३ १ सू. ।।। ल।।।। ११
४ ।।।।। वृ.।।।१०
५ ।।। ९ ।।।
श.।।। ७
।।। ८।।।

इति विन्ध्येश्वरीप्रसादद्विवेदिकृतायां लघुजातकस्य हिन्दीटीकायामष्टकवर्गाध्याय एकादशः समाप्तः ॥ ११ ॥

# अथ प्रकीर्णकाध्यायः ॥१२॥



## तत्रादौ चन्द्रयोगप्रकरणम् १ ।

अनफासुनफादुरुधराकेमद्रुमयोगाः।

**रविवर्ज्यं द्वादशगैरनफा चन्द्राद्द्वितीयगैः सुनफा।**
**उभयस्थितैर्दुरुधरा केमद्रुमसंज्ञको योऽन्यः॥ १ ॥**

भट्टोत्पलः-अथ प्रकीर्णाध्यायं व्याख्यास्यामः। तत्रादौ चन्द्रयोगप्रकरणम्। रविवर्ज्यं सूर्यं वर्जयित्वा चन्द्राद्द्वादशे स्थाने भौमबुधजीवसितसौराणामन्यतमो भवति तदा अनफा नामयोगो भवति। अत्र रविवर्ज्यमित्युक्तं। तत्रादित्यो योगकर्तृक-ग्रहगणनया न गण्यते। अथ तेषामेव ग्रहाणां मध्ये कश्चिच्च-न्द्राद्द्वितीयस्थाने भवति तदा सुनफानाम योगो भवति। अथ चन्द्राद्द्वितीयद्वादशे स्थाने त एव ग्रहा भवन्ति तदा दुरुधरायोगः। यदा चन्द्राद्द्वितीयद्वादशयोः स्थानयोरुभयोरपि भौमादीनां मध्ये कश्चिन्न भवति तदा केमद्रुमयोगो भवति॥ १ ॥

वि०प्र०-अथ प्रकीर्णकाध्यायो व्याख्यायते। तत्रचन्द्रयोगप्रकरणम् १। तत्र सुनफाऽनफादुरुधराकेमद्रुमाख्यं योगचतुष्टयमाह-**रविवर्ज्यमिति**। रविवर्ज्यं रविं सूर्यं वर्जयित्वा चन्द्राज्जन्मकालिकचन्द्राधिष्ठितराशेर्द्वादशगैः द्वादशस्थाने व्यवस्थितैर्भौमादिपञ्चभिर्ग्रहैरनफायोगः। सूर्यं त्यक्त्वा भौमबुधगुरुशुक्रशनैश्चराणामन्यतमःकश्चिद्ग्रहो यदि चन्द्राद्द्वादशे समव-स्थितस्तदाऽनफा नाम योगो भवति। एवमर्कं वर्जयित्वा चन्द्राद्द्वितीये स्थाने भौमादीनामन्यतमः कश्चिद्ग्रहो व्यवस्थितस्तदा सुनफाख्यो योगो भवति। उभयस्थितैर्दुरुधरा सूर्यं त्यक्त्वा भौमादिनामन्यतः कश्चिद्ग्रह-श्चन्द्राद्द्वादशे द्वितीये च व्यवस्थितस्तदा दुरुधरानाम योगो

भवति । सुनफाऽनफादुरुधरेतियोगत्रयेऽपि सूर्यो द्वितीये द्वादशे वा स्थितस्तदा न योगभङ्गकर्ता भवति । यतोऽस्य योगकर्तॄणां मध्ये गणना नास्ति । योऽन्योऽस्माद्योगत्रयाद्भिन्नो यद्येकोपि योगो नार्थाच्चन्द्राद्द्वितीये द्वादशे द्वयोरपि वा यदि रविं हित्वा कश्चिद्ग्रहो न व्यवस्थितस्तदा केमद्रुमनामको योगो भवति । अत्र केनचित्केन्द्रवशात्केनचिच्च 'नवांशक-वशात्केमद्रुम योग उक्तः । तथा हि—

चन्द्राच्चतुर्थैः सुनफा दशमस्थितैः कीर्तितोऽनफा विहगैः ।
उभयस्थितैर्दुरुधरा केमद्रुमसंज्ञितोऽन्यथा योगः ॥ इति ॥

तथा च ( नवांशवशेन— )

यद्राशिसंज्ञे शीतांशुर्नवांशे जन्मनि स्थितः ।
तद्द्वितीयस्थितैर्योगः सुनफाख्यः प्रकीर्तितः ॥
द्वादशैरनफा ज्ञेयो ग्रहैर्द्विर्द्वादशस्थितैः ।
प्रोक्तो दुरुधरायोगोऽन्यथा केमद्रुमः स्मृतः ॥ इति ।

एतदाचार्यस्य नाभिमतः । यत उक्तञ्च बृहज्जातके—

हित्वार्कं सुनफाऽनफादुरुधराः स्वान्त्योभयस्थैर्ग्रहैः
शीतांशोः कथितोऽन्यथा तु बहुभिः केमद्रुमोऽन्यैस्त्वसौ ।
केन्द्रे शीतकरेऽथवा ग्रहयुते केमद्रुमो नेष्यते
केचित्केन्द्रनवांशकेषु च वदन्त्युक्तिः प्रसिद्धा न सा ॥ इति ॥१॥

सूर्य को छोड़कर भौम, बुध, बृहस्पति, शुक्र और शनि इन पाँच ग्रहों में से कोई ग्रह यदि जन्मकालिक चन्द्रमा से बारहवें स्थान में पड़ा हो तो 'अनफा' योग; दूसरे स्थान में बैठा हो तो 'सुनफा' नाम का योग और बारहवें तथा दूसरे दोनों स्थानों में मंगलादि ग्रहों में से कोई दो ग्रह व्यवस्थित हों तो 'दुरुधरा' नाम का योग होता है। यदि चन्द्रमा से दूसरे और बारहवें दोनों स्थानों में से किसी में भी, मंगलादि पाँचो ग्रहों में से कोई भी ग्रह न स्थित हो तो 'केमद्रुम' योग कहलाता है ॥ १॥

अनफासुनफयोः फलानि।

**सच्छीलं विषयसुखान्वितं प्रभुं ख्यातियुक्तमनफायाम्।**
**सुनफायां धीधनकीर्तियुक्तमात्मार्जितैश्वर्यम् ॥ २ ॥**

भट्टोत्पलः—शोभनशीलं विषयसुखान्वितं इन्द्रियसुखान्वितं प्रभुं समर्थं ख्यातियुक्तं कीर्तियुक्तं एवंविधमनफायां भवति। सुनफायां धीः बुद्धिः धनं अर्थः कीर्तिः ख्यातिः एभिर्युक्तमात्मार्जितैश्वर्यं स्वयमर्जितार्थं विद्यात्। एवंविधं सुनफायोगे जातो भवति ॥ २ ॥

वि० प्र०—अथैषां फलान्याह। तत्रादौ सुनफाऽनफायोगजातस्य पृथक् २ फलमाह—**सच्छीलमिति**। सच्छीलं समीचीनं शीलं यस्य स तं तथोक्तं, विषयसुखान्वितं चक्षुश्रोत्रघ्राणरसनात्वचामिति पञ्चज्ञानेन्द्रियाणां रूप-शब्द-गन्ध-रस-स्पर्शविषयास्तेषां सुखानि तैरन्वितं, प्रभुं निग्रहानुग्रहसमर्थं, ख्यातियुतं प्रख्यातम् प्रसिद्धमिति यावत्। अनफायां जातं पुरुषमिति शेषः विद्यात् जानीयात इत्युत्तरश्लोकेनान्वयः। धी बुद्धिः 'बुद्धिर्मनीषा धिषणा धी' रित्यमरः। धनं 'वित्तं, कीर्तिर्यशः एभिर्युक्तं, आत्मार्जितैश्वर्यं आत्मना स्वीयपौरुषेणार्जितमैश्वर्यमणिमादिकम् "विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा" इत्यमरः। येन स तं तथोक्तम्। सुनफायां सुनफाख्ययोगे जातं जातकं विद्यादिति सर्वत्राऽनुसन्धेयम ॥ २ ॥

**अनफा योग में जन्मा हुआ बालक सुन्दर शीलवाला, सब ज्ञानेन्द्रियों के विषयों के सुखों का अनुभव करने वाला ( बाग बगीचा इत्यादि अनेक मनोहर दृश्यों का देखने वाला, नाना प्रकार के व्यञ्जनों का रसास्वादन करने वाला, सुन्दरी रमणियों से नाना प्रकार के हावभावादि युक्त हास विलास करने वाला) और बड़ा यशस्वी होता**

( १ ) अणिमा महिमा चैव गरिमा लघिमा तथा।
प्राप्तिः प्राकाम्यमीशत्वं वशित्वं चाष्टसिद्धयः ॥ इति ॥

है। और सुनफा योग में पैदा हुआ बालक बुद्धि, धन और कीर्ति से युक्त और अपने बाहुबल से ऐश्वर्य ( अणिमादि आठ प्रकार की विभूति ) पैदा करने वाला होता है ॥ २ ॥

### दुरुधरा-केमद्रुमयोः फलम्।

**बहुभृत्यकुटुम्बारंभं नित्योद्विग्नमपि च दौर्धरिके।**
**भृतकं दुःखितमधनं जातं केमद्रुमे विद्यात् ॥ ३ ॥**

भट्टोत्पलः-अथ दुरुधराकेमद्रुमयोर्जातस्य स्वरूपमाह। बहुभृत्यं बहुकुटुम्बं बहुकार्यारम्भं नित्योद्विग्नचित्तं एवंविधं दुरुधरायोगे जातं जानीयात्। भृतकमिति। भृतकं कर्मकरं दुःखितं दुःखान्वितमधनं दरिद्रम् एवंविधं केमद्रुमे जातं विद्यात् ॥ ३ ॥

वि० प्र०-अथ दुरुधराकेमद्रुमयोगयोर्जातस्य लक्षणमाह। बहुभृत्य इति। बहुभृत्यकुटुम्बारम्भं बहवो भृत्याःसेवकाःकुटुम्बानि बान्धवाः आरम्भाश्च यस्य स तं तथोक्तम् नित्यमजस्रमुद्विग्नमुद्विग्नचित्तमपि दौर्धरिके योगे जातं विद्यात्। भृतकं कर्मकरं "भृतकं भृतिभुक्कर्मकरो वैतनिकः" इत्यमरः। दुःखितं दुःखोपेतं अधनं धनेन रहितं दरिद्रं केमद्रुमे केमद्रुमाख्ययोगे जातमुत्पन्नं जातकं विद्यात् ॥ ३ ॥

दुर्धरा योग में जिस बालक का जन्म हो वह बहुत नौकरों वाला अनेक कुटुम्बियों से युक्त बड़े २ कामों का प्रारम्भ करने वाला, और सर्वदा उद्विग्न चित्त वाला होता है। एवं केमद्रुम योग में उत्पन्न बालक भृतक ( मजदूरी करने वाला ) दुःखित, दरिद्र होता है। ऐसा जानना चाहिए ॥ ३ ॥

### योगकर्तृग्रहफलम्।

**भौमश्चौरश्चण्डो महाधनो ज्ञानवान् बुधो निपुणः।**
**ऋद्धः शुक्रः सुखितो गुरुर्गुणाढ्यो नृपतिपूज्यः ॥४॥**

**बह्वारम्भः सौरिर्बहुभृत्यः पूजितो गुणैर्वृद्धः।**
**एषां गुणैः समगुणा ज्ञेया योगोद्भवाः पुरुषाः ॥ ५ ॥**

भट्टोत्पलः—यदा सुनफानफादुरुधराणां भौमो योगकर्ता भवति तदा चौरश्चण्डश्च भवति। चण्डस्तीक्ष्णः। बुधश्चेत्तदा महाधनो ज्ञानवान् निपुणश्च। शुक्रश्चेत्तदा ऋद्धः ईश्वरः सुखी। गुरुश्चेत्तदा गुणाढ्यो राजपूज्यश्च। सौरिश्चेत्तदा बहुकार्यारंभी बहुभृत्यः बहुसेवकः पूजितः सर्वैः सेवितः गुणैर्वृद्धश्च। एषां गुणैरिति। एषां ग्रहाणां गुणैः समगुणा ज्ञेयाः। तत्र यदेव ग्रहस्य रूपमुक्तं तत्कृते अनफासुनफादुरुधरायोगे जातः पुरुषः तादृशो भवति। द्वाभ्यां कृते द्वयोर्गुणसम्बन्धं प्राप्नोति बहुभिः कृते बहुसम्बन्धमिति ॥ ४-५ ॥

वि॰ प्र॰—अथ अनफादियोगजातस्य फलं सामान्यतोऽभिधायेदानीं भौमादिग्रहसम्बन्धेन फलविशेषमार्याभ्यामाह—**भौम इति**। भौमो योगकर्ता चेत्तदा जातः चौरस्तस्करः, चण्डोऽत्यन्तक्रोधशीलः 'चण्डस्त्वत्यन्तकोपन' इत्यमरः। भवतीति शेषः। बुधश्चेद्योगकर्ता तदा महाधनोऽतिसमृद्धः ज्ञानवान्, निपुणः अनेककार्यकरणे दक्षश्च भवति। शुक्रो दैत्यगुरुश्चेद्योगकर्ता तर्हि ऋद्धः समृद्धः सुखितः सुखानुभवशीलश्च भवति। गुरुर्बृहस्पतिश्चेद्योगकर्ता तदा गुणाढ्यो गुणैर्दानदाक्षिण्यादिभिराढ्यो युक्तो नृपतिपूज्यः राज्ञां माननीयो भवति। सौरः शनैश्चरश्चेद्यदि योगकारकस्तदा बह्वारम्भः बहूनां कर्मणामारम्भकर्ता, बहुभृत्यः बहवो भृत्या सेवका यस्य स तथोक्तः, पूजितः सर्वैरर्चितः, गुणैर्वृद्धश्च भवति। योगोद्भवा अनफादियोगजाताः पुरुषाः एषां भौमादिग्रहाणां गुणैः पूर्वप्रतिपादितैः समगुणा भवन्ति। यस्य ग्रहस्य यद्रूपमुक्तं तत्कृते योगे जातः पुरुषस्तद्गुणो भवति। द्वाभ्यां कृते योगे जातः द्वयोर्गुणसम्बन्धेन युतो भवति। बहूनां विहिते योगे उत्पन्नः पुरुषो बहुग्रहगुणसम्बन्धयुतो भवति ॥ ४-५ ॥

यदि भौम ( मंगल ) सुनफा इत्यादि योग करता हो तो मनुष्य चोर, और अत्यन्त क्रोध करने वाला होता है। बुध उक्त योगों को करता हो तो वह जातक बड़ा धनी, ज्ञानी और सब कामों के करने में विशेष चतुर होता है। शुक्र योगकर्ता हो तो समृद्धिमान् और सुखी होता है। बृहस्पति योग करने वाला हो तो दानदाक्षिण्य इत्यादि गुणों से युक्त और राजाओं का माननीय होता है॥ शनि योग करता हो तो बहुत नोकरों वाला बहुत से या बड़े २ कामों का आरम्भ करने वाला, लोगों का पूज्य, गुणों से सम्पन्न होता है। यहाँ जिस ग्रह का जो गुण कहा है उस ग्रह के अनफादियोग करने पर उसी ग्रह के गुण से युक्त पुरुष होता है। यदि एक ग्रह योग करता हो तो उस ग्रह के गुण से युक्त, यदि दो ग्रह योग कारक हो तो दोनों ग्रहों के गुणों से युक्त, एवं कई ग्रह योग करते हों तो सब ग्रहों के गुणों से युक्त बालक होता है॥४-५॥इति चन्द्रयोगप्रकरणम्।

## सूर्ययोगः।

**सूर्याद्द्वितीयमृक्षं वेशिस्थानं प्रकीर्तितं यवनैः।**
**तच्चेष्टग्रहयुक्तं जन्मनि चेष्टासु च विलग्नम् ॥६॥**

भट्टोत्पलः–यस्मिन् राशावादित्यो व्यवस्थितस्तस्माद्यो द्वितीयो राशिस्तस्य वेशीति संज्ञक यवनैः प्रकीर्तितं कथितं वेशिस्थानं जन्मनीष्टग्रहयुक्तं प्रशस्तं चेष्टासु यात्रासु च विलग्नं तदा वेशिस्थानं प्रशस्तमिष्यते ॥ ६ ॥

वि० प्र०–अथ सूर्यसम्बन्धेन कञ्चनयोगमाह–**सूर्यादिति**। सूर्यात्सूर्याधिष्ठितराशेर्द्वितीयमृक्षं राशिः वेशिस्थानं वेशिसंज्ञं यवनैः यवनाचार्यैः प्रकीर्तितं कथितं। तच्च वेशिसंज्ञं स्थानं जन्मनि जन्मकाले इष्टग्रहयुक्तं शुभग्रहैः सहितं चेष्टासु यात्रासु विलग्नं यात्राकालिकलग्नं तदा शुभफलं वाच्यम्। वेशिसंज्ञलग्नस्य यात्रालग्नगतत्वे फलमुक्तं नारदेन–

यो ग्रहो जन्मनि शुभो यो राशिर्वेशिसंज्ञकः ।
तावुभौ जन्मलग्नं च यात्रायां शुभदं स्मृतम् ॥ इति ।

श्रीपतिनापि—

यः स्वजन्मनि शुभग्रहाश्रितो यश्च राशिरिह वेशिसंज्ञकः ।
यः स्वराशिभवनाच्च नैधने लाभगः स गमने शुभावहः ॥ इति ।

ग्रन्थान्तरे वाशिवेश्युभयचरीति योगत्रयं तत्फलञ्चोक्तम्—

खेचरा दिनमणेर्विधुवर्ज्यं द्वादशे च धनभे ह्युभये वा ।
वाशिवेश्युभयचर्यभिधाना प्राक्तनैः समुदिता इति योगाः ॥
स्यान्मन्ददृष्टिर्बहुकर्मकर्ता पश्यत्यधश्चोन्नतपूर्वकायः ।
असत्यवादी यदि वाशियोगो भवेद्दयालुर्मनुजस्य यस्य ॥
चेत्सम्भवे यस्य च वेशियोगो भवेद्दयालुः पृथुपूर्वकायः ।
स्याद्वाग्विलासालसतासमेतस्तिर्यक्प्रचारः खलु तस्य दृष्टेः ॥
सर्वंसहः स्थिरतरोऽतितरां समृद्धः
सत्वाधिकः समशरीर विराजमानः ।
नात्युच्चकः सरलदक्प्रबलामलश्री-
युक्तः किलोभयचरीप्रभवो नरः स्यात् ॥ इति ॥ ६ ॥

सूर्य से दूसरी राशि को यवनाचार्य ने वेशिसंज्ञक कहा है। वह वेशिसंज्ञक राशि यदि जन्म समय में इष्टग्रह ( शुभग्रह ) से युक्त हो तो शुभफल होता है। और यदि यात्रा के समय वेशिसंज्ञक राशि में शुभग्रह पड़े हो तो यात्रा शुभदायिनी होती है ॥ ६ ॥

## द्विग्रहयोगः ।

**यन्त्रज्ञं पापरतं निपुणं क्रूरं च शस्त्रवृत्तिं च ।
धातुज्ञं च क्रमशश्चन्द्रादिभिरन्वितः सूर्यः ॥ ७ ॥**

भट्टोत्पलः—अथ द्विग्रहयोगप्रकरणम् । तत्रादावादित्ये चन्द्रादियुक्ते जातस्य स्वरूपमाह । चन्द्राद्यर्कयोगः आदित्ये चन्द्रमसा

युक्ते जातं यन्त्रज्ञं ज्ञेयम् । यन्त्राणि शतघ्नीप्रभृतीनि जानाति । भौमेन पापरतं । बुधेन निपुणं कार्ये सूक्ष्मदृष्टिं । बृहस्पतिना क्रूरं । शुक्रेण शस्त्रवृत्तिं क्षात्रवृत्तिं । शनैश्चरेण धातुज्ञं सुवर्णादिज्ञम् ॥७॥

वि० प्र०—अथ समागमप्रकरणम् २ । तत्रादौ सूर्यसम्बन्धेन द्विग्रहयोगानाह—**यन्त्रज्ञमिति** । सूर्य आदित्यश्चन्द्रादिभिर्ग्रहैरन्वितः पृथक् २ सहितः यन्त्रज्ञमित्यादि जनयति । सूर्यश्चन्द्रमसा युक्तो यन्त्रज्ञं यन्त्राणि धूमयानाऽऽकाशयान—धूमपोत—शतघ्नी-शक्तिसम्पादक-विद्युद्द्योतकप्रभृतीनि जानातीति यंत्रज्ञस्तं जनयति । भौमेन सहोपेतः पापरतं परस्त्रीगमन-परद्रव्यापहरण-परद्रोह-विश्वासघातादिपापासक्तं जनयति । बुधेन सहैकराशिव्यवस्थितः निपुणं क्रियासु पटुं कुशाग्रबुद्धिं जनयति । बृहस्पतिना सहैकराशिगतः क्रूरं क्रूरस्वभावं जनयति । शुक्रेण सहैकराशिव्यवस्थितः शस्त्रवृत्तिं कृपाण-बाणप्रभृतिनानाशस्त्रजीविनं जनयति । शनैश्चरेण सहैकराशिसमवस्थितो धातुज्ञं सुवर्णरजतताम्रादि-धातुमर्मज्ञं जनयति ॥ ७ ॥

यदि सूर्य चन्द्रमा से युक्त हो तो ग्रहों के वेध करने इत्यादि के लिये तुरीय, स्वयंवह, पारद, फलक इत्यादि; आटा पीसने, मोटर चलाने, कपड़ा बीनने इत्यादि नाना प्रकार के यन्त्रों का जानने वाला; मङ्गल से युक्त हो तो परस्त्री रमण इत्यादि पापोपपापों को करने में सर्वदा तत्पर;बुध से युक्त हो तो नाना प्रकार के कार्यों को करने में परम प्रवीण; बृहस्पति सहित हो तो क्रूर ( कठोर ) स्वभाव वाला, शुक्र के साथ पड़ा हो तो शस्त्र से जीविका चलाने वाला, शनि के साथ व्यवस्थित हो तो सोना, चाँदी, ताँबा इत्यादि धातुओं की सब बातों को जानने वाला होता है ॥ ७ ॥

चन्द्रोऽङ्गारकपूर्वैः कूटज्ञं प्रसूतं कुलाभ्याधिकम् ।
वस्त्रव्यवहारज्ञं क्रमेण पौनर्भवं चापि ॥ ८ ॥

भट्टोत्पलः–चन्द्रेऽङ्गारकादियुक्ते जातस्य स्वरूपमाह। चन्द्रेऽङ्गारकेण युक्ते कूटज्ञः कुलकुशलकारी भवेत्। बुधेन युक्ते प्रसृतं वाक्यनिपुणं प्रियवादी भवेत्। जीवेन युक्तः कुलप्रसिद्धः भवेत्। शुक्रेण युक्ते वस्त्रविक्रयज्ञः भवेत्। शनैश्चरेण युक्ते पुनर्भूपुत्रः स्यात् ॥ ८ ॥

वि० प्र०–अथचन्द्रसम्बन्धेन द्विग्रहयोगफलमाह—चन्द्र इति। चन्द्रश्चन्द्रमा अङ्गारकपूर्वैःभौमादिग्रहैर्युक्तः सन् कूटज्ञादिपुरुषं जनयति। तद्यथा–चन्द्रः भौमेन युक्तः कूटज्ञं कपटतुलया वस्तूनां तोलने पटुं जनयति। बुधेन युक्तः प्रसृतं वाक्यरचनायां प्रगल्भं प्रियवादिनं, बृहस्पतिना सहैकराशिसमवस्थितः कुलाभ्यधिकं स्वकुले विद्याविनयवित्तादिभिः सम्पन्नं, शुक्रेण सहितः वस्त्रव्यवहारज्ञं वस्त्राणां व्यवहारे क्रय-विक्रय-निर्माणादिके मर्मज्ञं, शनिना युक्तः पौनर्भवं जनयति। पुनर्भूलक्षणमुक्तं मनुना (९।७५)–

या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया।
उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते ॥ इति ॥ ८ ॥

चन्द्रमा मङ्गलादि ग्रहों से युक्त हो ता क्रम से फल होते हैं। जसे–चन्द्रमा मङ्गल से युक्त हो तो कूटज्ञ ( कपल तौल को जानने वाला ) व्यापारिक व्यवहार का ज्ञाता, बुध के साथ पड़ा हो तो वातचीत करने में परम चतुर, बृहस्पति के साथ वैठा हो तो अपने कुल में वड़ा प्रसिद्ध, शुक्र के साथ व्यवस्थित हो तो कपड़े के व्यवहार को जानने वाला, शनैश्चर से युक्त हो तो वह वालक पुनर्भू-(जारज) पुत्र होता है ॥८॥

**मल्लो रक्षकः परदारसक्तो दुःखान्वितः कुजे ज्ञाद्यैः।**
**ज्ञो जीवाद्यैर्गीतज्ञं वाग्मिनं मैन्द्रजालज्ञम् ॥९॥**

भट्टोत्पलः–अङ्गारके बुधेन युक्ते जातो मल्लो भवति। जीवेन रक्षकः। शुक्रेण परदाररतः। सौरेण दुःखान्वितो भवति।

बुधे गुर्वादियुक्ते जातस्य स्वरूपमाह । बुधे जीवेन युक्ते गीतज्ञो भवति । शुक्रेण वाग्मी पण्डितो भवति । शनैश्चरेण युक्तो मायाज्ञः इन्द्रजालज्ञश्च भवति ॥ ९ ॥

वि० प्र०—अथ भौमज्ञयोः सम्बन्धेन द्विग्रहयोगफलमाह—**मल्ल इति**। कुजे भौमे ज्ञाद्यैः बुधादिग्रहैर्युक्ते मल्ल इत्यादिफलयुक्तो जातो भवति। यथा च भौमे बुधेन युते मल्लो बाहुयुद्धकुशलो जातको भवति । बृहस्पतिना सहैकराशिव्यवस्थिते रक्षकः परान् दुःखेभ्यो रक्षतीति तच्छीलो भवति । भृगुणोपेते भौमे परदारसक्तः परस्त्रीषु आसक्तः, सौरेण समन्विते भौमे जातको दुःखान्वितो दुःखी भवति । एवं ज्ञो बुधो जीवाद्यैर्युक्तो गीतज्ञमित्यादि जनयति । तथा हि बुधो बृहस्पतिना समुपेतो गीतज्ञं गीतं जानातीति गीतज्ञस्तं गानविद्यासु निपुणं जनयतीति, शुक्रेण सहैकराशिव्यपगतो वाग्मिनं प्रशस्तवक्तारं जनयति । शनिना समुपेतो बुधो महेन्द्र-जालज्ञं इन्द्रजालपटुं जनयति ॥ ९ ॥

मङ्गल यदि बुध से युक्त हो तो बालक मल्ल ( पहलवान् ), बृहस्पति के साथ पड़ा हो तो रक्षक ( दूसरों को अनेक आपत्तियों से बचाने वाला ), शुक्र के साथ बैठा हो तो दूसरों की स्त्रियों में सर्वदा अनुरक्त, शनि से युक्त हो तो दुःखी पुरुष होता है। बुध यदि बृहस्पति इत्यादिकों से युक्त हो तो निम्नलिखित प्रकार से फल देता है। जैसे-बुध बृहस्पति से युक्त हो तो गान विद्या को जानने वाला, शुक्र के साथ समवस्थित हो तो बातचीत करने में निपुण, शनैश्चर के साथ एक राशि में पड़ा हो तो इन्द्रजाल विद्या का जानकारहोता है ॥ ९ ॥

**त्रिग्रहयोगश्च ।**

**जीवः सितेन बहुगुणमासितेन समन्वितोऽत्र घटकारम्।**
**स्त्रीधनं मन्देन सितास्त्रिभिरप्येवं फलानि वदेत्॥१०॥**

भट्टोत्पलः—जीवे सितादियुक्ते जातस्य स्वरूपमाह । जीवः सितेन युतो जातं बहुगुणं करोति । शनैश्चरेण समन्वितो यदा जीवः तस्मिन् योगे जातं घटकारं कुम्भकारं करोति । शुक्रशनैश्चरयोगे जातं स्त्रीधनं करोति । स्त्रीसकाशाद्धनमाप्नोति । अन्ये च स्त्रियो वल्लभत्वाद्धनं प्रयच्छंति । इति स्त्रीणां वल्लभत्वाद्धनागम इत्यर्थः । त्रिभिरप्येवं फलानि वदेत् । यदा ग्रहास्त्रय एव राशौ भवंति तदा द्विग्रहयोगवत् त्रयस्यापि फलं वक्तव्यम्। यदार्कचन्द्राङ्गारका एकराशिगतस्तादाऽऽदित्यचन्द्रयोगवत्फलमुक्तं, चन्द्राङ्गारकयोगेन यत्फलमुक्त, आदित्याङ्गारकयोगेन च यत्फलमुक्तं तत्फलं त्रयमपि वाच्यम् । एवं यथासम्भवं ग्रहत्रयस्य फलं वाच्यम् ॥ १० ॥

वि० प्र०—अथ जीवे शुक्रादियुते शुक्रे शनैश्चरयुते च जातस्य स्वरूपमाह—जीव इति । जीवो गुरुः सितेन शुक्रेण समन्वितो युक्तो बहुगुणं बहवो दानदाक्षिण्यादिका गुणा यस्मिन् स तं तथोक्तं जातकं जनयति । असितेन शनिना समन्वितःसमुपेतो घटकारं कुम्भकारं कुलालमिति यावत् । 'कुम्भकारः कुलालः स्यात्' इत्यमरः । उत्पादयति । मन्देन शनैश्चरेण समन्वितः सितः शुक्रः स्त्रीधनं स्त्रिया समागमेन लब्धं धनं येन स स्त्रीधनस्तं तथा भूतं जातकं जनयति । अत्र यदि कस्यचिज्जन्मकुण्डल्यां राशिद्वये द्वौ द्विग्रहयोगौ तदा द्विग्रहयोगद्वयस्य, यदि च राशित्रये त्रयो द्विग्रहयोगास्तदा द्विग्रहयोगत्रयस्य च फलं वाच्यमिति । एवमनुनैव प्रकारेण त्रिभिर्ग्रहैरपि त्रिभिर्ग्रहैः सञ्जाते योगे जातस्य फलानि वदेत् निगदेत् । यथा च—यदि बुधगुरुशुक्रा एकत्र गता भवन्ति तदा बुध-गुरुयोगजं, बुध-शुक्रयोगजं, गुरुशुक्रयोगजं चेति योगत्रयजफलं कथनीयम् । एवमन्यत्रापि यद्यन्ये त्रयो ग्रहाः समवस्थितास्तदा तत्रापि तेषां सम्बन्धेन फलं वक्तव्यम् । यद्येकत्र द्विग्रहयोगोऽन्यत्र त्रिग्रहयोगस्तदा समेषामेव यथासम्भवं फलानि वक्तव्यानि ॥ १० ॥

बृहस्पति शुक्र के साथ व्यवस्थित हो तो बहुत गुणों से युक्त, शनि के साथ पड़ा हो तो घड़ा बनाने वाला ( ठठेर या कोहार ) होता है। यदि शुक्र और शनि का योग हो तो स्त्री के द्वारा धन की प्राप्ति होती है। तीन ग्रहों के योग से भी ऐसे ही फल कहना। जैसे बुध, गुरु, शुक्र एकत्र स्थित हों तो बुध-गुरु और बुध शुक्र और गुरु-शुक्र, के योग से जो फल होते हैं वे तीनों फल समझना। ऐसे ही सब ग्रहों के विषय में जानना ॥१०॥

### अथ प्रव्रज्यायोगः।

**चतुरादिभिरेकस्थैः प्रव्रज्यां स्वां ग्रहः करोति बली।**
**बहुवीर्यैस्तावत्यः प्रथमा वीर्याधिकस्यैव ॥ ११ ॥**

**भट्टोत्पलः**—अथ चतुर्ग्रहयोगप्रकरणम्। यस्य जन्मनि ग्रहाश्चत्वार एकराशिगता भवंति स प्रव्रज्यामाप्नोति। तेषामेकराशिगतानां मध्ये यो बली भवति स स्वां प्रव्रज्यां करोति ग्रहः। बहुवीर्यैरिति। यदि बहवो ग्रहा बलिनो भवंति तदा बह्वयः प्रव्रज्याः बहूनां संबंधिनीः प्रव्रज्याः प्राप्नोति। एतेषां ग्रहाणां मध्ये योऽतिबली पूर्वं तस्यैव प्रव्रज्या वक्तव्या। अन्येषां बलं विचार्य उत्तरोत्तरं प्रव्रज्या वक्तव्या। चतुरादिष्वेकस्थेषु यदि कश्चिद् ग्रहो न बली भवति तदा जातस्य प्रव्रज्या नैव वक्तव्या ॥ ११ ॥

वि० प्र०—अथ चतुरादिभिरेकस्थैर्जातस्य प्रव्रज्यायोगमाह—**चतुरादिभिरिति**। यत्र यत्र राशावेकस्थैश्चतुरादिभिर्ग्रहैश्चतुर्भिः पञ्चभिः षड्भिर्वा ग्रहैरेकस्थैर्जाता जातका प्रव्रज्यामाप्नुवन्ति। उक्तञ्च जातकाभरणे—

ग्रहैश्चतुर्भिर्यदि पञ्चभिर्वा षड्भिस्तथैकालयसंस्थितैश्च।
नश्यन्ति सर्वे खलु राजयोगाः प्रव्राजिको योग इति प्रदिष्टः॥ इति।

प्रव्रज्याकारकेषु ग्रहेषु यो ग्रहो बली स स्वामात्मीयां प्रव्रज्यां करोति। बहुवीर्यैस्तावत्यो यदि बहवो ग्रहा बलिनस्तदा तावत्यो बलीग्रहसंख्यासमाः प्रव्रज्याः कुर्वन्ति। तत्र प्रथमा प्रव्रज्या वीर्याधिकस्य भवति। ततो बलक्रमेणोत्तरोत्तरं प्रव्रज्या वाच्या। यदि प्रव्रज्याकारकग्रहेषु कश्चिद्ग्रहो बली न भवति तदा जातस्य प्रव्रज्या न भवति। तथा चोक्तं सत्याचार्येण—

यावन्तो वीर्ययुताः प्रव्रज्या भवन्ति तावत्यः।
एकर्क्षगेषु नियमात्तेषामाद्या बलोपेतात् ॥ इति ॥ ११ ॥

चार, पाँच, छ, आदि ग्रह यदि एकट्ठे बैठे हों तो उनमें सबसे अधिक बलवान् ग्रह अपनी प्रव्रज्या को देता है। यदि कई ग्रह बलवान् हों तो सब ग्रह अपनी अपनी प्रव्रज्या को देते हैं। उसमें सबसे अधिक बलवान् ग्रह की प्रव्रज्या पहले होती है उसके बाद बलक्रम से प्रव्रज्या समझना। यदि कोई ग्रह बली न हो तो प्रव्रज्या नहीं होती ॥ ११ ॥

### सूर्यादीनां प्रव्रज्याः।

## तापसवृद्धश्रावकरक्तपटाजीविभिक्षुचरकाणाम्।
## निर्ग्रन्थानां चार्कात् पराजितैः प्रच्युतिर्बलिभिः ॥१२॥

भट्टोत्पलः—तत्र न ज्ञायते कस्य का प्रव्रज्या तदर्थमाह। चतुरादीनामेकस्थानां मध्यादर्के बलवति तापसो भवति। तापसो वानप्रस्थः। चन्द्रे बलिनि वृद्धःश्रावकः कापालिकः। भौमे बलिनि रक्तपटः। बुधे आजीवी एकदण्डी। गुरौ बलवति भिक्षुः त्रिदण्डी। शुक्रे बलिनि चरकः चक्रधरः। सौरे बलवति निर्ग्रन्थो नग्नः क्षपणकः प्रावरणरहित इत्यर्थः। अर्कादारभ्य क्रमेण पराजितैः प्रच्युतिर्बलिभिरिति। चतुर्णामेकस्थानां यो बली ग्रहः स यदि ग्रहयुद्धेऽन्येन ग्रहेण पराजितो भवति तदा ग्रहोक्तप्रव्राजितो भूत्वा पुनस्तां त्यजति। एवं बहुषु बलवत्सु पराजितेषु बह्वीष्वपि प्रव्रज्यासु अत्रास्थितस्तास्त्यजति ॥ १२ ॥

वि० प्र०—अथार्कादीनां प्रव्रज्यामाह। **तापस इति**। सूर्यात् सूर्यमारभ्य तापसवृद्धश्रावकरक्तपटाजीविभिक्षुचरकाणां निर्ग्रन्थानां प्रव्रज्या वाच्याः। प्रव्रज्यायोगकारकग्रहाणां मध्ये सूर्ये बलयुक्ते जातकस्तापसस्तपस्वी वानप्रस्थो भवति। चन्द्रमसि बलवति वृद्धश्रावकः कापालिकः, भौमे बलोपेते रक्तपटः रक्तं रक्तवर्णः पटो यस्य स तमरुणवस्त्रधारी बौद्ध इति यावत्। बुधे बलिनि आजीवी एकदण्डी भवति। बृहस्पतौ बलवति भिक्षुस्त्रिदण्डी भवति। त्रिदण्डीलक्षणम्—

"वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च।
यस्यैते निहता बुद्धौ त्रिदण्डीति स उच्यते॥" इति॥

शुक्रे बलयुक्ते चरकश्चक्रधरो भवति। शनौ बलसहिते निर्ग्रन्थो नग्नः प्रावरणरहितो भवति। उक्तञ्च ग्रन्थान्तरे—

वानप्रस्थोऽथ कापाली बौद्धः स्यादेकदण्डिनः।
त्रिदण्डी योगिनो नग्नः प्रव्रज्यार्कादितः क्रमात्॥ इति।

बलिभिः प्रव्रज्यायोगकर्तॄणां ग्रहाणां मध्याद्बलवद्भिर्ग्रहैः पराजितैः ग्रहयुद्धेऽन्येन ग्रहेण विजितैः प्रच्युतिर्वाच्या। चतुर्णां मध्ये यद्येको बली ग्रहो ग्रहयुद्धे अपरग्रहेण विजितस्तदा जातको ग्रहोक्तप्रव्रज्यां गृहीत्वा पुनस्त्यजति। यदि बहवो बलिष्ठा ग्रहा ग्रहयुद्धे विजितास्तदा तेषां ग्रहाणां प्रव्रज्याः स्वीकृत्य सर्वास्त्यजति। आह च सत्याचार्यः—

तेष्वधिकबली जीवस्त्रिदण्डिनं भार्गवश्चरकमुख्यम्।
नग्नश्रमणं सौरो बुधस्तदाजीविकाचार्यम्॥
वृद्धश्रावकमिन्दुर्दिवाकरस्तापसं तपोयुक्तम्।
वक्रः शाक्यः श्रवणं क्षेत्राश्रयजं गुणाश्चैतान्॥
अन्यै पराजितश्चेत्प्रव्रज्याप्रच्युतिं कुर्यात्॥ इति॥ १२॥

**प्रव्रज्या योगकारकग्रहों में सबसे बलवान् सूर्य हो तो जातक तापस ( वानप्रस्थ ) होता है, चन्द्रमा सर्वाधिक बलवान् हो तो वृद्ध श्रावक ( कपालिक ), मंगल सर्वाधिक बली होतो लालरङ्ग का**

कपड़ा पहनने वाला, बुध बलवान् हो तो आजीवी ( भिखमँगा एक दण्डी ), बृहस्पति बलवान् हो तो त्रिदण्डी, शुक्र बलवान् हो तो चक्रधर ( चक्र का धारण करने वाला ), और शनि सब ग्रहों के अपेक्षा अधिक बलवान् हो तो नङ्गा ( ओढ़ने पहिरने के वस्त्र से रहित ) होता है। इन ग्रहों में जो सबसे बलीग्रह ग्रहयुद्ध में दूसरे ग्रहसे पराजितहो ( हार ) गया हो तो उस प्रव्रज्या को ग्रहण कर के फिर उसको छोड़ ( त्याग ) देता है। यदि कई ग्रह ग्रहयुद्ध में पराजित होतो उन उन ग्रहों की प्रव्रज्या को ग्रहण करके (सबों को) पुनः छोड़ देता है। अर्थात् किसी निश्चित मत पर आरूढ नहीं रहता ॥ १२ ॥

तत्र विशेषः।

दिनकरलुप्तमयूखैरदीक्षिता भक्तिवादिनस्तेषाम् ।
याचितदीक्षाबलिभिः पराजितैरन्यदृष्टैर्वा ॥ १३ ॥

भट्टोत्पलः—अत्रैव विशेषमाह—चतुरादीनामेकस्थानानां यावन्तो बलिनो ग्रहास्तावन्तः प्रव्रज्यादायकास्तत्रापि बलिनां मध्ये यावंतो रविलुप्तकिरणा अस्तमितास्तावंतः स्वां स्वां प्रव्रज्यां न प्रयच्छन्ति। किंतु ग्रहप्रव्रज्याप्रव्रजितानां मध्ये भक्तिं प्रयच्छंति। तत्र रविलुप्तकिरऽणोस्तमय एस्मिन्नेवराशिगतेऽर्कणे संयुक्तः अस्तमितो भवति। पृथग्राशिनामपि युक्तोऽस्तमितो भवति। याचितदीक्षा इति चतुरादीनामेकस्थानां बली ग्रहःसमागमेऽन्येन ग्रहेण निर्जितोऽन्येन च दृश्यते तदा प्रव्रज्यां याचमानोऽपि नाप्नोति। पूर्वोक्तं बलिभिः पराजितैः प्रच्युतस्तदाऽन्यदृष्टैर्वेति विशेषणम्। वा शब्दश्च शब्दस्यार्थे ॥ १३ ॥

वि० प्र०—अथास्तमितविजितान्यदृष्टग्रहाणामपवादमाह—**दिनकर इति**। दिनकरलुप्तमयूखैःदिनकरस्य करैः लुप्ता मयूखाः किरणा येषां ते तैस्तथोक्तैरदीक्षिता जातका भवन्ति। एकत्र राशौ व्यवस्थितानां चतुरादि-

ग्रहणां मध्याद्यावन्तो ग्रहा सूर्यकिरणसम्बन्धेनास्तमितास्तावन्तो ग्रहा स्वकीयाः प्रव्रज्या दातुं न प्रभवन्ति। किन्तु जातका भक्तिवादिनः तद्ग्रह-प्रव्रज्या प्रविष्टानां मध्ये भक्तिशीला भवन्ति। अत्रास्तमयं कालांशवशेन ज्ञेयम्। तच्चकालांशा भास्कराचार्येणाभिहिता सिद्धान्तशिरोणौ—

'दस्रेन्दवः १२ शैलभुवश्च ७ शक्रा १४
रुद्राः ११ खचन्द्रा १० स्तिथयः क्रमेण।
चन्द्रादितः काललवा निरुक्ता
ज्ञशुक्रयोर्वक्रगयोर्द्विहीनाः ॥' इति ॥

एवमत्रैकराशिस्थोपि कदाचिन्नास्तमितो भवति। कदाचिच्च द्वितीयराशिगतोऽप्यहतमितो भवितुमर्हति। बलिभिर्बलवद्भिर्ग्रहैः पराजितैर्ग्रहयुद्धेऽन्यग्रहेण निहतैरन्यदृष्टैरन्यैर्ग्रहैरवलोकितैश्च याचितदीक्षा दीक्षाभ्यर्थना परा भवन्ति न तु प्रव्रज्यां प्राप्नुवन्ति जातका इति। पराजितग्रहलक्षणमुक्तमाचार्येण स्वसंहितायाम्—

दक्षिणदिक्स्थः पुरुषो वेपथुरप्राप्य सन्निवृतोऽणुः।
अधिरूढो विकृतो निष्प्रभोविवर्णश्च यः स जितः ॥ इति।

प्रव्रज्याकाल उक्तो ग्रन्थान्तरे—

दीक्षादानसमर्थो यो भवति तदा बलेन स युक्तः।
तस्यैव दशाकाले दीक्षां लभते नरोऽवश्यम् ॥
यस्य दीक्षाच्यवनं तस्यैव दशावशाने स्यात्।
एवं जातककाले सञ्चिन्त्य बलाबलं वाच्यम् ॥ इति ॥ १३ ॥

प्रवज्या योगकारकग्रहों में से जितने बलवान् ग्रह होकर भी सूर्यके किरण से लुप्त हो गयेहों अर्थात् अस्त होगये हों, वे ग्रह अपनी प्रवज्या को न देकर प्रत्युत उसमें भक्ति प्रकट करते हैं। एवं अन्यग्रह से पराजित ग्रह अन्य ( शत्रु ) ग्रह से देखा जाता हो तो वह माँगने पर भी प्रव्रज्या को नहीं देता। अर्थात् प्रयत्न करने पर भी उस ग्रह सम्बन्धी प्रव्रज्या को नहीं पाता है ॥ १३ ॥

( चतुर्ग्रहैरेकगतैश्च संस्थै-
धीधर्मदुश्चिक्यतनुस्थितैर्वा ।
दासीषु जातः क्षितिपालतुल्यो
भवेन्नरो भूपतिरन्तकोशी ॥

पाँचवें, नववें, तीसरे, और लग्न इन स्थानों में से किसी स्थान में यदि चार ग्रह एकत्रित हों तो दासी ( मजदूरनी ) का लड़का होने पर भी वह बालक राजा अथवा राजा के तुल्य या राजा के खजाने का मालिक होता है ॥ )

अथ राशिशीलप्रकरणम् ।

अस्थिरविभूतिमित्रं चलमटनं स्खलितनियममपि चरभे।
स्थिरभे तद्विपरीतं क्षमान्वितं दीर्घसूत्रं च ॥ १४ ॥

भट्टोत्पल —अथ राशिशीलप्रकरणम् । अस्थिरविभूतिं अनियतविभूतिं अस्थिरामित्रं चञ्चलं कर्मस्वनवस्थितं अटनं परिभ्रमणशीलं स्खलितनियमं चलितव्रतं एवंविधं चरराशौ स्थित चन्द्रे जातं भवति । स्थिरभे तद्विपरीतमिति । स्थिरमित्रं अचलं नाटनं नो स्खलितनियमं न केवलमेतत्क्षमान्वितं दीर्घसूत्रं चिरेण कार्यानुष्ठानं एवंविधं स्थिरराशौ चन्द्रे जातं भवति ॥ १४ ॥

वि० प्र०–अथ राशिशीलप्रकरणे ( ३ ) चरस्थिरराशिगते चन्द्रमसि जातस्य स्वरूपमाह—**अस्थिर इति** । चरभे चरसंज्ञकराशौ मेषकर्कतुलामकरराशौ चन्द्रमसि गते अस्थिरविभूतिमित्रं न स्थिरा विभूतिरैश्वर्यं मित्राणि च यस्य स तं यथाविधं जातकं विधात् । "विभूतिं भूतिमैश्वर्य" मित्यमरः । कदाचिद्धनादिकं भवति कदाचिन्नश्यतीति भावः, चलं चञ्चलस्वभावं, क्रियास्वनवस्थितं, अटनं इतस्ततः परिभ्रमणशीलं, स्खलितनियमं अनियतनियमशीलं विधात् ।·स्थिरभे स्थिरराशौ वृष-

सिंहधनुर्धरकुम्भेष्वित्यर्थः। व्यवस्थिते चन्द्रे तद्विपरीतं चरराश्युक्तफलाद्विपरीतफलभोक्तारं स्थिरधनं, स्थिरमित्रं व्यवस्थितचित्तं नेतस्ततः परिभ्रमणशीलं, । नियमितनियमं क्षमान्वितं तितीक्षासमन्वितं कृपालुमिति यावत् दीर्घसूत्रं बहुकालेन कार्यविधायकं विद्यात् ॥ १४ ॥

जन्मकाल में चन्द्रमा चर ( १।४।७।१० ) राशि में स्थित हो तो जन्मा हुआ बालक चञ्चल सम्पत्ति वाला, चपल मित्रों वाला, स्वयं किसी भी काम में स्थिर न रहने वाला, अवारा के तरह व्यर्थ इधर उधर घूमने वाला, सब कामों में अनिश्चित बुद्धि रखने वाला होता है। यदि जन्म समय में चन्द्रमा स्थिर ( २।५।८।११ ) राशि में व्यवस्थित हो तो बालक उक्त फलों से विपरीत फलों वाला ( स्थिर सम्पत्ति, अचपल मित्र, सब कामों में दृढ रहने वाला, डट के एक जगह रहने वाला,) और दयावान दीर्घ सूत्री ( विलम्ब से कार्य करने वाला ) होता है ॥ १४ ॥

**द्विशरीरे त्यागयुतं कृतज्ञमुत्साहितं विविधचेष्टम्।**
**ग्राम्यारण्यजलोद्भवराशिषु जाता भवन्ति तच्छीलाः१५**

भट्टोत्पलः—द्विशरीर इति। त्यागयुक्तम् । दातारं कृतज्ञं प्रसिद्धं उत्साहितमुत्थानशीलं विविधचेष्टमनेकक्रियाकारिणं एवंविधं द्विस्वभावराशौ चन्द्रे विद्यात् । ग्राम्यारण्येति। ग्राम्यराशयो मिथुनकन्यातुलाकुंभाः धन्विपूर्वार्द्धं एतेषामन्यतमस्थे चन्द्रमसि जाता ग्रामशीला भवंति, ग्रामशीला ग्रामप्रिया अरण्य सलिलभीरवः। अरण्या मेषवृषसिंहाः धनुः पश्चिमार्धं मकरपूर्वार्द्धमत्र जाता अरण्यप्रिया भवन्ति ग्रामसलिलभीरवश्च। जलोद्भवाः कर्कमीनमकरांत्यभागा एतेषामन्यतमस्थे चन्द्रमसि जाता जलप्रिया भवन्ति, ग्राम्यारण्यभीरवश्च।वृश्चिकस्थे चन्द्रमसि जाता ग्राम्यारण्यशीला भवन्ति ॥१५॥ इति राशिशीलप्रकरणम्।

वि० प्र०—अथ द्विस्वभावराशिगते वनचरादिराशिगते च चन्द्रे जातस्य स्वरूपमाह—**द्विशरीर इति** । द्विशरीरे द्विस्वभावराशौ मिथुनकन्याधनुर्धरमीनराशिषु गते चन्द्रे त्यागयुतः त्यागो दानं तच्छीलं, कृतं पूर्वकृतोपकारं जानातीति कृतज्ञस्तं, उत्साहितं उत्साहसम्पन्नं, विविधचेष्टं विविधाश्चेष्टा यस्य स तं नानाकर्मकरणेच्छुकं जातं विद्यात् । तथा ग्रामारण्यजलोद्भवराशिषु जातास्तच्छीला भवन्ति । ग्रामे भवा ग्राम्यास्तेषु मिथुनकन्यातुलाकुम्भ-धन्विपूर्वार्द्धेषु राशिषु व्यवस्थिते चन्द्रमसि जाता ग्रामशीला ग्राम्यनिवासिनः कृषका इत्याद्या अरण्य-जलभीरवश्च भवन्ति । अरण्यराशिषु मेषवृषसिंहधनुःपरार्ध-मकरपूर्वार्द्धेषु राशिषु समुद्भूता अरण्यशीला अरण्यवासेच्छुका अरण्यवृत्तयो ग्रामाम्बुभीरवश्च भवन्ति । जलराशिषु कर्कमीनमकरपरार्द्धेषूत्पन्ना जलशीला जलप्रियाः पोतजीविनो जलयानगमनशीला इत्याद्या ग्राम-वनभीरवश्च भवन्ति । वृश्चिकराशिसमुद्भवा जलभीरवो ग्राम-वन प्रियाश्च भवन्ति । प्रत्येकराशिगचन्द्रेषु पृथक्पृथक् फलान्युक्तानि ग्रन्थान्तरे—

सौवर्णाङ्गः स्थिरस्वः सहजविरहितः साहसी यानभद्रः
कामार्तः क्षामजानुः कुनखतनुकचश्चञ्चलो मानवित्तः ।
पद्माभैः पाणिपादैः विततसुतजनो वर्तुलाकारनेत्रः
सस्नेहस्तोयभीरुर्व्रणविकृतशिरा स्त्रीजितो मेष इन्दौ ॥
व्यूढोरस्कोऽतिदाता धनकुटिलकचः कामुकः कीर्तिशाली
कान्तः कन्याप्रजावान्वृषसमनयनो हंसलीलाप्रचारः ।
मध्यान्ते भोगभागी पृथुकटिचरणस्कन्धजान्वास्यजङ्घः
सांकः पार्श्वास्यपृष्ठे ककुदि शुभगतिः क्षान्तियुक्तो गवीन्दौ ॥
उन्नासश्यामचक्षुः सुरतविधिकलाकाव्यकृद्भोगभोगी
हस्ते मत्स्याधिपाङ्को विषयसुखरतो बुद्धिदक्षः सिरालः ।
कान्तः सौभाग्यहास्यप्रियवचनयुतः स्त्रीजितो वायताङ्गः
याति क्लीबैश्च सख्यं शशिनि मिथुनगे मातृयुग्मप्रपुष्टः ॥

युक्तः सौभाग्ययोगैर्गृहसुहृदटनज्यौतिषज्ञानशीलैः
कामासक्तः कृतज्ञः क्षितिपतिसचिवः सत्क्षमाणः प्रवासी ।
सोन्मादः केशकर्गो जनकुसुमरुचिर्हानिवृद्ध्यानुरागः
प्रासादोद्यानवापीप्रियकरणरतः पीनकण्ठः कुलीरे ॥
स्थूलास्थिर्मन्दरोमा पृथुवदनतलो ह्रस्वपिङ्गाक्षियुग्मः
स्त्रीद्वेषी क्षुत्पिपासाजठररदरुजा पीडितो मांसभक्षः ।
दाता तीक्ष्णो ह्यपुत्रो विपिननगररतिर्मातृवश्यः सुवक्ता
विक्रान्तः कार्यलापी शशभृति रविभे सर्वगम्भीरदृष्टिः ॥
स्त्रीलोलो लम्बबाहुर्ललिततनुमुखश्चारुदन्ताक्षिकर्णो
विद्वानाचार्यधर्मा प्रियवचनयुतः सत्यशौचप्रधानः ।
धीरः सत्वानुकम्पी परविषयरतः क्षान्तिसौभाग्यभागी
कन्याप्रायप्रसूतिर्बहुसुतरहितः कन्यकायां शशाङ्के ॥
उन्नासो व्यायताक्षः कृशवदनतनुर्भूरिदारो वृषाढ्यो
गोभूम्यः शौचसारो वृषसमवृषणो विक्रमज्ञः क्रियेशः ।
भक्तो देवद्विजानां बहुविभवयुतः स्त्रीजितो हीनदेहो
धान्यादानैकबुद्धिस्तुलिनि शशधरे बन्धुवर्गोपकारी ॥
लुब्धो वृत्तोरुजङ्घः कठिनतरतनुर्नास्तिकः क्रूरचेष्टः
चोरो बाल्ये रुगार्तो हृतचिबुकनखश्चारुनेत्रः समृद्धः ।
कर्मोद्युक्तः प्रदक्षः परयुवतिरतो बन्धुहीनः प्रमत्तः
चण्डो राज्ञा हृतस्वः पृथुजरठशिरा कीटभे शीतरश्मौ ॥
कुब्जाङ्गो वृत्तनेत्रः पृथुहृदयकटिः पीतबाहुः प्रवक्ता
शूरो दृष्टोऽस्थिसारो विततबहुबलः स्थूलकण्ठोष्ठघोणो
बन्धुस्नेही कृतज्ञो धनुषि शशिधरे संहतांघ्रिः प्रगल्भः ॥
गीतज्ञः शीतभीरुः पृथुलतरशिरा सत्यधर्मोपसेवी
प्रांशुः ख्यातोऽल्परोषो मनसि भवयुतो निर्घृणस्त्यक्तलज्जः ।
चार्वक्षः क्षामदेहो गुरुयुवतिरतः सत्कविर्वृत्तजङ्घो
मन्दोत्साहोऽतिलुब्धः शशिनि मकरगे दीर्घकण्ठोतिकर्णः ॥

उद्घोणो रूक्षदेहः पृथुकरचरणो मद्यपानप्रसक्तः
सद्द्वेष्यो धर्महीनः परसुतजनकः स्थूलमूर्धा कुनेत्रः ।
शाठ्यालस्याभिभूतो विपुलमुखकटिः शिल्पविद्यासमेतः
दुःशीलो दुःखतप्तो घटभमुपगते रात्रिनाथे दरिद्रः ॥
शिल्पोत्पन्नाधिकारो हितजयनिपुणः शास्त्रविच्चारुदेहो
गेयज्ञो धर्मनिष्ठो बहुयुवतिरतः सौख्यभाक्भूपसेवो ।
ईषत्कोपो महत्कः सुखनिधिधनभाक्स्त्रीजितः सत्स्वभावो
यानासक्ताः समुद्रे तिमियुगलगते शीतगौ दानशीलः ॥ इति॥१५॥

इति राशिशीलप्रकरणम् ॥ ३ ॥

जन्मकाल में द्विस्वभाव (३।६।६।१२) राशि पर चन्द्रमा समवस्थित (बैठा) हो तो बालक त्याग युक्त (दानी), किये हुए उपकार को मानने वाला, उत्साह सम्पन्न, अनेक प्रकार के कार्य को करने वाला होता है। यदि ग्राम्य (गाँव में पैदा होने वाली) राशियों (मिथुन, और धनु का पूर्वार्ध कन्या, तुला, कुम्भ) में चन्द्रमा जन्मकाल में व्यवस्थित हो तो बालक ग्रामशील (खेती वारी करने वाला, देहातों में रहने वाला इत्यादि) होता है। यदि जन्मकालिक चन्द्रमा अरण्य (मेष, वृष, सिंह, धनु का उत्तरार्ध) राशि में बैठा हो तो पैदा हुआ बालक अरण्यप्रिय (वनों में आनन्द मनाने वाला, जङ्गल, पहाड झाडियों से वृत्ति पैदा करने वाला, इत्यादि) होता है। जलचर (मकर का उत्तरार्ध, कर्क, मीन) राशियों में उत्पन्न बालक जलप्रिय (समुद्र, नदी, नद, तालावों के दृश्यों को देख कर प्रसन्न होने वाला जहाज, भोट नाव इत्यादि से धन पैदा करने वाला इत्यादि) होता है। एवं वृश्चिक राशिपर स्थित चन्द्रमा में पैदा हुआ बालक ग्राम और अरण्य दोनों में सुख मनाने वाला होता है ॥ १५ ॥

## दृष्टिफलम्।

**क्षेत्राधिपसन्दृष्टे शशिनि नृपस्तत्सुहृद्भिरपि धनवान्।
द्रेष्काणांशकपैर्वा प्रायः सौम्यैः शुभं नाऽन्यैः ॥१६॥**

भट्टोत्पलः—अथ दृष्टिफलप्रकरणम् । यस्मिन् राशौ स्थितः चन्द्रस्तद्राशीश्वरेण दृष्टश्चन्द्रस्तत्कालजातः पुमान् राजा स्यात्। अथ चन्द्राक्रांतराशिस्तस्याधिपामित्रेण दृष्टे चन्द्रे संजातो धनवान् भवति । अर्थादेव क्षेत्राधिपशत्रुणा दृष्टे चन्द्रे दरिद्रो भवति। क्षेत्राधिपमध्यदृष्टिर्निष्फला भवति। द्रेष्काणांशकपैरिति। यस्मिन्द्रेष्काणे चंद्रो व्यवस्थितः तस्य द्रेष्काणस्य स्वामिना दृष्टे जातो धनी भवति। अत्रांशकग्रहणे नवांशकेति सर्वांशकग्रहणं। यस्मिन्नवांशे द्वादशांशे त्रिंशांशे स्थिते चंद्रे तेषां स्वामिभिश्च दृष्टे जातो धनी भवति।अर्थादेव द्रेष्काणांशस्वामी शत्रुभिर्दृष्टे चंद्रे निर्धनइति। तन्मध्यदृष्टिनिष्फलप्राया। सौम्यैरिति। क्षेत्राधिपो द्रेष्काणांशकपतिश्च यदि शुभग्रहो भवति तदा शुभकृद् भवति। अथाशुभोपि शुभकृत् किन्तु प्रायोग्रहणाद् शुभोपि फलदो भवति। पापग्रहः किञ्चित्फलदः। यस्माद्बृहज्जातके पापानामपि क्षेत्रपानां दृष्टिफलं शुभमुक्तं न केवलं यावदन्येश्वरः स भवति ॥ १६ ॥ इति दृष्टिफलप्रकरणम् ॥

वि० प्र०—अथ दृष्टिफलप्रकरणम् (४)। क्षेत्राधिपादिदृष्टे चन्द्रे क्रमेण फलान्याह—**क्षेत्राधिप इति**। शशिनि चन्द्रमसि क्षेत्राधिपसन्दृष्टे जातको नृपो राजा भवति। जन्मकाले चन्द्रमा यस्मिन् क्षेत्रे राशौ व्यवस्थितस्तस्य राशेर्योऽधिपः स्वामी तेन दृष्टेऽवलोकिते चन्द्रे उत्पन्नो बालको राजा भवति। एवं तत्सुहृद्भिरपि धनवान्। जन्मकाले चन्द्राधिष्ठितराशिस्वामिनो मित्रेण चन्द्रमस्यवलोकिते समुद्भूतःपुरुषो धनी भवति। अर्थादेव जन्मकालिकचन्द्राधिष्ठितराशिस्वामिशत्रुणाऽवलोकिते चन्द्रे

संजातः पुमान् निर्धनो भवति । तथा जन्मसामयिकचन्द्राक्रान्तराशिस्वाम्युदासीनस्य दृष्टिर्निष्फला ज्ञेया । द्रेष्काणांशकपैर्वेति जन्मकाले यस्मिन्द्रेष्काणे नवमांशाद्यंशकेषु वा चन्द्रमा व्यवस्थितस्तद्द्रेष्काणस्वामिना तन्नवमांशकादीनां स्वामिभिर्वा चन्द्रे दृष्टे सज्जातः पुमान् धनी भवति । अत्रांशकशब्देन सर्वांशकानां नवांशक-द्वादशांशक-त्रिंशांशकप्रभृतीनां ग्रहणम् । तथा जन्मकालिकचन्द्राक्रान्तद्रेष्काणस्वामिनो मित्रेणावलोकिते चन्द्रे अथवा चन्द्राक्रान्तनवमांशद्वादशांशत्रिंशांशाधिपानां मित्रैरवलोक्यमाने चन्द्रे जातः पुरुषो धनी भवति । अत्रापि द्रेष्काणनवमांशद्वादशांशत्रिंशांशाद्यधिपानां शत्रुभिरवलोकिते चन्द्रमसि जातो मनुष्यो दरिद्रो भवति । द्रेष्काणाद्यधिपतीनामुदासीना ये ग्रहास्तेषां दृष्टिः निष्फलेति बोध्यम् । प्रायो बाहुल्येन सौम्यैः शुभम् । यदि द्रेष्काणांशकपाः शुभग्रहास्तदा शुभफलं बाहुल्येन भवति यदि च पापग्रहास्तदा शुभफलस्याल्पत्वं ज्ञेयमिति ॥ १६ ॥ इति दृष्टिफलप्रकरणम् ॥ ४ ॥

जन्मकाल में जिस राशिपर चन्द्रमा बैठा हो उस राशि का स्वामी चन्द्रमाको देखता हो तो बालक राजा होता है। जिस राशि पर जन्मकाल में चन्द्रमा स्थित हो उस राशिस्वामी के मित्र से यदि चन्द्रमा देखा जाता हो तो बालक धनवान होता है। जिस राशि पर चन्द्रमा स्थित हो उसराशि के स्वामी का शत्रु चन्द्रमा को देखता हो तो बालक दरिद्र होता है । एवं जन्म समय में चन्द्रमा जिस द्रेष्काण अथवा नवमांश इत्यादि पर बैठा हो उस द्रेष्काण के वा नवमांशादि के स्वामी, तथा उस द्रेष्काणेश वा नवमांशेशादि के मित्र से चन्द्रमा देखा जाता हो तो बालक धनी होता है। यदि द्रेष्काण वा नवमांश के स्वामी के शत्रु से चन्द्रमा देखा जाता हो तो बालक निर्धन होता है यह अर्थतः सिद्ध होता है। यदि द्रेष्काणका वा नवमांश का स्वामी शुभग्रह हो तो विशेष करके शुभ फलों को देने वाला और पापग्रह होतो अल्प शुभ फलको देने वाला होता है ॥ १६ ॥

## भावफलप्रकरणम् ।

**पुष्णंति शुभा भावान्मूर्त्यादीन्घ्नन्ति संस्थिताः पापाः।**
**सौम्याः षष्ठेऽरिघ्नाः सर्वेऽरिष्टा व्ययाष्टमगाः ॥ १७ ॥**

**भट्टोत्पलः**—भावप्रकरणमाह । लग्नादारभ्य तन्वादयो भावास्तत्र यस्मिन् भावे शुभग्रहाः व्यवस्थिताः तं भावं पुष्णंति वृद्धिं कुर्वंति। यस्मिन् भावे पापग्रहाव्यवस्थितास्तद्भावहानिकराः। सौम्याः षष्ठेऽरिघ्नाः सौम्याः षष्ठस्थानस्थाःशत्रुनाशकराः भवन्ति पापा अत्रश्यमेवाति सर्वे नेष्टा व्ययाष्टमगाः पापाः सौम्याश्च मृत्युवृद्धिं कुर्वन्ति षष्ठग्रहणमत्रोपचयस्थानोपलक्षणार्थं तेन तृतीयस्थाः सौम्याः पापाश्च सहजवृद्धिं कुर्वन्ति, दशमस्थाः सौम्याः पापाश्च कर्मवृद्धिं कुर्वन्ति, एकादशस्था सौम्याः पापाश्चायवृद्धिं कुर्वन्ति । यदुक्तं 'उपचयवर्ज्यं सौम्यैर्यत्तत्पापैर्विपर्यस्तम्' ॥१७॥

वि० प्र०—अथ भावप्रकरणम् ( ५ ) । तत्र सामान्येन लग्नादिद्वादशभावेषु व्यवस्थितानां शुभाशुभग्रहाणां फलान्याह— । **पुष्णन्तीति** । शुभाः सौम्यग्रहा बुधगुरुशुक्रपूर्णेन्दवः संस्थितास्तन्वादिद्वादशभावेषु व्यवस्थिता मूर्त्यादीन्तनुधनसहजसुहृदादिद्वादशभावान् पुष्णन्ति वर्धयन्ति । यस्मिन्भावे सौम्या अधिष्ठितास्तस्य भावस्य वृद्धिं कुर्वन्ति । पापाः पापग्रहा रविभौमशनिक्षीणेन्दवो मूर्त्यादिषु भावेषु गतास्तान्घ्नन्ति नाशयन्ति । यत्र भावे पापाः स्थितास्तस्य भावस्य हानिं कुर्वन्तीत्यर्थः । **षष्ठस्य विशेषमाह**—सौम्याः शुभग्रहाःषष्ठे जन्मलग्नात्षष्ठस्थाने व्यवस्थिताः अरिघ्ना शत्रुनाशकरा भवन्ति । तथा सर्वे शुभाः पापाश्च व्ययाष्टमगा द्वादशाष्टमस्थानयोः समवस्थिता अरिष्टा अरिष्टफलदा भवन्ति । सर्वे ग्रहा द्वादशभावेऽधिष्ठिता व्ययवृद्धिकरा अष्टमभावगता मृत्युवृद्धिकरा भवन्तीत्यर्थः । अत्र भट्टोत्पलेन "षष्ठग्रहणमत्रोपचयस्थानोपलक्षणार्थं तेन तृतीयस्थाः सौम्याःपापाश्च सहजवृद्धिं कुर्वन्ति, दशमस्थाः सौम्याः पापाश्च

कर्मवृद्धिं कुर्वन्ति, एकादशस्थाः सौम्याः पापाश्चायवृद्धिं कुर्वन्ति । तदुक्तं 'उपचयवर्जं सौम्यैर्यत्तत्पापैर्विपर्यस्तम्'इति" व्याख्यातम् तदाचार्यस्य नाभिप्रेतम् । यतः सत्याचार्यमतमनुसृत्य बृहज्जातके उक्तं—

'समुपचयविपत्ती सौम्यपापेषु सत्यः
कथयति विपरीतं रिष्फषष्ठाष्टमेषु ।' इति ।

सत्याचार्येणापि—

सौम्याः पुष्टिं पापास्तद्धानिं संश्रिता ग्रहाः कुर्युः ।
मूर्त्यादिषु निधनेऽन्त्ये षष्ठे च विपर्ययात्फलदाः ॥ इति ॥

अथ कस्यचिन्मते स्वोच्च—स्वराशि-द्रेष्काणादिवर्गस्वमित्रक्षेत्र-स्वमूलत्रिकोणाद्यधिकारगताः शुभाः पापाश्च ग्रहास्तन्वादिभावेषु व्यवस्थिताः भाववृद्धिकराः, शत्रुक्षेत्र-शत्रुत्रिभाग-नवमांशादि-स्वनीचगता ग्रहाश्च भावहानिकरा भवन्तीत्युक्तम् । तथाहि भगवता गार्गिणा—

"नीचक्षरिपुगेहस्थो ग्रहो भावविनाशकृत् ।
उदासीनगृहे मध्यो मित्रस्वक्षत्रिकोणगः ॥
स्वोच्चगश्च ग्रहोऽवश्यं भाववृद्धिकरः स्मृतः ।" इति ॥

अन्येनापि—

'नीचस्थो रिपुराशीस्थः खेटो भावविनाशकः ।
मूलस्वतुङ्गमित्रस्थो भाववृद्धिकरो भवेत ॥' इति ॥ १७ ॥

लग्नादि द्वादश भावों में से जिस २ भाव में शुभ ग्रह बैठे हों उस उस भावकी वृद्धि करते हैं । जिस भाव में पापग्रह बैठे हों उस भाव को हानि करते हैं । यदि शुभ ग्रह छठवें भाव नें पडा हो तो शत्रुओं का नाश करता है । और यदि शभग्रह-पापग्रह सब के सब बारहवें आठवें स्थानों में पड़े हों तो अरिष्ट कारक होते हैं ॥ १७ ॥

### चन्द्रे लग्नगते फलम् ।

**कार्किवृषाजोपगते चन्द्रे लग्ने धनी सुरूपश्च ।**
**विकलाङ्गजडदरिद्राः शेषेषु विशेषतः कृष्णे ॥ १८ ॥**

**भट्टोत्पलः**–चन्द्रमसो लग्नगतस्य फलमाह–कर्किराशौ लग्नगते वृषे मेषे च लग्नगते तत्स्थे चन्द्रे जातो धनी सुरूपश्च कर्कवृषमेषान् वर्जयित्वा शेषराशौ लग्नगते चन्द्रे कृष्णपक्षे विशेषतो अत्यर्थं विकलाङ्गजडदारिद्राणां जन्म भवति ॥ १८ ॥

वि० प्र०–अथ लग्नगतश्चन्द्रस्य फलविशेषमाह—**कर्कीति** । ककिः कर्कटः, वृषः प्रसिद्धः, अजो मेषः एतेषामन्यतरे लग्ने जन्मलग्नगते तत्स्थे चन्द्रे चन्द्रमसि सति जातो जातको धनी सुरूपः सुष्टुरूपं यस्य स तथोक्तो भवति । शेषेषु राशिषु विकलाङ्गजडदरिद्रा भवन्ति । कर्कट-वृष-मेषराशीन्विहायावशिष्टराशीनां मिथुनसिंहकन्यातुलावृश्चिकधनुर्धरमकरकुम्भमीनराशीनामन्यतमे राशौ जन्मलग्ननगते तत्स्थे चन्द्रमसि जातः विकलशरीरावयवः जडो दरिद्रश्च भवति । विशेषतः कृष्णे कृष्णपक्षे एवं भूतायां स्थितौ जातः अवश्यं दरिद्रो भवतीति ॥ १८ ॥

चन्द्रमा यदि कर्क वृष और मेष इन तीनों में से किसी राशि में पड़कर जन्म लग्न में पड़ा होतो बालक धनवान् और रूपवान् होता है। शेषराशियों में स्थिति होकर चन्द्रमा यदि जन्मलग्न में पड़ा हो तो विकलांग ( लगड़ा लुजा काना कुब्ज इत्यादि ) जड़ ( मूर्ख ) दरिद्र इत्यादि होता है। कृष्ण पक्ष में ऐसी स्थिति हो तो विशेषकरके ऐसा फल होता है ॥ १८ ॥

## सूर्यलग्नगतफलम् ।

**विकलेक्षणोऽर्कलग्ने तैमिरिकोऽजे स्वभे तु रात्र्यन्धे ।**
**बुद्बुददृष्टिः कर्किणि काणो व्ययगे शशाङ्के वा ॥ १९ ॥**

**भट्टोत्पलः**–अर्कस्य लग्नगतस्य चंद्रार्कयोश्च लग्नाद्द्वादशस्थयोर्विशेषमाह । मेषसिंहकर्कटान् वर्जयित्वाऽन्यस्मिन् राशौ लग्नगते तस्मिन् चार्के स्थिते विकलेक्षणो भवति मेषराशौ लग्नगते तत्रैव चार्के स्थिते जातस्तैमिरिको भवति तिमिराहतदृष्टिः

सिंहे लग्नगते तत्र चैवार्के स्थिते जातो रात्र्यन्धो भवति। कर्किणि लग्नगते तत्रैव चार्के स्थिते जातो बुद्बुदद्दष्टिर्भवति पुष्पिताक्षः। काणो व्ययगे शशांके वा। लग्नगते द्वादशेऽर्के जातः काणो भवति चंद्रे वा द्वादशे काणः। यद्यपि सामान्येनोक्तं तथापि आदित्ये व्ययगते दक्षिणाक्षिकाणः चंद्रे व्ययगते वामाक्षिकाणः। उक्तं च 'व्ययगतश्चंद्रो वामं हिनस्त्यपरं रविः' इति ॥ १९ ॥

वि॰ प्र॰—मेषादिराशिगलग्नस्थितसूर्यस्य जन्मलग्नाद्द्वादशभावगतयोः सूर्याचन्द्रमसोश्च फलान्याह—**विकल इति**। मेषकर्कटसिंहानां पृथक्फलनिर्देशात्तान् हित्वाऽन्यस्मिन् राशौ लग्नगते तत्रैव च सूर्ये व्यवस्थिते उत्पन्नो बालको विकलेक्षणो विकलेऽक्षिणी यस्य स तथोक्तः विकलनयनो भवति। मेषराशौ लग्नगते तत्रैव चार्केऽधिष्ठिते जातस्तैमिरिकस्तिमिराहतलोचनः स्यात्। स्वभे स्वकीयराशौ सिंहराशौ लग्नगते तस्मिन्नेवार्के स्थिते समुद्भूतो मनुष्यो रात्र्यन्धः रात्रावन्धो भवति। कर्किणि कर्कराशौ लग्नगते तस्मिन्नेवादित्ये समवस्थिते समुत्पन्नो बालको बुद्बुदद्दष्टिर्बुद्बुदाकारनयनो भवति। एवं जन्मलग्नाद्व्ययगे द्वादशभावे गते सूर्ये शशाङ्के चन्द्रमसि वा जातःकाण एकाक्षो भवति। तत्र केनाऽक्ष्णेत्युच्यते। सूर्ये व्ययभावगते दक्षिणनेत्रेण चन्द्रे च द्वादशस्थिते वामनेत्रेण काणः स्यात्। उक्तञ्च सारावल्यां कल्याणवर्मणा—

व्ययभवनगतश्चन्द्रो वामं चक्षुर्विनाशयति हीनः।
सूर्यस्तथैव चान्यच्छुभद्दष्टो याप्यतां नयतः॥ इति ॥ १९ ॥

मेष, सिंह, कर्क इन राशियों को छोड़ कर अन्यराशि में पड़ा हुआ सूर्य लग्न में स्थित हो तो बालक विकलनेत्र वाला ( अन्धा ) होता है। मेष में स्थित होकर लग्न में पड़ा हो तो तैमिरिक ( तिमिर रोग से युक्त ), अपनी राशि ( सिंह ) में स्थित हो कर लग्न में पड़ा हो तो रात्र्यन्ध ( रतौंधी वाला ), और कर्क राशि में पड़ कर लग्न में व्यवस्थित हो तो बालक बुद्बुदनेत्रवाला होता है

लग्न से बारहवें स्थान में सूर्य हो तो जातक काना होता है। लग्न से बारहवें स्थान में चन्द्रमा व्यवस्थित हो तो भी बालक काना होता है। सूर्य के १२ वें रहने पर दक्षिण नेत्र से, चन्द्रमा के १२ वें रहने पर बायें नेत्र से काना होता है ॥ १९ ॥

भावशुभाशुभफलम् ।

इष्टं पादविवृद्धया मित्रस्वगृहत्रिकोणतुङ्गेषु ।
रिपुभेऽल्पं फलमर्कोपगतस्य पापं शुभं नैव ॥ २० ॥

भट्टोत्पलः—भावफलम् । तद्द्विविधं शुभमशुभं च । तत्र यद्भावफलं शुभं तस्य फलस्य मित्रक्षेत्रस्थो ग्रहः पादं चतुर्थांशं प्रयच्छति । स्वगृहस्थोऽर्धम् । त्रिकोणस्थः पादहीनं । तुंगो उच्चस्थः सर्वम् । रिपुभेल्पमिति रिपुक्षेत्रस्थः पादादप्यल्पं। अर्कोपगतोऽस्तंगतो न किंचिदपि नीचस्थश्च । एवं शुभफलं प्रयच्छन्ति । पापफलमेवं तत्र पापस्य फलस्य शुभफलेन व्याख्यापः तत्रास्तमितो नीचस्थश्चाशुभं संपूर्णं ददाति, शत्रुक्षेत्रस्थः पादोनं मित्रक्षेत्रस्थोऽर्द्धं स्वगृहस्थःपादं त्रिकोणस्थः पादादल्पं उच्चस्थानस्थो न किञ्चिदपि॥२०॥

वि० प्र०—पुरा 'पुष्णन्ति शुभा भावा' नित्यादिना सामान्यतः फलकथनप्रकारमुक्तं तदेवात्र स्वमित्रक्षेत्रादिराशिगतानां फलविशेषमाह—**इष्टमिति** । शुभाशुभभेदेन फलस्य द्विविधत्वम् । तत्रेष्टं शुभफलं मित्रस्वगृहत्रिकोणतुङ्गेषु स्थिता ग्रहाःक्रमशःपादविवृद्धया फलं प्रयच्छन्ति। मित्रराशिगतो ग्रहः शुभफलस्य चतुर्थांशं, स्वगृहगतोऽर्धं, स्वमूलत्रिकोणराशिगतश्चतुर्थांशोनं, स्वोच्चराशिगतो ग्रहः सर्वं शुभफलं ददाति। रिपुभे शत्रुराशौ गतो ग्रहः शुभफलमल्पं प्रयच्छति । तथाऽर्कोपगतस्य अर्केणोपगतस्तस्यास्तङ्गतस्य ग्रहस्य नीचराशिगतस्य ग्रहस्य च न पापं न चापि शुभं फलं भवति "अस्तगनीचराशिगग्रहयोः" फलसाम्यदर्शनादिति ।

अस्मिन्पद्ये 'इष्ट' पदोपादानादनिष्टफलस्योत्क्रमेण व्यपदेशः । तद्यथा—अस्तङ्गतो ग्रहो नीचगतश्च सर्वमशुभफलं प्रयच्छति । शत्रुराशिगतो ग्रहश्चतुर्थांशोनं फलं,मित्रराशिगतोऽर्द्धं, स्वराशिगतो ग्रहः चतुर्थांशं,स्वमूलत्रिकोणराशिगतः पादादल्पं स्वोच्चराशिगतो ग्रहः किञ्चिदपि नाऽशुभं फलं प्रयच्छतीति । उक्तञ्च सारावल्याम्—

स्वोच्चस्थितः शुभफलं प्रकरोति पूर्णं
　　नीचर्क्षगस्तु विफलं रिपुमन्दिरेऽल्पम् ।
पादं शुभस्य हितभे स्वगृहे तदर्धं
　　पादत्रयं गगनगः स्थितवांस्त्रिकोणे ॥
नीचर्क्षगः सकलमेव करोति पापं
　　न्यूनं च किञ्चिदरिभे विफलं स्वतुङ्गे ।
पादत्रयं हितगृहे विहगोऽशुभस्य
　　स्वर्क्षे दलं च करणं स्थितिवांस्त्रिकोणे ॥इति॥

सर्वे ग्रहाः स्वस्वदशान्तर्दशायामेव क्रमशः उक्तफलदातारो भवन्तीति॥२०॥

अपने मित्र के घर में पड़ा हुआ ग्रह चौथाई फल, अपनी राशि में व्यवस्थित ग्रह आधाफल, अपने त्रिकोण ( मूलत्रिकोण ) में पड़ा हुआ ग्रह पादोनफल और अपने उच्चमें स्थित ग्रह पूर्ण शुभफल को देता है । शत्रु की राशि में पड़ा हुआ ग्रह चौथाई से कम फल देता है। और सूर्य के किरणों से व्यावृत ( अस्त ) ग्रह पाप और शुभ किसी प्रकार का फल नहीं देता यह शुभ फल विषयक व्यवस्था है। अशुभ फल के विषयमें—नीचग और अस्त ग्रह सम्पूर्ण पापफलों को, अपने शत्रु के राशिमें पड़ा हुआ ग्रह चौथाई कम अशुभ फल, अपने मित्रकी राशि में बैठा हुआ ग्रह आधा अनिष्ट फल, अपनी राशि में व्यवस्थित ग्रह चौथाई अशुभ फल, अपने त्रिकोण में स्थित ग्रह चौथाई से कम अनिष्ट फल और उच्चराशि में पड़ा हुआ ग्रह कुछ भी नहीं अनिष्टफलों को देता है ॥ २० ॥ इतिभावप्रकरणम् ॥ ५ ॥

आश्रयप्र० (मेषादिनवांशफलम्)

**तस्करभोक्तृविचक्षणधनिनृपतिनपुंसकाभयदरिद्राः ।**
**खलपापोग्रोत्कृष्टा मेषादीनां नवांशभवाः ॥ २१ ॥**

**भट्टोत्पलः**—अथाश्रयप्रकरणं चाह । तत्रादावेव नवांशजातस्य स्वरूपमाह । यस्मिन् कस्मिन् राशौ लग्नगते मेषनवांशे जातस्तस्करो भवति । वृषनवांशके जातो भोक्ता, मिथुननवांशके जातो विचक्षणः, कर्कनवांशके जातो धनी, सिंहनवांशे जातो राजा, कन्यानवांशके जातो नपुंसकः, तुलानवांशके जातः शूरः, वृश्चिकनवांशे जातो दरिद्रो भवति । धन्विनवांशे जातः खलो दुष्टो भवति। मकरनवांशे जातः पापो भवति। कुंभनवांशके उग्रो भवति क्रूर इत्यर्थः । मीननवांशे जात उत्कृष्टो भवति ॥ २१ ॥

वि० प्र०—अथाश्रयप्रकरणम् ( ६ ) । तत्र मेषादिनवांशकजातफलम् । मेषं हित्वाऽन्यस्मिन् राशौ जन्मलग्नगते मेषनवांशके उत्पन्नो बालकस्तस्करश्चौरो भवति । वृषं वर्जयित्वाऽन्यराशौ लग्नगते वृषनवांशके जातो भोक्ता नानाविधसुखस्य भोगकर्ता स्यात् । मिथुनवर्जमन्यस्मिन् राशौ लग्नगते मिथुननवांशके जातो विचक्षणः पण्डितो भवति । वर्गोत्तमनवांशके जातस्य पृथक्फलदर्शनादेवं सर्वत्र व्याख्येयम् । कर्कटवर्जमन्यराशौ लग्नगते कर्कटकनवांशे जातो धनी धनसंपन्नो भवति । धनान्याह ग्रन्थान्तरे—

वस्त्राणि शस्त्राणि च पुस्तकानि
द्रव्याणि धान्यानि वसुन्धरा च ।
कुटुम्ब-विद्या-पशु-वाटिकाश्च
भाण्डानि भूमीश्च धनानि द्वादश ॥ इति॥

एवं सिंहनवांशके जातो बालको नृपती राजा भवति । कन्यानवांशे जातः नपुंसकः पुंस्त्वरहितः, तुलानवांशके उत्पन्नोऽभयः शूरो युद्धे पराक्रमशीलः इति यावत् । वृश्चिकनवांशके समुत्पन्नो दरिद्रो धनरहितः,

धनुर्धरांशे जातः खलो दुष्टः, मकरनवांशे जातः पापः, कुम्भनवांशे जातः उग्रः, मीननवांशे जातो मनुष्य उत्कृष्टः स्वकुलेषूत्तमा भवति । वर्गोत्तमांशेषूत्पन्नः एषां स्वामिनो भवन्ति क्रमशः । उक्तञ्चार्येण बृहज्जातके—

स्तेनो भोक्ता पण्डिताढ्यो नरेन्द्रः
क्लीबः शूरो विष्टिकृद्दासवृत्तिः ।
पापो हिंस्रोऽभीश्च वर्गोत्तमांशे
ष्वेषामीशा............... ॥ इति ॥ २१ ॥

जिस किसी राशिमें मेषके नवांश में जन्म होतो जातक चोर होता है । वृषराशि के नवमांश में जन्म हो तो नाना प्रकार के भोगों का भोगने वाला, मिथुन के नवमांश में जन्म हो तो विचक्षण (पण्डित), कर्क के नवमांश में जन्म हो तो धनी, सिंह के नवमांश में राजा, कन्या के नवमांश में पैदाइस हो तो नपुंसक, तुला के नवमांश में जन्म होने पर निर्भय, वृश्चिक राशि के नवमांश में जन्म हो तो दरिद्र, धनूराशि के नवनांश में उत्पत्ति हो तो खल (दुष्टस्वभाव वाला), मकरराशि के नवमांश में जन्म हो तो पाप करने वाला, कुम्भ राशि के नवमांश में उत्पन्न बालक क्रूरस्वभाव वाला और मीन राशि के नवमांश में जन्म ग्रहण करने वाला बालक उत्कृष्ट (बडप्पन से युक्त) होता है ॥ २१ ॥

## स्वक्षेत्रगतग्रहफलम् ।

**कुलतुल्य कुलाधिकबन्धुमान्यधनिभोगिनृपसमनरेन्द्राः ।**
**स्वर्क्ष गतैकविवृद्ध्या किञ्चिन्न्यूनाः सुहृद्गृहगैः ॥२२॥**

भट्टोत्पलः—एकाविवृद्ध्या स्वक्षेत्रगतैर्ग्रहैर्जातस्य स्वरूपमाह । यस्मिन् कस्मिन् राशौ ग्रहे स्वक्षेत्रे जातः स्वकुलसदृशो भवति । द्वयोः स्वक्षेत्रयोः स्वकुलाधिकः, त्रिषु बंधुमान्यः, चतुर्षु धनी, पंचसु भोगी, षट्सु नृपसमः, सप्तसु राजा । किंचिन्न्यूनः

सुहृद्गृहगैः एकस्मिन् भावे मित्रक्षेत्रगते ग्रहे परविभवोपजीवी, द्वयोःसुहृद् विभवोपजीवी,त्रिषु जातिविभवोपजीवी,चतुर्षु बन्धुषु विभवोपजीवी, पंचसु गणस्वामी, षट्सु बलस्वामी, सप्तसु राजा उक्तं च 'परिविभवसुहृत्स्वबंधुपोष्यगणपबलेशनृपाश्च मित्रभेषु' इति ॥ २२ ॥

वि० प्र०—अथैकादिसंख्योत्तरोपचयेन स्वराशिगतानां स्वमित्रराशिगतानां च ग्रहाणां क्रमेण फलान्याह—**कुलतुल्य इति** । स्वक्षगतैकविवृद्धया स्वक्षगतेषु स्वराशिपूपस्थितेषु ग्रहेषु एकविवृद्धयैकोपचयक्रमेण कुलतुल्य-कुलाधिक-बन्धुमान्य-धनि-भोगि-नृपसम-नरेन्द्राः मनुष्या भवन्ति । यस्य कुण्डल्यामेको ग्रहः स्वराशौ व्यवस्थितः स जातकः कुलसमो भवति । एवं जन्मकाले द्वयोः ग्रहयोः स्वक्षेत्रगतयोर्जातः कुलाधिकः स्ववंश्येभ्यो विद्याविनयधनादिनाऽधिको भवति । त्रिषु स्वराशिगतेषु ग्रहेषु सत्सु जातः बन्धुमान्यः कुलजानां माननीयः, चतुर्षु धनी, पञ्चसु भोक्ता, षट्सु नृपसमो राजतुल्यः, सप्तसु नरेन्द्रो राजा भवति । सुहृद्गृहगैः स्वमित्रराशिगतैर्ग्रहै एवमेकोत्तरवृद्धया स्थितैः किञ्चिन्न्यूना भवन्ति जातका इति शेषः । सर्वं स्फुटमुक्तमाचार्येण बृहज्जातके—

"कुलसमकुलमुख्यबन्धुपूज्या
धनिसुखभोगिनृपाः स्वभैकवृद्धया ।
परविभवसुहृत्स्वबन्धुपोष्या
गणपबलेशनृपाश्च बन्धुपोष्याः ॥" इति ॥ २२ ॥

यदि जन्मकाल में अपनी राशि में एक ग्रह व्यवस्थित हो तो बालक अपने कुल के समान, दो ग्रह अपनी २ राशि में पड़े हों तो अपने कुल में कुछ अधिक प्रतिष्ठित, तीन ग्रह अपनी राशि में स्थित हों तो अपने बधुओं से आदरणीय, चार ग्रह अपनी २ राशि में गत हों तो अपने कुलवालों में धनी, पाँच ग्रह अपनी २ राशि पर स्थित हों तो अपने कुल में सबसे अधिक सुख भोगने

वाला, छ ग्रह अपनी २ राशि में पड़े हो तो राजा के बराबर,सातग्रह अपनी २ राशि पर समधिष्ठित हों तो जातक राजा होता है। यह अपने २ राशि में स्थितग्रहों का फल है। इसी तरह अपने मित्र के घरमें एकैकं ग्रह बैठे हों तो स्वराशिके अपेक्षा कुछ कम फल होता है। जैसे-जिसकी कुण्डली में एक ग्रह अपने मित्र की राशि का हो वह बालक दूसरों के धनसे जीवन निर्वाह करने वाला दाग्रह अपने२ मित्रके राशि में पड़े हों तो मित्रों के धन से जीने वाला, तीन ग्रह अपने २ मित्रों के घर में व्यवस्थित हों तो अपनी जातियों के धन से भोग करने वाला, चारग्रह अपने २ मित्र के गृह में पड़े हों तो अपने बन्धुबान्धवों के धन से अपनी जीविका चलाने वाला, पाँच ग्रह अपने २ मित्रों के घर के हों तो वह बालक बहुत मनुष्यों का स्वामी, छ ग्रह अपने २ मित्र के क्षेत्र में बैठे हो तो जातक सेना का स्वामी और सातग्रह अपने २ मित्रों की राशियों पर अधिष्ठित हों तो बालक राजा होता है ॥ २२ ॥

### उच्चगतग्रहफलम् ।

त्रिप्रभृतिभिरुच्चस्थैर्नृपवंशभवा भवन्ति राजानः ॥
पञ्चादिभिरन्यकुलोद्भवाश्च तद्वत्त्रिकोणगतैः ॥ २३ ॥

भट्टोत्पलः—यस्य जन्मनि त्रयो ग्रहाः उच्चगता भवंति स राजवंशजातस्तदा राजा भवति । यस्य चत्वारः सोऽपि राजवंशजो राजा भवति । यस्य जन्मनि पंच ग्रहा उच्चराशिगता भवंति स यदि अन्यकुलजातस्तदाऽपि राजा भवति । यस्य षट्ग्रहाः स अन्यकुलजातो राजा भवति यस्य सप्त ग्रहाः सोऽपि । एकेनोच्चगतेन द्वाभ्यां च राजवंशजो राजा न भवति किं तर्हि धनी भवति । तत्रापि यथा यथोच्चस्था ग्रहा भवन्ति तथा तथाधिको धनी। तद्वत्त्रिकोणगतैरपि त्रिचतुर्भिर्मूल

त्रिकोणगतै राजवंशजो राजा भवति। पञ्चषष्ठसप्तभिर्मूलत्रिकोणगतैरन्यवंशजोऽपि राजा भवति। अल्पैर्मूलत्रिकोणगैर्धनी भवति। यथा यथा बहवो मूलत्रिकोणस्था भवन्ति तथा तथाऽधिको धनी भवति ॥ २३ ॥

वि० प्र०—स्वोच्चगतानां स्वमूलत्रिकोणगतानां च ग्रहाणां फलं (राजयोग)माह—त्रिप्रभृतिभिरिति । उच्चस्थैः स्वोच्चराशिगतैस्त्रिप्रभृतिभिस्त्र्यादिभिस्त्रिभिश्चतुर्भिर्वा ग्रहैर्जाता नृपवंशभवा राजकुलोत्पन्ना राजानो भवन्ति । पञ्चादिभिः पञ्चभिः षड्भिर्वा ग्रहैः स्वोच्चराशिव्यवस्थितैरन्यकुलोद्भवा राजकुलेतरकुलवंशजाता अपि राजानो भवन्ति। तद्वदनेनैव प्रकारेण त्रिकोणगतैः स्वमूलत्रिकोणराशिव्यवस्थितैस्त्रिभिश्चतुर्भिर्वा ग्रहै राजकुलजा राजानो भवन्ति। तथा पञ्चादिभिः ग्रहैःस्वमूलत्रिकोणराशिगतैरन्यकुलसमुत्पन्ना अपि राजानो भवन्ति किमुत राजकुलोद्भवाः। ( एवं भूते योगे ) राजकुलोद्भवास्तु राजसु विशिष्टा भवन्तीत्यर्थः। एको ग्रहो द्वौ ग्रहौ वा स्वोच्चराशिगतौ स्वमूलत्रिकोणराशिगतौ वा तथा राजवंशोद्भवोऽपि राजा न भवति किन्तु धनी भवति । एवं त्रयश्चतुरो वा ग्रहाः स्वोच्चराशिगताः स्वमूलत्रिकोणराशिगतास्तदाऽन्यकुलजातो राजा न भवति किन्तु धनी भवति । ग्रहाणां कालादिबलापेक्षा सर्वत्रैव। उक्तञ्च—सारावल्यां कल्याणवर्मणा—

स्वोच्चत्रिकोणगृहगर्बलसंयुतैश्च
त्र्याद्यैर्नृपो भवति भूपतिवंशजातः।
पञ्चादिभिर्जनपदप्रभवोपि सिद्धो
हीनः क्षितीश्वरसमो न तु भूमिपालः॥ इति।

अथ विशेषमाह स एव—

अशुभगगनवासैः स्वोच्चगैः क्रूरचेष्टं
कथयति यवनेन्द्रो भूपतिं विक्रमोत्थम्।
न तु भवति नरेन्द्रो जीवशर्मोक्तपक्षे
भवति नृपतियोगः सत्कृतो राष्ट्रपालः॥ इति।

अत्र यवनाचार्यः—

पापैः पापमतिः स्यात्स्वोच्चगतैर्धर्मवित्तमः सौम्यैः।
व्यामिश्रैर्मिश्रमतिः पृथ्वीशो जायते मनुजः ॥ इति ॥

जीवशर्मवाक्यम्—

पापैरुच्चगतैर्जाता न भवन्ति नृपा नराः।
किन्तु वित्तान्वितास्ते स्युः क्रोधनाः कलहप्रियाः ॥ इति।

अत्रोच्चगत-मूलत्रिकोणगतग्रहयोः फलसाम्यप्रतिपादनात्स्वोच्चगत-ग्रह—स्वमूलत्रिकोणगतग्रहा यदि त्रिचतुरादिसंख्यापूरकास्तदाऽपि राजकुलजा अन्यकुलजाश्च यथाक्रमं पूर्वोदितलक्षणेन राजानो भवन्तीति बोध्यम्। यथा यथा एकद्व्यादिग्रहाः स्वोचराशिगताः स्वमूलत्रिकोणराशिगताश्च भवन्ति तथा तथाऽधिको धनाढ्यो भवति ॥ २३ ॥

जिस जातक के कुण्डली में तीन ग्रह अपने उच्चराशि में पड़े हों वह बालक यदि राजकुल में पैदा हुआ हो तो राजा होता है। यदि ४ चारग्रह अपने २ उच्चराशि में पड़े हों तो भी राजकुल में उत्पन्न होने पर राजा होता है। यदि ३ या ४ ग्रह उच्च में पड़े हों और जातक राजकुल का न हो तो बड़ा धनिक होता है। एवं यदि पाँच या छ ग्रह अपने२ उच्च में पड़े हो तो अन्यकुल मे उत्पन्न होने पर भी राजा होता है (यदि एक या दो ग्रह अपने उच्चके हों तो बालक धनी होता है)। एवं तीन या चार ग्रह अपने २ मूल त्रिकोणगत हो तो राजवंश में पैदा हुआ बालक हो तब राजा होता है। यदि पाँच छ या सात ग्रह अपने २ मूलत्रिकोण मे व्यवस्थित हों तो जातक अन्य कुल में उत्पन्न भी राजा होता है। एक, दो ग्रह अपने २ मूलत्रिकोण में पड़े हो तो सामान्य धनी होता है। जैसे अधिक२ ग्रह अपने २ मूलत्रिकोण में हो वैसे २ जातक अधिकाधिक धनवान् होता है ॥ २३ ॥

नीचगतग्रहफलम् ।

**निर्धनदुःखितमूढव्याधितबन्ध्याभितप्तवधभाजः ।**
**एकोत्तरपरिवृद्ध्या नीचगतैः शत्रुगृहगैर्वा ॥ २४ ॥**

भट्टोत्पलः-अथैकादिभिर्नीचगतैर्ग्रहैर्जातस्य स्वरूपमाह । यस्मिन् कस्मिन् राशौ एकस्मिन् ग्रहे नीचगते शत्रुक्षेत्रगते वा जातो निर्धनो भवति,द्वाभ्यां नीचगताभ्यां दुःखितः, त्रिभिर्मूढो विचेताः चतुर्भिर्व्याधितः, पंचभिर्बन्ध्यः षड्भिरभितप्तवाक् सप्तभिर्वधभाग्भवति ॥ २४ ॥

वि०प्र०—अथैकोत्तरवृद्ध्या स्वनीचगतानां स्वशत्रुराशिगतानां ग्रहाणाञ्च फलानि यथाक्रममाह—**निर्धन इति**।एकोत्तरपरिवृद्ध्या एकोत्तरोपचयक्रमेण नीचगतैः स्वनीचराशिव्यवस्थितैः शत्रुगृहगैः स्वशत्रुराशिगतैर्वा ग्रहैर्निर्धनदुःखितमूढव्याधितबन्ध्याभितप्तवधभाजो जातका भवन्ति । यस्य जन्मकाले यस्मिन्कस्मिन्भावे एको ग्रहः स्वनीचराशिगतः स्वशत्रुराशिगतो वा तदा जातको निर्धनो दरिद्रो भवति । द्वौ ग्रहौ स्वनीचगौ शत्रुक्षेत्रगौ वा तदा जातो दुःखितो भवति । त्रयो ग्रहाः स्वनीचगाः स्वशत्रुराशिगा वा तदा मूढो यथाजातो बालको भवति । 'अज्ञमूढयथाजातमूर्खवैधेयबालिशाः' इत्यमरः । चत्वारो ग्रहा नीचगाः शत्रुराशिगा वा तदा जातो व्याधित आमयावी भवति । 'आमयावी विकृतो व्याधितोऽपटुः' इत्यमरः । पञ्चग्रहा नीचगाः स्वशत्रुगा वा तदा जातको बन्ध्यो बन्धनदुखितः, षड्ग्रहा नीचगाः स्वशत्रुराशिगा वा तदाऽभितप्तो बहुदुःखितः, सप्तग्रहा नीचगाः स्वशत्रुक्षेत्रगा वा तदा वधभाग्भवति। सूर्यो मेषे बुधः कन्यायां च युगपन्न भवितुमर्हतोऽतःसप्तग्रहाणामेकहेलया स्वस्वनीचगत्वमसम्भवमिहाचार्येण पूर्वशास्त्रानुसारेणोक्तमितिदिक् ॥२४ ॥

यदि किसी जातक की कुण्डली में एक ग्रह अपने नीचराशि में वा अपने शत्रु के घर में पड़ा हो तो वह बालक निर्धन ( दरिद्र ) होता है। दो ग्रह नीच या शत्रु के राशि के हों तो दुःखी, तीन ग्रह अपनी२नीच राशि या शत्रुके राशि के हों तो मूर्ख, चार ग्रह अपनी २ नीचराशि वा शत्रुराशि के हों तो जातक व्याधिग्रस्त, पाँच ग्रह अपनी २ नीचराशि या शत्रुराशि में स्थित हों तो मनुष्य बन्धन से दुःखी, छ ग्रह अपना २ नीचराशि या शत्रुराशि पर समवस्थित हों तो वह आदमी अभितप्त ( बहुतदुःखी ) और सात ग्रह अपनी २ नीचराशि या शत्रुराशि पर स्थित हों तो वध भागी होता है। सातग्रह एक समय में अपने नीच राशि के नहीं हो सकते परन्तु आचार्य ने यहाँ पूर्वाचार्य के वचनानुसार लिख दिया है ॥२४॥ इत्याश्रयप्रकरणम् ।

## राजयोगाः ।

एकोऽपि नृपतिजन्मप्रदो ग्रहः स्वोच्चगः सुहृद्दृष्टः ।
बलिभिः केन्द्रोपगतैस्त्रिप्रभृतिभिरवनिपालभवः ॥२५॥

भट्टोत्पलः—अथ राजयोगप्रकरणं चाह । यस्य जन्मनि एकोपि ग्रहः स्वोच्चगः मित्रेण तत्काले दृष्टः नृपजन्मदो भवति । त्रयो ग्रहा बलयुताः केंद्रगता भवंति स जातो राजा भवति । तत्र चत्वारश्च स राजा भवति । पंचादयो न गृहीतव्या यस्मात्पंचादिभिः केंद्रगतैरबलवाद्भिर्जातो राजा भवति । तत्रैव तज्जातं त्रिभिश्चतुर्भिर्वा स्वोच्चगतैर्न केवलं केन्द्रगतैर्बलवद्भी राजवंशे जातो राजा भवति ॥ २५ ॥

वि० प्र०—अथ राजयोगप्रकरणम् ( ७ ) । तत्र राजयोगद्वयमाह—एक इति । (१) यस्य जन्मसामयिकलग्नकुण्डल्यामेकोपि ग्रहः स्वोच्चगः स्वकीयोच्चराशिगतःसुहृद्दृष्टः स्वसुहृदा स्वमित्रेण दृष्टोवलोकित-

श्चेत्तदा नृपतिजन्मप्रदो राज्ञो जन्मप्रदो भवति । ( २ ) त्रिप्रभृतिभिस्त्र्याद्यैर्बलिभिर्बलवद्भिर्ग्रहैः केन्द्रोपगतैः लग्न-चतुर्थ-सप्तम-दशमस्थानेषु व्यवस्थितैरवनिपालः पृथिवीपालको राजा भवति ॥ २५ ॥

जिस के जन्म समय में एक ग्रह भी अपने उच्चराशि में स्थित हो और अपने मित्र से देखा जाता हो तो राजा को पैदा करता है। और तीन या चार इत्यादि ग्रह बली हो कर केन्द्र में व्यवस्थित हों तो बालक राजा के वंश में उत्पन्न राजा होता है ॥ २५ ॥

राजयोगान्तरम् ।

**वर्गोत्तमगे चन्द्रे चतुराद्यैर्वीक्षिते विलग्ने वा ।**
**नृपजन्म भवति राज्यो नृपयोगे बलयुतदशायाम् ॥२६॥**

भट्टोत्पलः—राजयोगांतरमाह । यस्मिन् राशौ चन्द्रो व्यवस्थितः स चन्द्रो राशिसंबंधिनवांशके भवति तदा वर्गोत्तमस्थो भवति। यस्मिन् वर्गोत्तमगते चन्द्रे चतुराद्यैर्ग्रहैश्चतुःपंचषड्भिर्वीक्षिते तदा जातोऽन्यकुलजोपि राजा भवति । विलग्ने वा यस्य लग्नस्योदयस्तस्य चेत्स्वनवांशकोदयो भवति । तदा सलग्नो वर्गोत्तमस्थो भवति तस्मिन् लग्ने वर्गोत्तमगते चतुराद्यैर्ग्रहैः चंद्रवर्जितैश्चतुःपंचषड्भिर्वीक्षितैर्यो जातः सोपि राजा भवति । उदुक्तं "वर्गोत्तमगते चंद्रे अथवा चन्द्रवर्जितः । चतुराद्यैर्ग्रहैर्दृष्टे नृपवंशोद्भवः स्मृतः" इति राज्यं नृपयोगे बलयुतदशायामिति । विद्यमाने राजयोगे बलयुतग्रहस्य दशायां तस्य राज्यप्राप्तिर्वक्तव्या ॥ २६ ॥ इति राजयोगप्रकरणम् ।

वि० प्र०—अथ राजयोगान्तरमाह—वर्गोत्तमगते वर्गोत्तमनवमांशेऽधिष्ठिते चन्द्रे चतुराद्यैश्चतुः प्रभृतिभिर्ग्रहैर्वीक्षितेऽवलोकिते वा अथवा लग्ने जन्मकालिकलग्ने वर्गोत्तमगते चतुःप्रभृतिभिर्ग्रहैर्निरीक्षिते नृपजन्म राज्ञो जन्म भवति । अन्यकुलोद्भूतोऽपि राजा भवतीत्यर्थः ।

उक्तञ्च सारावल्याम्—

गणोत्तमे लग्ननवांशकोद्गतो
निशाकरश्चापि गणोत्तमेऽथवा ।
चतुर्ग्रहैश्चन्द्रविवर्जितैस्तदा
निरीक्षितः स्यादधमोद्भवो नृपः ॥ इति ॥

तथा च—

वर्गोत्तमगते चन्द्रे लग्ने वा चन्द्रवर्जिते ।
चतुराद्यैर्ग्रहैर्दृष्टे जातो नरपतिर्भवेत् ॥ इति ॥

वर्गोत्तमगतः पूर्णचन्द्रो ग्रहैरनवलोकितोऽपि नृपजन्मप्रदो भवति । उक्तञ्च तत्रैव--

वर्गोत्तमे हिमकरः सकलः स्थितोंशे
कुर्यान्महीपतिमपूर्वयशोभिरामम् ।
यस्याऽश्ववृन्दखुरघातरजोभिभूतो
भानुः प्रभातशशिनोऽनुकरोति रूपम् ॥ इति ॥

नृपयोगे सति जन्मनि बलयुतदशायां बलयुक्तस्य ग्रहस्य दशान्तर्दशायां राज्यो राज्यप्राप्तिर्भवति । भगवता गार्गिणा 'दशमस्थग्रहदशायां लग्नस्थग्रहदशायां वा बलवतो ग्रहस्य दशायां वा राज्यलब्धिर्भवति । एवं नीचारिराशिगतस्य बलयुतस्य दशायां राजच्युतिः बलवर्जितस्य दशायां तन्मोक्षश्च स्यात्' इत्यभिहितम् । तद्वाक्यञ्च—

लग्नगः कर्मगो वा स्यादथवा प्रबलोपि यः ।
स स्यात्स्वान्तर्दशा काले राज्यदः प्रबलो यदा ॥

नीचारिगृहसंस्थस्य दशायां प्रबलस्य च ।
च्युतिर्बलविहीनस्य तन्मोक्षः परसंश्रयात् ॥ इति ॥ २६ ॥

यदि वर्गोत्तम नवमांश में चन्द्रमा अथवा लग्न पड़ा हो और उनको चार, पाँच इत्यादि ग्रह देखते हों तो वह बालक राजा होता है । इन सब राजयोगों के होने पर बलवान् ग्रह की दशान्तर्दशा

( या लग्न में बैठे ग्रह की वा दशम में स्थित ग्रह दशान्तर्दशा ) में राज्य की प्राप्ति होती है ॥ २६ ॥

प्रकीर्णाध्याये प्रकरणसंग्रहः ।

शशियोग-समागम-राशिशील-संदर्शनानि-भावाश्च ।
आश्रय-राज्यप्रभवाश्चाध्यायेऽस्मिन् क्रमेणोक्ताः॥२७॥

इति श्रीवराहमिहिरविरचिते लघुजातके
द्वादशोऽध्यायः ॥ १२ ॥

भट्टोत्पलः—अथ प्रकीर्णकाध्यायोक्तप्रकरणसंग्रहमाह इति। लघुजातकप्रकीर्णाध्याये ( १ ) अनफासुनफादुरुधराकेमद्रुमाख्या राशियोगाः । ( २ ) द्विग्रहादि योगाःप्रव्रज्यायोगाश्च समागमाः। (३)अस्थिरविभूतिमित्राद्यानि राशिशीलानि।(४)क्षेत्राधिपसंदृष्टइत्येवमाद्यानि संदर्शनानि । ( ५ ) पुष्णन्ति शुभा भावानित्येवमाद्या भावाः । ( ६ ) अंशकस्वरूपकुलतुल्याद्याश्च योगाः । ( ७ ) 'एकोपि नृपतिजन्मप्रद' इत्याद्या राजयोगाः । एतास्मिन्प्रकीर्णाध्याये क्रमेणोक्ताः ॥ २७ ॥

इति भट्टोत्पलविरचितायां लघुजातकटीकायां शिष्यहिताभिधानायां प्रकीर्णाध्यायो द्वादशः ॥ १२ ॥

वि० प्र०—अथास्मिन प्रकीर्णकाध्याये प्रकरणसंग्रहसङ्ख्यानमाह— **शशियोग इति** । अस्मिन् प्रकीर्णकाध्याये ( १ ) शशियोगा अनफासुनफादुरुधराकेमद्रुमाद्याः, (२) समागमा द्विग्रहादि प्रव्रज्यायोगान्तयोगाः, ( ३ ) राशिशीलानि अस्थिरविभूति प्रभृतीनि, ( ४ ) संदर्शनानि क्षेत्रपसंदृष्ट इत्यादीनि, ( ५ ) भावा 'पुष्णन्ति शुभा भावा' नित्यादीनि,

(६) आश्रययोगा अंशकस्वरूपकुलतुल्याद्याः, ( ७ ) राजयोगा एकोऽपि नृपतिजन्मपद इत्याद्या उक्ताः कथिताः ॥ २७ ॥

इत्याजमगढमण्डलान्तर्गतब्रह्मपुरग्रामाभिजनश्रीपं० धर्मदत्तद्विवेदिसूनु-ज्यौ० आ० विन्ध्येश्वरीप्रसादद्विवेदिकृतायां लघुजातकस्य बालबोधिनीटीकायां प्रकीर्णकाऽध्यायो द्वादशः समाप्तः ॥१२॥

इस प्रकीर्णकाध्याय में क्रम से (१) अनफासुनफाइत्यादि चन्द्रयोग, (२) समागम, (३) राशिशील, (४) दृष्टि, (५) भाव, (६) आश्रय (७) राज्ययोग ये सात प्रकरण कहे गये हैं ॥ २७ ॥

इति विन्ध्येश्वरीप्रसादद्विवेदिकृतायां लघुजातकस्य हिन्दी-टीकायां प्रकीर्णकाध्यायो द्वादशः समाप्तः॥१२॥

## अथ नाभसयोगाध्यायः ॥ १३ ॥

### तत्रादौ रज्जुमुशलानल ( आश्रमयोगाः )

चरभवनादिषु सर्वैराश्रयजा रज्जुमुशलनलयोगाः।
ईर्ष्युर्मानी धनवान् क्रमेण कुलविश्रुताः सर्वे ॥१॥

भट्टोत्पलः-अथ नाभसयोगाध्यायं व्याख्यास्यामः। तत्र नाभसयोगाश्चतुर्धा आश्रययोगो दलयोगौ आकृतियोगाः सांख्ययोगाश्च। तत्र आश्रययोगास्त्रयः, दलयोगौ द्वौ, आकृतियोगा विंशतिसंख्याः, संख्यायोगाः सप्त एवं द्वात्रिंशन्नाभसयोगाः। तत्राश्रययोगत्रयं तत्फलमाह। यदा सर्वे ग्रहाश्चरराशिगता भवंति, न केचित् स्थिरराशिषु द्विस्वभावेषु च भवंति तदा रज्जुनाम योगो भवति। यदा सर्वे ग्रहाः स्थिरराशिषु भवंति न

कश्चिच्चरराशौ द्विस्वभावराशौ वा भवंति तदा मुशलनामयोगो भवति । यदा सत्र ग्रहाः द्विस्वभावराशिषु भवंति न कश्चिच्चरराशौ न च स्थिरराशौ भवंति तदानलयोगः । एषां फलान्याह । रज्जुयोगे जात ईर्ष्युः परममत्सरी भवति । मुशले जातो मानी गर्वितो भवति । अनलाख्ये योगे जातो धनवान् भवति । क्रमेणैतानि फलानि कुलविश्रुताः । सर्वे आश्रययोगैः सर्वेर्जाताः कुलविश्रुताः कुलख्याताः । इत्याश्रययोगाः ॥ १ ॥

वि० प्र०—अथ नाभसयोगाऽध्यायो व्याख्यायते । तत्र नाभसयोगा आश्रय-दल-आकृति-सांख्यइतिभेदेन चतुर्धा । तत्राश्रययोगास्त्रयः, दलयोगा द्वौ,आकृतियोगा विंशतिः,संख्यायोगाः सप्त । एवं सर्वे मिलिता द्वात्रिंशद्योगा भवन्ति । यवनाचायमतेनाष्टादशशतसंख्यासमा नाभसयोगा भवन्ति। तेषु द्वात्रिंशद्योगा एवेहाऽऽचार्येण रचिताः ।उक्तञ्च सारावल्याम्—

'नौच्छत्रकूटकार्मुकशृङ्गाटकवज्रदामिनीपाशाः ।
वीणासरोजमुशला वापीहलधरसमुद्रचक्राणि ॥
माला सर्पार्धेन्दू यवकेदारौ गदाविहगयूपाः ।
युगशकटशूलदण्डा रज्जुः शक्तिस्तथाऽनलो गोलः ॥' इति ३२योगाः ।

तेष्वाश्रययोगाः—

आश्रयजातान्प्राहुर्मणिन्धाः मुसलरज्जुनलयोगान् ।

संख्यायोगाः—

गोलयुगशूलपाशा वीणाकेदारदामिनीसंज्ञाः ।
सप्तैते संख्यायाः पूर्वाचार्यैः समुद्दिष्टाः ॥

दलयोगौ—

द्वे चार्धयोगसंज्ञे भुजङ्गमाले पराशरेणोक्ते ।

आकृतियोगाः—

आकृतिजाता विंशतिरपरे कथिताश्च सावित्रैः ॥ इति ॥

तत्र रज्जुमुसलानला( १ )नाश्रययोगान् तत्फलानि चाह—

**चरभवनादिष्विति ।** चरभवनादिषु चर-स्थिर-द्विस्वभावेषु राशिषु सर्वैः सर्वग्रहैः क्रमेण व्यवस्थितैः रज्जु-मुसल-अनलयोगा आश्रयजा भवन्ति । (१)यदा चरराशिषु मेषकर्कतुलामकरेष्वेव एकस्मिन् चरराशौ, चरराशिद्वये चरराशित्रये चरराशिचतुष्टये वा सर्वे ग्रहा व्यवस्थिता न स्थिरेषु द्विस्वभावेषु च तदा रज्जुनामा योगः स्यात । (२) एवं यदा स्थिरेषु वृष-सिंह-वृश्चिक-कुम्भेष्वेव नान्येषु राशिषु समे ग्रहा गता भवन्ति तदा मुशलनामको योगो भवति । (३) यदा च सर्वे ग्रहा द्विस्वभावेषु मिथुनकन्याधनुर्धरमीनेष्वेव व्यवस्थितास्तदाऽनलाख्यो योगो भवति । क्रमेण रज्जु-मुसल-अनलेषु जाता ईर्ष्युर्मानी धनवान् भवति । रज्जु योगे जातो जातक ईर्ष्युः मत्सरयुक्तः, मुसलयोगे जातो मानी मानशीलोऽनल योगे समुद्भूतो धनवान् भवति । उक्तञ्च सारावल्याम्—

आश्रयजातान् वक्ष्ये यथामतं वृद्धगार्ग्यस्य ।
उभयस्थिरचरसंस्थैः सर्वैरनलमुसलरज्जवः क्रमशः ॥

अत्र चरराशिचतुष्केऽपि यदा सर्वे ग्रहास्तदा रज्जुः,एवं स्थिरेषु मुसलं, द्विस्वभावेष्वनल एवं न व्याख्येयम् । यत उक्तञ्च भगवता गार्गिणा—

एको द्वौ वा त्रयः सर्वे चरा युक्ता यदा ग्रहैः ।
चरयोगस्तदा रज्जुः शीर्ष्याणां जन्मदो भवेत् ॥
स्थिराश्चेन्मुसलं नाम मानिनां जन्मकृन्नृणाम् ।
द्विस्वभावे नलाख्यस्तु धनिनां परिकीर्तितः ॥ इति ॥

एतद्योगजातानां साधारण्येन फलमुक्तं ग्रन्थान्तरे—

आश्रययोगेजाता अमिश्रिते सौख्यलाभगुणयुक्ताः ।
अन्योन्यमिश्रिताश्चेद्विगतफलाः स्युस्तदा योगाः ॥ इति ॥१॥

**सब ग्रह चर ( मेष, कर्क, तुला, मकर ) राशि में ही पड़े हों तो रज्जु नामक योग होता है। सब सूर्यादिग्रह स्थिर ( वृष, सिंह, वृश्चिक, कुम्भ ) राशि में स्थित हों तो मुसल नामक योग होता है। एवं द्विस्वभाव ( मिथुन, कन्या, धनुर्धर, मीन ) राशियों में ही**

सब ग्रह बैठे हों तो अनलनामक योग होता है। रज्जुयोग में उत्पन्न बालक ईर्ष्या करने वाला ( दूसरे के अभ्युदय को देख के जलने वाला ), मुसलयोग में पैदा हुआ बालक अभिमानी और अनल योग में समुद्भूत जातक धनवान् होता है। ये सब अपने २ कुलों में प्रसिद्ध होते हैं ॥ १ ॥

### अहिमालायोगौ (दलयोगौ२)

**केन्द्रत्रयगैः पापैः शुभैर्दलाख्यावहिश्च माला च ।**
**सर्पेऽतिदुःखितानां मालायां जन्म सुखिनां च ॥२॥**

**भट्टोत्पलः**—अथ दलयोगौ तयोर्जातस्य स्वरूपमाह । येषु केषु त्रिषु केंद्रेषु च यदा त्रयः पापग्रहा अर्कारसौरा भवन्ति न चैकस्मिन्नपि केंद्रे सौम्यग्रहो भवति तदा सर्पो नाम दलयोगः। यदा येषु केंद्रेषु सौम्यग्रहा बुधगुरुशुक्रा भवन्ति न कश्चित्केंद्रे पापग्रहो भवति तदा मालानाम योगो भवति । तत्र योगद्वये चन्द्रमा न ग्राह्यः । फलमाह सर्पेति । सर्पयोगे दुःखितानां जन्म भवति । मालायोगे सुखिनां जन्म भवति । इति दलयोगौ ॥ २ ॥

वि० प्र०—अथ ( २ ) दलयोगौ तयोः फलानि चाह—**केन्द्रत्रयगैरिति** । केन्द्रत्रयगैः पापैः शुभैश्च यथाक्रममहिर्माला च दलाख्यौ द्वौ योगौ भवतः । (१) येषु तेषु त्रिषु केन्द्रेषु यदा पापाः पापग्रहाः सूर्यारशनयो भवन्ति न कस्मिंश्चित्केन्द्रे सौम्यास्तदाऽहिर्नाम दलाख्यो योगः । (२) एवं यदा त्रिषु केन्द्रेषु शुभाः बुधबृहस्पतिशुक्रा व्यवस्थिता न कस्मिंश्चित्केन्द्रे पापास्तदा मालाख्यो दलयोगो भवति । सर्पे सर्पनामके योगेऽतिदुःखितानां मालायां सुखिनां जन्म भवति । सामान्यतो दलयोगोद्भवानां फलमुक्तं सारावल्याम्—

क्वचित्स्वभाग्यैः क्वचिदेवमेवं क्वचित्परा भूपतितः फलञ्च ।
क्वचित्सुखं दुःखमतीव कष्टं समाश्रयोग पुरुषो लभेत ॥ इति ।

अत्र गद्वयेपि चन्द्रमा योगकारको न भवति । उक्तञ्च—
केन्द्रेष्वपापेषु सितज्ञजीवैः केन्द्रत्रिसंस्थैः कथयन्ति मालाम् ।
सर्पस्त्वसौम्यैश्च यमारसूर्यैर्योगाविमौ द्वौ कथितौ दलाख्यौ॥इति॥२॥

किसी तीन केन्द्र में पापग्रह स्थित हो (शुभग्रह न पड़े हों) तो सर्प नामक दल योग होता है। यदि तीन केन्द्र में शुभग्रह पड़े हों (पापग्रह न स्थित हो) तो माला नामक योग होता है। इन योगों का कर्ता चन्द्रमा नहीं होता। सर्प योग में बालक का जन्म हो तो दुःखी, माला योग में बालक का जन्म हो तो सुखी होता है ॥ २ ॥

## गदादियोगाः फलानि च ( आकृतियोगाः ३ )

द्विरनन्तरकेन्द्रस्थैर्गदा विलग्नास्तसंस्थितैः शकटम् ।
खचतुर्थयोर्विहङ्गः शृङ्गाटकमुदयसुतनवगैः ॥ ३ ॥
शृङ्गाटकतोऽन्यगतैर्हलमेतेषां क्रमात्फलोपनयः ।
यज्वा शकटाजीवी दूतश्चिरसौख्यभाक्कृषिकृत् ॥ ४ ॥

भट्टोत्पलः—अथाकृतियोगाः । तत्र गदाशकटविहंगशृंगाटकानां लक्षणं तत्फलोपनयं चाह । द्विरनंतरेतिद्वयोः केंद्रयो यदा सर्वे ग्रहा भवंति तदा गदायोगो भवति स चतुर्धा । लग्नचतुर्थस्थैरेकः, चतुर्थसप्तमस्थैर्द्वितीयः,सप्तमदशमस्थैस्तृतीयः,दशमलग्नस्थैश्चतुर्थः । विलग्नास्तसंस्थितैः शकटमिति । लग्ने सप्तमे च स्थाने यदा सर्वे ग्रहा भवंति तदा शकटाख्ययोगः। खचतुर्थयोर्विहंगः, दशमचतुर्थयोर्यदा सर्वे ग्रहा भवंति तदा विहंगयोगः । शृंगाटकमिति । लग्ने पंचमे नवमे च यदा सर्वे ग्रहा भवन्ति तदा शृंगाटको योगः। शृङ्गाटकमिति । लग्नं वर्जयित्वा यदान्यत्र स्थानत्रये परस्परं त्रिकोणगता ग्रहा भवन्ति तदा हलाख्ययोगः । स च त्रिधा । द्वितीयषष्ठदशमस्थैरेकः, तृतीयसप्तमैकादशस्थैर्द्वि-

तीयः, चतुर्थाष्टमद्वादशगैस्तृतीयः। अथास्य योगपंचकस्य क्रमात्फलोपनयः। गदायोगे जातो यज्वा भवति। शकटयोगे शकटाजीवी, विहङ्गयोगे दूतः, शृंगाटके चिरसौख्यभाक्, हलाख्ये कृषिकृत् ॥ ३-४ ॥

वि०प्र०—अथा (३) कृतियोगानाह। तत्र गदाशकटविहङ्गशृङ्गाटकहलानां लक्षणानि तत्फलानि चार्याभ्यामाह—द्विरिति। द्विरनन्तरकेन्द्रस्थैरासन्नकेन्द्रद्वयस्थैः सर्वैर्ग्रहैर्गदानामको योगो भवति। स चतुर्विधः लग्न-चतुर्थयोः सर्वे ग्रहाः स्थितास्तदेकः, चतुर्थ-सप्तमयोः सर्वे ग्रहा गतास्तदा द्वितीयः, सप्तम-दशमस्थानयोः समे ग्रहा व्यवस्थितास्तदा तृतीयः, दशम-लग्नयोः सर्वे ग्रहाः समवस्थितास्तदा चतुर्थः। (२) विलग्नास्तसंस्थितैर्जन्मलग्न-सप्तमस्थानयोर्व्यवस्थितैः सर्वग्रहैः शकटम् शकटनामा योगो भवति। (३) खचतुर्थयोर्विहगः दशम-चतुर्थस्थानयोर्गतैः सर्वग्रहैर्विहङ्गो विहङ्गनामको योगो भवति। (४) उदयसुत-नवगैर्लग्न-पञ्चम-नवमस्थानेषु संप्राप्तैः सर्वग्रहैः शृङ्गाटकं शृङ्गाटकनामा योगो भवति। (५) एवं शृंगाटकतोऽन्यगतैः जन्मलग्नात्परस्परं त्रिकोणगतैर्ग्रहैः शृंगाटकयोगो भवति तमहायान्यत्रिकोणेषु व्यवस्थितेषु सर्वग्रहेषु हलयोगो भवति। स च त्रिविधः। द्वितीय-षष्ठ-दशमगतैरेकः, तृतीयसप्तमैकादशगतैर्द्वितीयः, चतुर्थाष्टमद्वादशस्थैस्तृतीयः। स्फुटमुक्तं सर्वं ज्ञानमुक्तावल्याम्—

लग्नाम्बुगैरम्बुनगस्थितैर्वा सप्ताम्बरैरम्बरलग्नसंस्थैः।
एकं चतुर्धा कथितो गदाख्यः शुभाशुभैः खेचरकैस्तु सर्वैः।
लग्नास्तगैस्तु शकटो विहगः सुखकर्मगैः।
लग्नपञ्चमनन्दस्थैः खगैः शृङ्गाटकं स्मृतम् ॥
द्वितीयषष्ठकर्मस्थैस्त्रिसप्तायगतैः खगैः।
बन्धुनैधनरिष्फस्थैस्त्रिधा तु हलसंज्ञकः ॥ इति।

**अथैषां क्रमेण फलानि ।** यज्वा-शकटाजीवी-दूतश्चिरसौख्यभाक्कृषिकृदिति । गदायोगे जातःपुरुषो यज्वा 'विधिना सोमेन यजेते'तियागविधायकविधिमात्रेण यागकर्ता भवति । "यज्वा तु विधिनेष्टवानि" त्यमरः । शकटयोगे जातः पुरुषः शकटाजीवी शकटवृत्या जीवतीत्यर्थः । विहगयोगे जातो नरः दूतः परसन्देशप्रापणको भवति "स्यात्संदेशहरो दूत" इत्यमरः । शृङ्गाटकयोगे समुत्पन्नो बालकश्चिरेण बहुकालेनान्ते वयसी त्यर्थः, स्वौख्यभाक्सुखी भवति । अत्र चिरकालपर्यन्तं सुखी भवतीति न व्याख्येयम् । यत उक्तं भवता गार्गिणा—

लग्नपञ्चमधर्मस्थैर्योगः श्रृङ्गाटको मतः ।
वयोन्ते सुखितां जन्म तत्र स्यात्स्वादुभाषिणाम् ॥इति ।

हलयोगे समुद्भूतो जातकः कृषिकर्मकृत् कृषको भवतीति॥ ३–४॥

(१) किसी समीप के दो केन्द्रों में सब ग्रह पड़े हों तो गदा योग होता है । जैसा(१) लग्न और चतुर्थ;(२)चतुर्थ और सप्तम,(३)सप्तम और दशम, (४) दशम और लग्न। (२) यदि लग्न और सप्तम स्थान में सब के सब ग्रह व्यवस्थित हो तो शकट नाम का योग होता है। (३)दशम और चतुर्थ स्थान में सब ग्रह पड़े हों तो विहग योगहोता है। (४) लग्न–पञ्चम और नवम स्थान में ( लग्न से तीनों त्रिकोणों में ) सब शुभाऽशुभ ग्रह बैठे हों तो श्रृङ्गाटक नामक योग होता है।(५) अन्य (लग्नको छोड़ कर) तीनों त्रिकोणों (क) द्वितीय, षष्ठ, दशम, (ख) तृतीय, सप्तम, एकादश (ग) चतुर्थ, अष्टम, द्वादश में सबग्रह हों तो हलनाम का योग होता है। क्रम से इन पाँचों योगों में उत्पन्न जातक का स्वरूप जानना। (१) गदायोग में उत्पन्न बालक विधिसे यज्ञकरने वाला,(२) शकट योग में पैदा हुआ बालक शकट ( गाडी ) से जीविका करने वाला, (३) विहगयोग में उत्पन्न जातक दूत ( दूसरे का सन्देशा पहुँचाने वाला), (४) श्रृंगाटक योग में जन्मा हुआ लड़का बहुत दिनों तक सुख भोगने वाला और (५) हलयोग में उत्पन्न मनुष्य कृषि(खेतीवारी)करने वालाहोता है॥३–४॥

वज्रादियोगाः ।

क्रूरैः सुखकर्मस्थैः सौम्यैरुदयास्तसंस्थितैर्वज्रम् ।
यव इति तद्विपरीतैर्मिश्रैः कमलं च्युतैर्वापी ॥ ५ ॥
लग्नादिकण्टकेभ्यश्चतुर्गृहावस्थितैर्ग्रहैर्योगाः ।
यूपेषुशक्तिदण्डा वज्रादीनां फलान्यस्मात् ॥ ६॥

भट्टोत्पलः—अथ वज्रयवकमलवापीयूपशरशक्तिदण्डयोगानां लक्षणं फलानि चाह । क्रूरैरिति चतुर्थदशमस्थैः सर्वैः पापग्रहैः लग्नसप्तमस्थैश्च सौम्यग्रहैर्वज्रयोगः । वज्रविपरीतस्थैर्यवः । एतदुक्तं । चतुर्थदशमयोर्यदा सर्वे सौम्यग्रहा भवन्ति लग्नसप्तमगाश्च पापा भवन्ति तदा यवाख्यो योगः। मिश्रैः कमलमिति । वज्रयोगोक्तस्थानं विना सर्वे एव ग्रहाः यदा चतुर्षु केंद्रेषु भवन्ति तदा कमलयोगः । च्युतैर्वापीति । एवं केंद्रच्युतैः सर्वैरेव ग्रहै र्वापीयोगः । स च द्विधा । द्वितीयपंचाष्टमैकादशमस्थाः सर्वे भवंति तदैकः । यदि तृतीयषष्ठनवमद्वादशस्थाः सर्वे ग्रहास्तदा द्वितीयः।।लग्नादिकेंद्रमादितः कृत्वा चतुर्गृहेषु यदा सर्वे ग्रहाः भवंति तदा यूपेषुशक्तिदंडाख्ययोगा भवंति। तद्यथा—लग्नद्वितीयतृतीयचतुर्थस्थैः सर्वग्रहैर्यूपाख्यो योगः । चतुर्थपंचमषष्ठसप्तमस्थैरिषुः, सप्तमाष्टमनवमदशमस्थैः शक्तिः, दशमैकादशद्वादशलग्नस्थैर्दण्डः इति ॥५-६॥

वि० प्र०—अथ वज्र-यव-कमल-वापी-यूप-शर-शक्ति-दण्डयोगानां लक्षणान्यार्याभ्यामाह—**क्रूरैरिति** । क्रूरैः पापग्रहैः सूर्यारसौरः सुखकर्मस्थैश्चतुर्थदशमस्थानगतैः, सौम्यैः शुभग्रहैर्बुधबृहस्पतिशुक्रैरुदयास्तसंस्थैर्लग्नसप्तमस्थानस्थितैस्तदा वज्रं वज्रनामको योगो भवति ।.तद्विपरीतैर्वज्रोक्तविपरीतैर्यव इति । यदा सर्वे पापाः लग्न—सप्तमस्थानगताः शुभाश्च चतुर्थदशमभावगतास्तदा यवनामको योगो भवति । मिश्रैः

कमलं चतुर्षु केन्द्रेषु शुभैः पापैश्च व्यवस्थितैः कमलनामको योगो भवति । च्युतैश्चतुःकेन्द्रेभ्यश्च्युतैः सर्वैर्ग्रहैर्वापी । यदा सर्वे ग्रहाः केन्द्रं हित्वाऽन्यत्र पणफरे आपोक्लिमे वा स्थितास्तदा वापीनामा योगो भवति । यद्यपि वापीयोगस्य प्रकारत्रयं भवितुमर्हति तथापि प्रकारद्वयमेव पूर्वैरुक्तम् । यदा पणफरेषु सर्वे शुभाः पापाश्च तदैकः, यदाऽऽपोक्लिमे सर्वे शुभाः पापाश्च ग्रहास्तदा द्वितीयः । उक्तञ्च ज्ञानमुक्तावल्याम्—

विलग्नास्ते शुभाः सर्वे खबन्धोः पापखेचराः ।
वज्रनाम विजानीयात्तद्व्यस्तैर्यवसंज्ञकः ॥
मिश्राः पापाः शुभाः सर्वे चतुःकेन्द्रेऽथ पद्मकम् ।
तैरेवाऽऽपोक्लिमस्थैर्वा पणफरेपि च वापिका ॥ इति ॥

अत्र वराहमिहिराचार्येण बृहज्जातके—

'पूर्वशास्त्राऽनुसारेण मया वज्रादयः कृताः ।
चतुर्थभवने सूर्याज्ज्ञसितौ भवतः कथम् ॥'

इत्यनेन पूर्वाचार्योपर्याक्षेपः कृतस्तत्स्वदेशीयोदयप्रमाणाभिप्रायेण बोध्यम् । द्वादशांगुलाधिकपलभादेशे तु रवेर्बुधशुक्रयोश्चतुर्थभावगतत्वं सम्भवतीति धीरैश्चिन्त्यम् । **लग्नादिति** । लग्नादिकण्टकेभ्यः लग्न-चतुर्थसप्तमदशमेभ्यश्चतुर्गृहाऽवस्थितैर्ग्रहैः सर्वैःक्रमेण यूपेषुशक्तिदण्डा-श्चत्वारो योगा भवन्ति । तद्यथा—लग्नाच्चतुर्षु स्थानेषु लग्नद्वितीयतृतीय-चतुर्थेष्वेव यदा सर्वे ग्रहा समवस्थितास्तदा यूपनामको योगो भवति । एवं चतुर्थपञ्चमषष्ठसप्तमेषु चतुर्षु स्थानेषु यदा समे ग्रहा व्यवस्थिता भवन्ति तदेषुनामको योगो भवति । तथा सप्तमाष्टमनवमदशमेषु चतुर्षु सर्वे ग्रहा गता भवन्ति तदा शक्तिनामको योगः स्यात् । यदा च दशमैका-दशद्वादशलग्नेषु चतुर्षु भावेषु गता सर्वे ग्रहा भवन्ति तदा दण्डाख्यो योगो भवति । उक्तञ्च ज्ञानमुक्तावल्याम्—

एकद्वित्रिचतुर्थस्थैः सर्वखेटैस्तु यूपकम् ।
तुर्यादिसप्तमान्तस्थैरेवं बाणः प्रजायते ॥

सप्ताष्टनन्दकर्मस्थैः खगैः शक्तिरिति स्मृतः ।
दशादिलग्नपर्यन्तैः सर्वैर्दण्डाभिधानकः ॥ इति ॥ ५–६ ॥

( १ ) चतुर्थ और दशम स्थान में सब पापग्रह तथा लग्न और सप्तम स्थान में सब शुभग्रह पड़े हो तो वज्रनामक योग होता है। (२) इससे विपरीत (उलटा) अर्थात् चतुर्थ और दशम स्थान में सब शुभग्रह तथा लग्न और सप्तम स्थान में सब पापग्रह स्थित हों तो यव नामक योग होता है। (३) चारों केन्द्रों में सब ग्रह (शुभ ग्रह और पापग्रह ) पड़े हो तो कमलनामा योग होता है। (४) और किसी केन्द्र में भी कोई ( पाप या शुभ ) ग्रह न पड़े हों तो वापी योग होता है। वापीयोग दो प्रकार का है (क) पणफर में सब ( शुभ पाप ) ग्रह पड़े हो, (ख) अथवा आपोक्लिम में सब शुभाशुभ ग्रह व्यवस्थित हो तो वापी योग जानना । ( ५ ) लग्न से चार स्थानों ( लग्न, द्वितीय, तृतीय, चतुर्थ ) में सब ग्रह पड़े हों तो यूप योग, (६) चतुर्थ से चार स्थानों चतुर्थ, पञ्चम, षष्ठ, सप्तम ) में सब ग्रह स्थित हों तो इषु नामक योग, ( ७ ) सप्तम से चार स्थानों ( सप्तम, अष्टम, नवम, दशम ) में सब ग्रह दिखाई पड़े तो शक्ति नाम का योग और (८) दशम स्थान से चार ( दशम, एकादश, द्वादश, लग्न ) इन स्थानों में सब ग्रह बैठे हों तो दण्डनाम का योग होता है। आगे इनका फल क्रमसे जानना ॥ ५–६ ॥

### वज्रादियोगानां फलम् ।

आद्यन्तयोःसुखयुतःसुखभाङ्मध्ये धनान्वितोऽल्पसुखः।
त्यागी हिंस्रो धनवर्जितः पुमान् प्रियैर्वियुक्तश्च॥७॥

भट्टोत्पलः—वज्रादीनां योगानां फलानि वक्ष्यमाणानि बाल्ये सुखी यौवने दुःखितो वार्धके पुनः सुखी एवंविधो वज्रयोगे जातो

भवति। बाल्ये वार्द्धक्ये च दुःखितः यौवने सुखी एवंविधो यवाख्ये योगे जातो भवति।धनान्वितःकमलाख्ये योगे जातो भवति ।वापी संज्ञके अल्पसुखी भवति । यूपाख्ये जातस्त्यागी भवति । इषुयोगे जातो हिंस्रो घातुको भवति । शक्तियोगे जातो धनवर्जितो भवति । दंडाख्ये योगे जातः प्रियैः पुत्रादिभिर्वियुक्तो भवति॥७॥

वि० प्र०—अथ वज्राद्यष्टसु योगेषु जातानां क्रमशः फलान्याह—**आद्यन्तयोरिति** । वज्रयोगे उत्पन्नो बालक आद्यन्तयोः सुखयुतः आद्ये अन्त्ये च वयसि बाल्ये वृद्धत्वेचेत्यर्थः, सुखयुतो मध्ये वयसि यौवने दुःखी भवति । यवयोगे जातो बालः मध्ये यौवने वयसि सुखभाग्भवति, बाल्ये वृद्धत्वे च दुःखी भवतीत्यर्थः । कमलयोगे जातः पुरुषः धनान्वितः धनी भवति । वापीयोगे उत्पन्नो बालकोऽल्पसुखोभवति । यूपयोगे जातो बालकस्त्यागी त्यागो दानं तच्छीलः 'त्यागो विहापितं दान' मित्यमरः । दानशीलो भवति । इषु(बाण)योगे जातः बालको हिंस्रो घातुकोः भवति । 'शरारुर्घातुको हिंस्र' इत्यमरः । शक्तियोगे जातो धनवर्जितो दरिद्रो भवति । दण्डयोगे जातः पुमान् प्रियैः स्त्रीपुत्रादिभिर्वियुक्तः पुत्रकलत्ररहितः स्यात् ॥ ७ ॥

(१) वज्र योग में उत्पन्न बालक बाल्यवास्था और वृद्धावस्था में सुखी और जवानी में दुःखी होता है। (२) यव योग में पैदाइस पाने वाला बालक जवानी में सुखी और बाल्यावस्था और वृद्धा· वस्था में दुःखी होता है। (३) कमल योग मेंउत्पन्न बालक धनी, (४) वापी योग में जन्म ग्रहण करने वाला बालक कम सुख पाने वाला, (५) यूप योग में जन्म पाने वाला त्यागी ( मुक्त हस्त से दान करने वाला),(६)इषु (बाण नामक) योग में उत्पन्न जातक हिंसा करने वाला, (७) शक्ति नामा योग में पैदा हुआ मनुष्य दरिद्र, (८) और दण्ड योग में उत्पन्न जातक स्त्रीपुत्रादि प्रियपरिवारों से रहित होता है॥७॥

नौकादिसमुद्रान्तयोगाः ।

**तद्वत्सप्तर्क्षस्थैर्नौकूटच्छत्रकार्मुकाणि स्युः ।**
**नावाद्यैरप्येवं कण्टकान्यस्थैः स्मृतोऽर्धशशी ॥ ८ ॥**
**एकान्तरैर्विलग्नात्षड्भवनावस्थितैर्ग्रहैश्चक्रम् ।**
**अर्थाच्च तद्वदुदधिर्नौप्रभृतीनां फलानि सर्वेषाम् ॥९॥**

भट्टोत्पलः-अथ नौकूटच्छत्रकार्मुकार्धचंद्राणां लक्षणमाह । तद्वत्सप्तर्क्षस्थैरित्यादि । एकस्मात्केंद्रादारभ्य सप्तभिर्ग्रहैः सप्तमर्क्षस्थैश्च चत्वारो नौकूटच्छत्रकार्मुकाख्या योगा भवंति । लग्नद्वितीयतृतीयचतुर्थपंचमपष्ठसप्तमगैः सर्वग्रहैर्नौकाख्यः । चतुर्थादिदशमांतस्थैकूटाख्यः ।सप्तमादिलग्नान्तस्थैश्छत्राख्यः ।दशमादिचतुर्थान्तस्थैश्चापाख्यः। नावाद्यैरिति । नावाद्यैर्योगैःकंटकान्यसंस्थैर्यदा पणफरापोक्लिमादिषु वा सप्तभिर्निरंतरगैतरर्धचन्द्राख्यो योगो भवति ।सचाऽष्टधा तद्यथा द्वितीयाद्यष्टमांतेष्वेकस्तृतीयादिनवमांतेषु द्वितीयः । पंचमाद्येकादशांतेषु तृतीयः । षष्ठादिद्वादशांतेषु चतुर्थः । अष्टमादिद्वितीयांतेषु पंचमः । नवमादितृतीयांतेषु षष्ठः । एकादशादिपंचमांतेषु सप्तमः। द्वादशादिषष्ठांतेषु अष्टमः॥अथ चक्रसमुद्रयोगयोर्लक्षणमाह । लग्नादारभ्यैकांतरावस्थितैर्ग्रहैः षट्सु चक्राख्यो योगो भवति । तद्यथा-लग्नतृतीयपंचमसप्तमनवमैकादशेषु षट्सु यदा सर्वे ग्रहा भवंति तदा चक्राख्यो योगः अर्थात्द्वितीयादारभ्यैकांतरावस्थितैः सप्तभिर्ग्रहैः षट्सु उदधिर्नाम योगो भवति । तद्यथा द्वितीयचतुर्थपडष्टदशमद्वादशेषु षट्सु ग्रहेषु यदा सप्त ग्रहा भवंति तदा उदधियोगो भवति ॥ ८-९ ॥

वि० प्र०-अथ नौकाकूटच्छत्रकार्मुकार्धचन्द्रचक्रसमुद्राणां सप्तयोगानां लक्षणान्यार्याभ्यामाह—**तद्वदिति** । तद्वत्तेनैव प्रकारेण यथा

लग्नादिकेन्द्रेभ्यश्चतुर्षु स्थानेषु गतेषु सर्वग्रहेषु सत्सु यूपादियोगा उक्ताः, तथैव लग्नादिकण्टकेभ्यः सप्तस्थैः सर्वग्रहैर्नौकूटच्छत्रकार्मुकाणि यथाक्रमं स्युः । तथा हि—लग्नद्वितीयतृतीयचतुर्थपञ्चमषष्ठसप्तमेषु सर्वे ग्रहा व्यवस्थितास्तदा नौकायोगो भवति । चतुर्थपञ्चमषष्ठसप्तमाष्टमनवमदशमेषु समे ग्रहा गता भवन्ति तदा कूट योगो भवति । सप्तमाष्टमनवमदशमैकादशद्वादशलग्नेषु भावेषु सर्वे खगाः स्थिता भवन्ति तदा च्छत्रयोगः स्यात् । एवं दशमैकादशद्वादशलग्नद्वितीयतृतीयचतुर्थेषु सर्वे शुभाः पापाश्च ग्रहा समवस्थितास्तदा कार्मुकनामको योगः स्यात् । उक्तञ्च ज्ञानमुक्तावल्याम्—

लग्नादिसप्तमान्तस्थैः सर्वखेटैस्तुनौरिति ।
तुर्यादिदशमान्तस्थैः कूट इत्यभिधीयते ॥
सप्तमादिविलग्नान्तैश्छत्रः सकलखेचरैः ।
एवं दशादितुर्यान्तैश्चाप इत्युच्यते बुधैः ॥ इति ।

एवं कण्टकान्यस्थैर्नावाद्यैः केन्द्रभिन्नस्थानेभ्यः पणफरापोक्लिमेभ्यो नावाद्यैर्योगैरर्धशशीनामको योगः स्मृतः । स चाष्टविधः । द्वितीयाद्यष्टमान्तेषु सर्वे ग्रहा व्यवस्थितास्तदैकः । तृतीयादिनवमान्तेषु सर्वे ग्रहा गता भवन्ति तदा द्वितीयः । एवं पञ्चमाद्येकादशान्तेषु तृतीयः । षष्ठादिद्वादशान्तेषु चतुर्थः । अष्टमादिद्वितीयान्तेषु पञ्चमः । नवमादितृतीयान्तेषु षष्ठः । एकादशादिपञ्चमान्तेषु सप्तमः । द्वादशादिषष्ठान्तेषु अष्टमः । उक्तञ्च—

परस्परं द्वयादष्टौ तृतीयान्नवमान्तकम् ।
पञ्चमैकादशः षष्ठाद्द्वादशं त्वष्टधा शशी ॥ इति ।

त्रिलग्नादेकान्तरैः षड्भवनावस्थितैर्ग्रहैः चक्रं चक्रनामको योगो भवति । यदा लग्नतृतीयपञ्चमसप्तमनवमैकादशेषु षट्सु स्थानेष्वेव सर्वे ग्रहा व्यवस्थितास्तदा चक्रनामा योगः स्यात् । अर्थाच्च तद्वदन्यस्थानेषु द्वितीयादारभ्यैकान्तरितेषु षट्सु स्थानेषु द्वितीयचतुर्थषष्ठाष्टमदशम-

द्वादशेषु समे ग्रहा गता भवन्ति तदोदधिः समुद्रयोगो भवति । कथितञ्च ग्रन्थान्तरे—

लग्नत्रिपञ्चसप्तमनवमैकादशे स्थितैः ।
सर्वैश्चक्रं द्वितीयादावेवं योगः समुद्रकः ॥ इति ।

अथ नौप्रभृतीनां नौकादियोगानां सप्तानां फलानि वक्ष्यमाणानि क्रमाद्बोध्यानि ॥ ८-९ ॥

( १ ) लग्न से लगातार सात ( १।२।३।४।५।६।७ ) स्थानों में एक एक ग्रह बैठे हों तो नौका योग, (२) चतुर्थ से लगातार सात (४।५।६। ७।८।९।१० ) स्थानों में यदि एक एक ग्रह पड़े हों तो कूटनाम का योग, (३) सातवें स्थान से लगातार सात( ७।८।९।१०।११।१२।१) स्थानों में सबके सब ग्रह एक एक स्थान में व्यवस्थित हों तो छत्र नामा योग (४) और दशवें स्थान से लेकर लगातार ( १०।११।१२। १।२।३।४ ) चतुर्थस्थान तक एक एक स्थानमें एक एक ग्रह पड़े हो तो कार्मुक योग होता है। (५) एवं पणफर के चारों स्थानों से तथा आपोक्लिम के चारों स्थानों से सात स्थानों में यदि सब ग्रह हों तो अर्धशशी नामक योग होता है। इसके ८ भेद होते हैं। (क) द्वितीय से अष्टम स्थान तक, (ख) तृतीय से नवम स्थान तक, (ग) पञ्चम स्थान से एकादश स्थान तक, (घ) षष्ठस्थान से द्वादश स्थान तक, (ङ) अष्टमस्थान से द्वितीय स्थान तक, [ च ] नवम स्थान से तृतीय स्थान तक,(छ) एकादश स्थान से पञ्चम स्थान तक, ( ज ) और द्वादश स्थान से छठवें स्थान तक। (६) लग्न से लेकर एकएक स्थान छोड़ कर यदि छ स्थानों में अर्थात् लग्न, तृतीय, पञ्चम, सप्तम,नवम,एकादश इन छ स्थानों में सब ग्रह समवस्थित हों तो चक्र नामक योग होता है। (७) शेष स्थानों ( द्वितीय, चतुर्थ, षष्ठ, अष्टम, दशम, द्वादश ) में यदि सब ग्रह पड़े हो तो उदधि ( समुद्र ) योग होता है। नौकादि सब योगों का फल क्रम से आगे जानना ॥ ८-९ ॥

## नौकादियोगफलम् ।

**कीर्त्यायुक्तोऽनृतवाक्स्वजनहितः शूरसुभगधनिभूपाः।**
**इत्याकृतिजा योगा विंशतिरात्मगुणैस्तेषु नन्दन्ते १०**

भट्टोत्पलः—नौप्रभृतीनां सप्तानां फलान्याह । नौयोगे जातः कीर्त्या युक्तो भवति । कूटयोगे जातोऽनृतवाक् असत्यभाषी भवति । छत्रयोगे जातः स्वजनहितो भवति । कार्मुकयोगे जातः शूरो भवति । अर्धचंद्रे जात सुभगो भवति । चक्रयोगे जातो धनी भवति । समुद्रयोगे जातो राजा भवति । आकृतियोगोपसंहारार्थमाह । आकृतियोगा विंशतिः प्रोक्ताः । एषामन्यतमेन जाता आत्मगुणैर्नन्दंते स्वबाह्वर्जितश्रियो भवंतीत्यर्थः॥१०॥

वि० प्र०—अथ नौकादिसप्तयोगानां फलान्याह—कीर्त्येति । नौकायोगे जातो बालकः कीर्त्या यशसा युक्तो भवति । कूटयोगे जातोऽनृतवागसत्यवक्ता भवति । छत्रयोगे जातः स्वजनहितः स्वजनानां स्त्रीपुत्रमातृपितृपितृव्यादीनां हितः हितकरः स्यात् । कार्मुकयोगे जातः शूरो युद्धे वीरो भवति । 'शूरो वीरश्च विक्रान्त' इत्यमरः । अर्धशशी योगे उत्पन्नो बालकः सुभगः 'भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु । माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षेऽथ ना रवा' इत्यादिसम्पन्नः । चक्रयोगे जातः धनवान् भवति। समुद्रयोगे उत्पन्नः शिशुः भूपो राजा भवति । इति विंशतिराकृतिजा योगाः । तेषु जाता पुमांस आत्मगुणैः स्वाधीनवृत्तिभिर्नन्दन्ते एषु जाताः स्वाधीनवृत्तयो भवन्तीत्यर्थः । उक्तञ्च सारावल्यां कल्याणवर्मणा—

> नन्दन्ति स्वैर्भाग्यैर्नृपलब्धधना नृपप्रियाः ख्याताः ।
> प्रायेण सौख्ययुक्ताश्चाकृतियोगेषु ये जाताः ॥ इति ॥ १० ॥

**( १ ) नौका योग में उत्पन्न बालक कीर्तियुक्त; (२) कूट नामक योग में उत्पन्न मनुष्य झूठ बोलने वाला ; (३) छत्र योग में पैदा बालक अपनी स्त्री, पुत्र, भाई, बन्धु इत्यादि आत्मीयजनों का हित**

करने वाला; (४) कार्मुक नामक योग में उत्पन्न जातक शूरवीर; (५)अर्धशशी नामा योग में जन्मा हुआ जातक सुन्दर स्वरूप वाला; (६) चक्रयोग में पैदा हुआ लड़का धनवान्; (७) और समुद्रयोग में जायमान जातक राजा होता है। ये २० आकृति नाम के योग होते हैं। इन योगों में उत्पन्न बालक अपने २ योगों के गुणों से युक्त हो आनन्द अर्थात् अपने बाहु बल से पैदा की हुई लक्ष्मी का भोग करते हैं॥ १०॥

### गोलादिसप्तसाङ्ख्ययोगाः।

**एकादिगृहोपगतैरुक्तान् योगान्विहाय सङ्ख्याने।**
**गोलयुगशूलकेदारपाशदामाख्यवीणाः स्युः ॥ ११ ॥**

भट्टोत्पलः—अथ सप्तसांख्ययोगानाह । एकादिगृहोपगतैरित्यादि । उक्तयोगान् रज्जुमुशलादिसमुद्रांतान्योगान् वर्जयित्वा यदैकस्मिन् राशौ सर्वे ग्रहा भवंति तदा गोलाख्यो योगो भवति। यदा राशिद्वये तदा युगाख्यः,यदा राशित्रये यदा शूलाख्यः, यदा राशिचतुष्के तदा केदाराख्यः, यदा राशिपंचके तदा पाशाख्यः, यदा राशिषट्के तदा दामाख्यः। यदा राशिसप्तके तदा वीणायोगो भवति॥ ११॥

वि० प्र०—अथ गोलादयः सप्त संख्यायोगानाह-एकादीति। एकादिगृहोपगतैःसर्वग्रहैरुक्तान्योगानाश्रयजान्विहाय संख्याने संख्यानसंज्ञके गोलयुगशूलकेदारपाशदामाख्यवीणाभिधाः सप्त योगा भवन्ति। यद्युक्ताश्रययोगानां मध्यात्कस्यचिदाश्रययोगेन सह कस्यचित्संख्यायोगस्यसाम्यं स्यात्तदाऽऽश्रययोग एव भवति तत्र संख्यायोगो न स्वीकार्य इत्यभिप्रायः। यद्येकस्मिन्नेव राशौ सर्वे व्यवस्थितास्तदा गोलनामको योगो भवति। एवं यदि सर्वे ग्रहा राशिद्वये ग्रहा गता भवन्ति तदा युगाख्यो योगो भवति। यदि राशित्रये सर्वे ग्रहाः समवस्थितास्तदा शूलनामको योगो भवति।

यदि च राशिचतुष्टये सर्वे ग्रहा उपस्थितास्तदा केदाराभिधो योगः स्यात्। एवमेव पञ्चसु राशिषु समे खगा भवन्ति तदा पाशाख्यो योगः। यदा षट्सु राशिषु सर्वे ग्रहाः स्थितास्तदा दामाख्यो योगः। यदा च सप्तसु स्थानेषु सर्वे ग्रहा व्यवस्थितास्तदा वीणानामको योगो भवति। उक्तञ्च—

एकभवनादिसंस्थैः संख्यायाः स्युर्यथाक्रमं योगाः।
गोलयुगशूलसंज्ञाः केदारः पाशदामिनी वीणाः॥ इति॥ ११॥

यदि कहे गये रज्जु मुसल इत्यादि योगों के अतिरिक्त (१) एकही राशि में सबके सब ग्रह पड़े हो तो गोल नाम का योग। (२) दो राशियों में सब ग्रह बैठे हों तो युग नामक योग। (३) तीन राशिमें सब ग्रह संप्राप्त हों तो शूल नामा योग। (४) चार राशियों में यदि सब ग्रह गत हों तो केदार नामक योग। (५) पाँच स्थानों में ही सब ग्रह समवस्थित हो तो पाश नामक योग। (६) छ राशियों में सब ग्रह समुपगत हों तो दामाख्य योग। (७) सात राशियों में सब ग्रह पड़े हों तो वीणा नामक योग होता है॥ ११॥

## गोलादियोगफलम्।

दुःखितदरिद्रघातककार्षकरदुःशीलपशुपातीनिपुणानाम्।
जन्म क्रमेण सुखिनः परभाग्यैस्सर्व एवैते॥ १२॥

इति श्रीवराहमिहिराचार्यकृते लघुजातके नाभसयोगाऽध्यायस्त्रयोदशः॥ १३॥

भट्टोत्पलः—सांख्ययोगजातानां फलान्याह। गोलाख्ये योगे दुःखितानां जन्म भवति। युगाख्ये दरिद्रस्य। शूलाख्ये योगे घातुकस्य, घातुको वधकारी। केदाराख्ये कर्षकस्य। पाशाख्ये दुःशीलस्य। दामाख्ये पशुपालस्य। वीणायां निपुणस्य। एवं विधानां जन्म क्रमेण। सांख्ययोगे जाताःसर्व एव अन्यवित्तसु-

खिना भवंति । अथैकस्मिन् राशौ चरे स्थिरे द्विस्वभावे वा सर्वे ग्रहा भवंति तदा रज्जुमुशलानलादियोगानां मध्ये अन्यतमो योगो भवति । यद्यप्युक्तयोगान् विहायेति । तथापि सांख्ययोगाः निरवकाशाः । अतः 'निरवकाशादिविधयः सावकाशान् विधीन् बाधंते' इति न्यायेन सांख्ययोगेन आश्रययोगोऽत्र बाध्यते यस्माद् गोलस्यान्य उपाय एव नास्ति तथा दलयोगाकृतियोगयोः समकाले उपस्थानं नास्ति तथा दलयोगाश्रययोगयोरपि नास्ति । अथ दलयोगैः सांख्ययोगा युज्यते । तथापि दलयोगप्राबल्यं तथाकृतियोगाः आश्रययोगैः युज्यते तदा आकृतियोगफलं भवति । संख्यायोगा आश्रययोगाश्च आकृतियोगैरभिभूयंते। आश्रययोगाः सांख्ययोगा नाभसादियोगाश्च समाप्तदशास्वपि फलप्रदा भवन्ति ॥ १२ ॥

इति श्रीभट्टोत्पलविरचितायां लघुजातकटीकायां नाभसादि-
योगाध्यायस्त्रयोदशः ॥ १३ ॥

वि० प्र०—अथ गोलादिसप्त संख्यायोगानां क्रमेण फलान्याह—

**दुःखित इति** । गोलादिसप्तयोगेषु क्रमेण दुःखितदरिद्रघातुककृषिकरदुःशीलपशुपतिनिपुणानां जन्म भवति । गोलनामके जातः पुमान् दुःखितो भवति । युगनामके योगे उत्पन्नो बालकःदरिद्रो धनरहितो भवति। शूलनाम्नि योगे जातो घातुको हिंसाकरो भवति । केदारनामके योगे उत्पन्नो बालकः कृषिकरः कृषीवलो भवति । 'कृषिकश्च कृषीवल' इत्यमरः । पाशनामके योगे जातो मनुष्यः दुःशीलो दुष्टस्वभावो भवति । दामयोगे उत्पन्नो बालकः पशुपतिः पाशुपालको भवति । वीणानामके योगे जातः पुमान् निपुणः सर्वकर्मसु कुशलो भवति । एते दुःखितादयः सर्वे एव परभाग्यैः सुखितो भवन्ति । कथितञ्च—

परभाग्यलब्धसौख्या धनभागैरेव जीवितास्तेषाम् ।
संख्यासंज्ञे जाता ये पुरुषाः सर्वतो विकलाः । इति ॥

एते नाभसयोगाः सर्वास्वपि दशासु फलदायिन इत्याह गुणाकरः—

सर्वास्वपि दशास्वेव भवेयुः फलदायिनः ।
प्राणिनामिति सत्याद्याः प्रवदन्ति मनीषिणः ॥ इति ।

यवनाचार्येणाष्टादशशतसंख्याका नाभसयोगा उक्तास्तेषां भेदा ग्रन्थान्तरे द्रष्टव्याः । इह विस्तरभिया न संरचिता इति ॥ १२ ॥

इत्याजमगढमण्डलान्तर्गत 'ब्रह्मपुर' ग्रामाभिजनश्रीपं० धर्मदत्तद्विवेदिसूनु-ज्यौ०आ० विन्ध्येश्वरीप्रसादद्विवेदिकृतायां लघुजातकस्य बालबोधिनीटीकायां नाभसयोगाध्यायस्त्रयोदशः समाप्तः ॥ १३ ॥

(१) गोल योग में उत्पन्न बालक दुःखी, (२) युग नामा योग में उत्पन्न मनुष्य दरिद्र, (३) शूल योग में पैदा हुआ जातक हिंसा करने वाला, ( ४ ) केदार योग में जन्म ग्रहण करने वाला कृषक ( कृषिकर्म करने वाला ),(५) पाश नामक योग में जन्म पाने वाला बालक खराब स्वभाव वाला,(६) दाम नामक योग में जन्मने वाला आदमी पशुओं का पालनकरने वाला और (७) वीणा नामक योग में संजात जातक सब कार्यों के करने में निपुण होता है। इन योगों में उत्पन्न मनुष्य दूसरों के भाग्य से जीने वाले सुखी होते हैं ॥१२॥

इति विन्ध्येश्वरीप्रसादद्विवेदिकृतायां लघुजातकस्य हिन्दीटीकायां नाभसयोगाऽध्यायस्त्रयोदशः समाप्तः ॥ १३ ॥



## अथ स्त्रीजातकाध्यायः १४ ।



### तत्रादौ स्त्रिया आकारलक्षणम् ॥

**स्त्रीपुंसोर्जन्मफलं तुल्यं किन्त्वत्र चन्द्रलग्नस्थम् ।**
**तद्बलयोगाद्वपुराकृतिश्च सौभाग्यमस्तमये ॥ १ ॥**

भट्टोत्पलः—अथ स्त्रीजातकाध्यायं व्याख्यास्यामः । तत्रादावेव पुरुषजन्मोक्तफलनिर्देशमाह । स्त्रीपुंसोर्जन्मफलं तुल्यं यादृशमेव पुरुषजातकं तादृशमेव स्त्रियाः । स्त्रीणां विशेषश्चंद्रलग्नचंद्राक्रांतराशिवशेन लग्नवशेन च विचारणीयम् । किं तदित्याह । तद्बलयोगाद्वपुराकृतिः । चंद्रवशाच्च लग्नवशाच्च वपुस्तस्या वक्तव्यम् । आकृतिश्च वक्तव्या । वपुः स्वरूपं आकृतिः संस्थानं स चेत् सौम्यग्रहयुक्तो भवति तदा सुभगा वाच्या । पापग्रहयुक्ते दृष्टे तस्मिन् दुर्भगेति वाच्यम् ॥ १ ॥

वि० प्र०—अथ स्त्रीजातकाध्यायो व्याख्यायते । तत्रादौ पुरुषजन्मोक्तफलातिदेशं तद्विशेषञ्चाह—स्त्रीपुंसोरिति । स्त्रीपुंसोः स्त्रीपुरुषयोः जन्मनः फलं तुल्यं भवति । यादृशं पुरुषाणां जातकफलं सुख-दुःख सन्तान-मातृपितृसुख-भ्रातृसुखादिकं, तादृशमेव स्त्रीणामपि बोध्यम् । किन्त्वत्र स्त्रीजातके चन्द्रलग्नस्थं सर्वं फलं ज्ञातव्यम् । जन्मकालिकचन्द्राधिष्ठितराशिवशाज्जन्मलग्नवशाच्च सर्वं फलं विवेचनीयम् । तद्बलयोगाद्वपुः तयोश्चन्द्रलग्नयोर्वशात्स्त्रियो वपुः शरीरमाकृतिराकारश्च विज्ञेयः । सौभाग्यं भावि रतिस्वरूपं वाऽस्तमये सप्तमस्थाने विचारणीयम् । यत्र यत्र स्थानेषु बलयुक्तः शुभग्रहा व्यवस्थिताः शुभफलदातारः पापाश्चारिष्टकरा भवन्तीत्यर्थः । उक्तञ्च ग्रन्थान्तरे ( सारावल्यां )—

स्त्रीणां जन्मफलं तुल्यं पुंभिः सार्धं यदुच्यते ।
विशेषस्तत्र यो दृष्टः कथ्यते विस्तरेण सः ॥
वैधव्यं निधने चिन्त्यं शरीरं चन्द्रलग्नतः ।
सप्तमे पतिसौभाग्यं पञ्चमे प्रसवस्तथा ॥ इति ॥

होरासारे फलप्रकारः—

एषु स्थानेषु युवत्यः सौम्याः शुभदा बलान्विता ज्ञेयाः ।
क्रूरास्तु नेष्टफलदा भवनेशविवर्जिताः सदा चिन्त्याः ॥ इति ॥ १ ॥

स्त्री और पुरुष इन दोनों का जन्म फल ( सुख, दुःख, हानि, लाभ, इत्यादि सब फल ) एक ही प्रकारके होते हैं। किन्तु जन्मलग्न और जन्मचन्द्रराशि के बलके वश से स्त्री के शरीर, आकार, सौन्दर्य इत्यादि का और जन्मलग्न से सातवीं राशि के वश से उसके सौभाग्य ( सोहाग ) का विचार करना चाहिये॥ १॥

तन्निदर्शनम्।

**युग्मर्क्षे लग्नेन्द्वोः प्रकृतिस्था रूपशीलगुणयुक्ता।**
**ओजे पुरुषाकारा दुःशीला दुःखिता चैव॥ २॥**

भट्टोत्पलः—चंद्रलग्नवशाद्वपुरित्येतदुक्तमिति तन्निर्देशार्थमाह। युग्मराशौ वृषादौ स्थिते चंद्रमसि लग्ने वा जाता स्त्री प्रकृतिस्था भवति। स्त्रीरूपेत्यर्थः। रूपशीलगुणयुता भवति ओजे विषमराशौ मेषादौ स्थिते चद्रमसि लग्ने वा तस्मिन् जाता स्त्री पुरुषाकारा स्त्री भवति। दुःशीला दुःखिता च भवति। अर्थादेव चंद्रलग्नयोः एकस्मिन्युग्मराशिगते अन्यस्मिन् ओजराशिगते मध्यगुणा च भवति॥ २॥

वि०प्र०—पूर्वं यच्चन्द्रलग्नस्थं वपुरादिफलं वाच्यमित्युक्तं तन्निदर्शनमाह—**युग्मर्क्ष इति**। युग्मर्क्षे समराशौ स्त्रीराशौ वृषकर्कादावित्यर्थः। लग्नेन्द्वोः लग्ने चन्द्रमसि च स्थिते जाता स्त्री प्रकृतिस्था स्त्रीस्वभावा रूपशीलगुणयुक्ता च भवति। ओजे विषमसंख्याराशौ मेषमिथुनसिंहादौ स्थिते चन्द्रे लग्ने च जाता स्त्री पुरुषाकारा पुरुषवदाचारशीला दुःशीला दुःखिता च भवति। एवं लग्नचन्द्रयोरेके समराशिगते अन्ये विषमराशिव्यवस्थिते जाता मध्यमगुणा स्यात्। तथा शुभयुते दृष्टे वा चन्द्रे लग्ने जाता गुणोपेता पापयुतदृष्टे दुष्टगुणा मिथो मिश्रग्रहयुतदृष्टे मिश्रगुणा भवतीति। उक्तञ्च सविशेषं सर्वं होरासारे—

पुरुषर्क्षे पुरुषांशे लग्नेन्द्वोः पापयुक्तयोर्जाता ।
पुरुषाकृतिशीलयुता भर्तुरयोग्या समज्जसौ कन्या ॥
समराशौ समभागे लग्नेन्द्वोः स्त्रीगुणान्विता कन्या ।
सौम्ययुते दृष्टे वा सुभगा साध्वी सुविख्याता ॥ इति ॥ २ ॥

युग्म ( वृष, कर्क, कन्या, वृश्चिक,मकर, मीन ) राशि में उत्पन्न स्त्री स्त्रियों के ऐसे रूप, स्वभाव, गुण इत्यादिसे युक्त होती है। विषम ( मेष, मिथुन, सिंह, तुला, धन, कुम्भ ) राशियों में जन्म ग्रहण करने वाली कन्यायें पुरुषों के ऐसे आकार वाली खराब स्वभाववाली, और दुःख भोगने वाली होती हैं ॥ २ ॥

## पतिस्वरूपम् ।

**अबले सप्तमभवने सौम्येक्षणवर्जिते च कापुरुषः ।**
**भवति पतिश्चरभेऽस्ते प्रवासशीलो भवेद्भ्रान्ती ॥ ३ ॥**

भट्टोत्पलः—तस्याः पतिस्वरूपमाह । लग्नात्सप्तमभवने बलहीने सौम्यग्रहदर्शनविवर्जिते च जातायाः तस्याः भर्ता कापुरुषो भवति नाम कुत्सितपुरुषो भवति । जन्मभवनात्सप्तभवने चरराशिगते या जाता स्त्री तस्याः भर्ता परिभ्रमणशीलो भवति । स्थिरराशौ सप्तमस्थानगते नित्यं गृहस्थः । द्विस्वभावे सप्तमस्थानगते मिश्र इति ॥ ३ ॥

वि० प्र०—तत्पतिस्वरूपज्ञानमाह—**अबल इति** । जन्मलग्नात्सप्तमे भवने अबले ।बलरहिते सौम्येक्षणवर्जिते सौम्यग्रहदृष्टिरहिते चोत्पन्नायाः स्त्रियः पतिः कापुरुषः कुत्सितः पुरुषो भवति । अस्ते सप्तमभवने चरराशौ मेषकर्कटतुलामकरराशीनामन्यतमराशौ गते जातायाः पतिः प्रवासशीलः परदेशवासी देशान्तरभ्रमणपरो भवति । अर्थादेव स्थिरराशावस्तभवनगते जाताया भर्ता निरन्तरं स्वगृहनिवासी,द्विस्वभावराशौ सप्तमस्थानगते कदाचित्परदेशे कदाचिच्च गृहे तिष्ठतीति । तथाहि गर्गजातके—

शुद्रेऽस्ते दुर्बले यस्याः पापग्रहनिरीक्षिते।
सौम्यग्रहदृशा हीने भर्ता कापुरुषो भवेत् ॥
बुधमन्दयुतेऽस्ते च पतिः क्लीबसमो भवेत्।
वन्ध्या वा दुर्भगा सा च नित्यं प्रवासिनी ॥
सप्तमे चरराशौ च तदीशे चरराशिगे।
भर्ता प्रवासशीलः स्यात् स्थिरभे स्वगृहे वसेत् ॥

वीरजातके अन्येपि योगा उक्ताः—

चन्द्रे मन्दे चन्द्रयुतेऽथदृष्टे शुक्रेण लोलश्च पतिस्तु तस्याः।
चलस्वभावश्चपलो नितान्तं भ्रमेण युक्तस्तु विवेकहीनः ॥
शुभ राशिगते तत्र सप्तमे शुभ संयुते।
शुभग्रहैस्तथा दृष्टे राजपूज्यः पतिः स्मृतः ॥ इति ॥ ३ ॥

यदि स्त्री के जन्मकुण्डली या चन्द्रकुण्डली में सप्तम भाव निर्बल हो और शुभग्रहों की दृष्टि उस पर न हो तो उस का पति कायर, ( खराब स्वभाव वाला कुकर्म करने वाला दरिद्र, आलसी, इत्यादि ) होता है। यदि चर संज्ञक ( मेष, कर्क, तुला, मकर ) राशियाँ स्त्री की कुण्डली में सप्तम भाव में पडी हों तो उस स्त्री का पति प्रवास शील ( परदेश में रहने वाला ) और इधर उधर घूमने वाला, स्थिर ( वृष, सिंह, वृश्चिक,कुम्भ ) राशियाँ यदि स्त्री के सप्तमभाव में व्यवस्थित हो तो उसका पति सर्वदा घर पर रहने वाला होता है। एवं यदि द्विस्वभाव राशि का पूर्वार्ध सप्तम भाव में हो तो स्थिर राशि के गुण वाला और द्विस्वभावराशि का उत्तरार्द्ध सप्तमभाव में विद्यमान हो तो चरराशिमें उत्पन्नगुणवाला होता है। अथवा द्विस्वभाव राशि में जिस कन्या की कुण्डली में सप्तमभाव गत हो उसका पति कभी परदेश में कभी घर पर रहने वाला होता है ॥ ३ ॥

विधवा पतित्यक्ता-कुलटायोगाः ।

**बाल्ये विधवा भौमे पतिसन्त्यक्ता दिवाकरेऽस्तस्थे ।**
**सौरौ पापैर्दृष्टे कन्यैव जारं समुपयाति ॥ ४ ॥**

**भट्टोत्पलः**—यस्या जन्मलग्नात्सप्तमेऽङ्गारको भवति सा बाल्ये एव विधवा भवति । सप्तमेऽर्के जाता या स्त्री सा पत्या संत्यज्यते । यस्या जन्मलग्नाच्छनैश्चरः सप्तमे भवति स च पापग्रहदृष्टः सा कन्यैव सती अनूढैव जारं समुपयाति प्राप्नोति ॥४॥

वि० प्र०—अथ विधवा-पतिसंत्यक्ता-कुलटेतियोगत्रयमाह — **बाल्य इति** । जन्मलग्नादस्तस्थे सप्तभवनगते भौमे जाता कन्या बाल्ये वयस्येव विधवा भवति । सप्तमभवनस्थे दिवाकरे सूर्ये पापैर्दृष्टे इति सर्वत्रानुवर्तनीयम् । जाता स्त्री पतिसंत्यक्ता पतिना परित्यक्ता भवति । सप्तमभवने सौरौ शनैश्चरे व्यवस्थिते पापैर्दृष्टेऽवलोकिते कन्यवाविवाहितैव जारमुपपतिं समुपयाति प्राप्नोति । अविवाहितैव कुलटा स्यादिति । आह च गर्गः—

अस्तगेऽर्केऽरिभिर्दृष्टे तदोत्सृष्टा भवेत्स्वयम् ।
सप्तमस्थे कुजे तद्वद्बाल्ये सा विधवा भवेत् ॥
भर्ता क्रोधपरो वापि चान्योन्यं मृतिमाप्नुयात् ।
मन्दे सप्तमराशिस्थे तथा शत्रुभरीक्षिते ॥
कन्यैव कुलटा भूत्वा राजनमधि गच्छति ।
द्यूने शुभाशुभैर्युक्ते पुनर्भूः सा भविष्यति ॥ इत्यादि ॥ ४ ॥

**जिस स्त्री के जन्म लग्न अथवा जन्मकालिकचन्द्राधिष्ठितराशि से सप्तम भाव में मङ्गल पडा हो वह स्त्री बाल्यकाल में ही विधवा होती है । यदि सप्तम स्थान में सूर्य पडा हो तो उसका पति उसको त्याग ( छोड ) देता है । यदि सप्तमभाव में शनि पड़ा हो और उस (शनि ) को पापग्रह देखते हों तो वह कन्या विना व्याहे ही दूसरे पुरुष से रमण करती है ॥ ४ ॥**

ब्रह्मवादिनीस्त्रीलक्षणम् ।

**सितकुजजीवेन्दुसुतैर्बलिभिर्लग्ने समश्च यदि राशिः।**
**स्त्री ब्रह्मवादिनी स्याद्भूरिशास्त्रकुशला प्रतीता च॥५॥**

भट्टोत्पलः—येन योगेन जाता ब्रह्मवादिनी भूरिशास्त्रकुशला प्रतीता च भवति तदर्थमाह । यस्या जन्मनि लग्नगतः समराशिर्भवति । शुक्रांगारकगुरुबुधाश्च तस्मिन्बलिनो भवति तदा जाता स्त्री ब्रह्मवादिनी मोक्षशास्त्रकुशला प्रतीता च भवति । प्रतीता विख्याता ॥ ५ ॥

वि० प्र०—अथ ब्रह्मवादिनीकारकयोगमाह—**सित इति** । यस्याः कन्याया जन्मलग्ने समोराशिः वृषकर्ककन्यावृश्चिकमकरमीनानामन्यतमराशिगतः यत्र कुत्रापि राशौ च बलयुक्ताः शुक्रभौमगुरुबुधा व्यवस्थिता भवन्ति तदा सा स्त्री ब्रह्मवादिनी वेदान्तशास्त्रमर्मज्ञा भूरिशास्त्रकुशला बहुशास्त्रविज्ञा प्रतीता प्रसिद्धा च स्यादिति । 'ख्याते हृष्टे प्रतीत' इत्यमरः । सारावल्यां त्वन्यप्रकारेण ब्रह्मवादिन्यादिलक्षणमुक्तम्—

बलिभिर्बुधगुरुशुक्रैः शशाङ्करहितैर्विलग्नगे शशिभे ।
स्त्री ब्रह्मवादिनी स्यादनेकशास्त्रेषु कुशला स्यात् ॥

कुत्र कुत्रैते योगा विचारणीया इत्याह कल्याणवर्मा—

जन्मकाले विवाहे च चिन्तायां[1] वरणे तथा ।
चिन्त्यं स्त्रीणां तु यत्प्रोक्तं घटते तत्पतिष्वपि ॥ इति ॥५॥

**यदि किसी कन्याके जन्मलग्न में समराशि ( २।४।६।८।१०।१२ ) इन में से कोई राशि व्यवस्थित हो और उस पर बलवान् शुक्र, मङ्गल, बृहस्पति, बुध बैठे हों तो वह स्त्री ब्रह्मवादिनी ( ब्रह्मविषयक रातदिन चर्चा करने वाली, अनेकशास्त्रों के मर्म को जानने वाली और प्रसिद्ध होती है ॥ ५ ॥**

---

( १ ) कन्योद्वाह सम्बन्धिनि प्रश्नसमये ।

स्त्रियाः फलासंभवे भर्तुः फलम् ।

**पुञ्जन्मफलं यद्यन्न घटति वनितासु पतिषु तत्तासाम् ।**
**वक्तव्यं राज्याद्यं वृषणविनाशादि वा पापम् ॥ ६ ॥**

**इति श्रीवराहमिहिरकृते लघुजातके स्त्री-**
**जातकाऽध्यायः ॥ १४ ॥**

**भट्टोत्पलः**—अथ स्त्रियाः पुरुषजन्मफलासम्भवे तद्भर्तुरिति आदेशार्थमाह । स्त्रीपुंसोर्जन्मफलं तुल्यमित्युक्तं । यत्र शुभमशुभं वा स्त्रियो न घटते न संभवतीत्यर्थः । यथा राज्याद्यं शुभं, पापं वा वृषणविनाशादिकं तत्र तस्या भर्त्तुर्वक्तव्यम् । एवमन्यान्यप्यघट मानानि वेदितव्यानि ॥ ६ ॥

इति भट्टोत्पलविरचितायां लघुजातकटीकायां
शिष्यहिताभिधायां स्त्रीजातकाध्यायश्चतुर्दशः ॥ १४ ॥

वि० प्र०—अथ स्त्रियाः फलासम्भवे तत्पत्युरित्याह—**पञ्जन्मेति** । 'स्त्रीपुंसो-जन्मफलं तुल्यं भवतीति' पूर्वमुक्तं तत्र यद्यत्पुंजन्मफलं पुरुषभोग्यत्तमं फलं वनितासु न घटते स्त्रीष्वसम्भवं तत्तासां स्त्रीणां पतिषु राज्याद्यं राजयोगादिकं शुभफलं वृषण विनाशादिकं पापफलञ्च वक्तव्यम् ॥ ६ ॥

इत्याजमगढमण्डलान्तर्गत'ब्रह्मपुर' ग्रामाभिजनश्रीपं० धर्मदत्तद्विवेदिसूनु
ज्यौ० आ० विन्ध्येश्वरीप्रसादद्विवेदिकृतायां लघुजातकस्य
बालबोधिनीटीकायां स्त्रीजातकाध्यायश्चतुर्दशः समाप्तः ॥ १४ ॥

**जो जो शुभाशुभ फल स्त्रियों को लिये न घटने योग्य हों वे फल उसस्त्री के पति को होते हैं। जैसे राज्यप्राप्ति, युद्धविजयी इत्यादि शुभ योग, और अण्डकोशवृद्धि इत्यादि अशुभ फल उस के पति के होने योग्य हैं ॥ ६ ॥**

**इति विन्ध्येश्वरीप्रसादद्विवेदिकृतायां लघुजातकस्य हिन्दी-**
**टीकायां स्त्रीजातकाध्यायश्चतुर्दशाध्यायःसमाप्तः ॥ १४ ॥**



# अथ निर्याणाध्यायः ॥ १५ ॥



## तत्रादावष्टमस्थग्रहवशान्मृत्युज्ञानम्।

**सूर्यादिभिर्निधनगैर्हुतवहसलिलायुधज्वरामयजः।**
**क्षुत्तृट्कृतश्च मृत्युः परदेशे नैधने चरभे ॥ १ ॥**

भट्टोत्पलः—अथ निर्याणाध्यायं व्याख्यास्यामः । तत्रादौ सूर्यादिभिरष्टमगैर्मृत्युज्ञानमाह । यस्य जन्मलग्नादष्टमस्थानेऽर्को भवति तस्याग्निहेतुको मृत्युर्भवति । यस्य चंद्रोऽष्टमो भवति तस्य जलात्, यस्य भौमोऽष्टमो भवति तस्याऽऽयुधहेतुको मृत्युः । यस्य बुधोऽष्टमो भवति तस्य ज्वरहेतुको मृत्युः । यस्य गुरुरष्टमो भवति तस्यामयात् । आमयादजीर्णादिरोगतः । यस्य शुक्रोऽष्टमो भवति तस्य क्षुद्धेतुको मृत्युः । यस्य शनैश्चरोऽष्टमगो भवति तस्य तृड्ढेतुको मृत्युर्भवति । बहवो ग्रहाः अष्टमस्थानगता भवन्ति तदा यो बलवान् तद्धेतुको मृत्युर्भवति । एवं प्रकारे जाते दर्शनार्थज्ञानमाह। यस्य लग्नादष्टमो राशिश्चराख्यो भवति तस्य परदेशे मृत्युर्भवति अर्थाद्यस्य लग्नादष्टमः स्थिरराशिर्भवति तस्य स्वदेशे मृत्युः। यस्याष्टमो द्विस्वभावराशिर्भवति तस्य मार्गे मृत्युर्भवति ॥१॥

वि०प्र०—अथ निर्याणाध्यायो व्याख्यायते । तत्रादावादित्यादिग्रहैरष्टमस्थानगतैर्मृत्युहेतुज्ञानमाह—**सूर्यादिभिरिति** । सूर्यादिभिः सूर्येन्दुभौमबुधगुरुशुक्रशनैश्चरैरष्टमस्थानगतैः क्रमेण हुतवहसलिलाऽऽयुधज्वराऽऽमयक्षुत्तृट्कृतो मृत्युर्भवति । जन्मनि जन्मलग्नादष्टमस्थे रवौ मनुष्यस्य हुतवहोऽग्निस्तत्कृतो मृत्युर्भवति । अष्टमस्थे चन्द्रमसि जलसम्बन्धेन मृत्युर्भवति । एवं भौमेऽष्टमभावगते आयुधेन शस्त्रेण सौम्येऽष्टमभावगते ज्वरेण,गुरावष्टमस्थानाधिष्ठिते आमयात्केनचिद्रोगेण, 'रोग-व्याधि-गदाऽऽ-

मया इत्यमरः' मृत्युः स्यात् । भृगावष्टमभावगते क्षुधा मृत्युर्भवति। शनैश्चरेऽष्टमस्थानगते पिपासया मृत्युर्भवति । यद्यष्टस्थाने बहवो ग्रहा व्यवस्थितास्तदा तेषांमध्येऽधिकबलवतो ग्रहस्य हेतुवशान्मनुष्यस्य मृत्युर्बोध्या। यदि च बहवो ग्रहा बलिष्ठास्तदा सर्वेषां मिश्रहेतुभिर्मृत्युरवगन्तव्या । एवं ज्ञाते हेतौ कुत्र स्वदेशे परदेशे मार्गे वा मृत्युर्भविष्यत्यत्राह—परदेशे नैधने चरभे चरराशौ मेषकर्कटतुलमकराणामन्यतमराशावष्टमस्थानगते परदेशे स्वदेशादन्यत्र मृत्युर्भवति । एवं स्थिरराशौ वृषसिंहवृश्चिककुम्भानामन्यतमराशावष्टमस्थानगते स्वदेशे, द्विस्वभावराशौ मिथुनकन्याधनुर्मीनानामन्यतमे राशावष्टमस्थानगते मार्गे मृत्युर्भवतीति । ग्रन्थान्तरेऽप्युक्तम्—

शिखिजलशस्त्रज्वरजस्त्वामयक्षुत्तृट्कृतो भवेन्मृत्युः ।
सूर्यादिभिर्निधनगैः परदेशपथे स्वके चराद्यैश्च ॥ इति ।

मृत्युभूमिज्ञानमप्युक्तं तत्रैव—

उभयनवांशाधिपतेः समानभूमौ वदन्ति यवनेन्द्राः । इति ॥ १ ॥

यदि जन्म लग्न से अष्टम स्थान में सूर्य बैठे हो तो मनुष्य की मृत्यु अग्नि के सम्बन्ध से होती है। चन्द्रमा अष्टम भाव में पड़े हों तो जल के सम्बन्ध से मनुष्य की मृत्यु होती हैं। मंगल अष्टम-भाव गत हों तो उस आदमी का मरण शस्त्र ( हथियार ) से होती है। बृहस्पति के अष्टम भाव में रहने पर अजीर्णादिरोग के सम्बन्ध से मनुष्य का निधन होता है। शुक्र अष्टम स्थान गत हो तो मनुष्य प्यास के मारे ( लूलग जाने से ) मरता है। शनि जन्मलग्न से आठवें भाव में पड़ जाय तो वह पुरुष भूख के मारे मर जाता है। यदि कई ग्रह अष्टम राशिपर व्यवस्थित होंतो उनमें सबसे अधिक बलवान् ग्रह सम्बन्धी कारण से मनुष्य मृत्यु पाता है। यदि अष्टम भाव में चर ( मेष, कर्क, तुला, मकर ) राशि पड़ी हो तो परदेश में, स्थिर ( वृष, कन्या, वृश्चिक, कुम्भ ) राशि पड़ी हो तो घर पर और द्विस्वभावराशि अष्टमभाव गत हो तो मार्ग ( रास्ते ] में मनुष्य की मृत्यु होती है ॥ १ ॥

## ग्रहदृष्ट्या मृत्युज्ञानम् ।

**यो वा निधनं पश्यति बलवाँस्तद्धातुकोपजो मृत्युः ।
लग्नात्त्र्यंशस्य पतिर्द्वाविंशः कारणं मृत्योः ॥ २ ॥**

भट्टोत्पलः—यस्य लग्नादष्टमं स्थानं शून्यं ग्रहवर्जितं भवति तस्य मृत्युज्ञानमाह । यदा अष्टमस्थानं शून्यमादित्यः पश्यति तदा पित्तप्रकोपेण म्रियते । यदा चंद्रः पश्यति तदा कफवातप्रकोपेण, भौमस्तदा पित्तप्रकोपेण, बुधश्च तदा वातपित्तश्लेष्मणां त्रयाणामपि प्रकोपेण,बृहस्पतिस्तदा कफप्रकोपेण,शुक्रस्तदा कफवातप्रकोपेण शौरिस्तदा वातप्रकोपेण । यदा बहवो ग्रहाः अष्टमस्थानं पश्यति तदा तेषां मध्ये यो बली भवति तस्य धातुकोपेन मृत्युर्भवति । यस्य जन्मन्यष्टमं स्थानं केनचिद्युतदृष्टं न भवति तस्य मृत्युप्रकारज्ञानमाह । यस्य जन्मलग्नाद्यो लग्नत्र्यंशः द्रेष्काणः तस्माद्द्वाविंशो यो द्रेष्काणः तस्य योऽधिपतिस्तस्य यत्कारणमुक्तं हुतवहसलिलादि तत्कृतो मृत्युर्भवति ॥ २ ॥

वि० प्र०—अथ वा जन्मलग्नादष्टमे स्थाने ग्रहरहिते सूर्यादिग्रहदृष्टिवशेन मृत्युकारणमाह—**यो वेति**। वाऽथवाऽष्टमे ग्रहरहिते सति रव्यादिग्रहाणां मध्ये यो बलवान्निधनमष्टमस्थानं पश्यति तद्धातुकोपजस्तस्य ग्रहस्य यो धातुस्तत्प्रकोपेण मनुजस्य मृत्युर्भवति । तद्यथा—बलवता रविणाऽवलोकितेऽष्टमभावे जातः कफप्रकोपेण मृत्युमाप्नोति । चन्द्रमसा दृष्टे कफवातप्रकोपेण, भौमदृष्टे पित्तप्रकोपेण, बुधेक्षिते वातपित्तकफदोषत्रयप्रकोपेन, गुरुणावलोकिते कफदोषेण, भृगुणाऽवलोकिते कफवातप्रकोपेण, शनैश्चरेण दृष्टेऽष्टमे भावे वातदोषेण म्रियत इति । यदि बहुभिर्ग्रहैर्दृष्टमष्टमभवनं तदा सर्वाधिकबलस्य ग्रहस्य धातुकोपजः, यदि वा सर्वधातुप्रकोपेण मृत्युर्भवति । कथितञ्च ग्रन्थान्तरे—

योो बलयुक्तो निधनं पश्यति तद्धातुकोपजो मृत्युः ।
तत्संयुक्तस्तनुजो बहुबलिभिर्बहुप्रकारः स्यात् ॥ इति ।

सर्वत्र बलालोकने दिक्स्थानकालचेष्टाबलं ग्राह्यमित्युक्तञ्च—

'दिक्स्थानकालचेष्टाबलं सर्वनिर्णयविधाने' ॥ इति ॥

अथाष्टमभवने कैश्चिदनवलोकितेऽपि मृत्युकारणमाह—**लग्नादिति**। लग्नात्त्र्यंशस्य द्वाविंशः पतिः मृत्योर्मरणस्य कारणं बीजं भवति । जन्मलग्ने यो वर्तमानस्त्र्यंशो द्रेष्काणस्तस्माद्द्वाविंशद्रेष्काणस्य पत्युर्यत्कारणं 'हुतवहसलिलप्रभृति' तदेव मृत्योः कारणं भवति । जन्मलग्ने यदि प्रथमो द्रेष्काणस्तत्कालस्तदाष्टमभवनेपि प्रथमो द्रेष्काणद्वाविंशो भवति । एवं लग्ने द्वितोयो द्रेष्काणस्तदाष्टमराशावपि द्वितीयो द्वाविंशः, तृतीयोऽप्येवं ज्ञेयम् । सारावल्यां द्वाविंशो द्रेष्काणोपि मृत्युकारणं भवतीत्युक्तम्—

उदयाद्द्वाविंशतिमद्द्रेष्काणो भवति कारणं मृत्योः ।
तस्याधिपतिभवो वा निर्याणं सूचयेत्स्वगुणैः ॥ इति ।

तत्रैव मेषादिराशीनां प्रत्येकद्रेष्काणेषु जातानां फलान्युक्तानि—

मेषाद्ये द्रेष्काणे क्रूरग्रहवीक्षिते च संयुक्ते ।
अम्ब्वहिविषपित्तकृतं मरणं नृणां समादेश्यम् ॥
विद्याद्द्वितीयभागे मरणं जलकृ(१)मिहिमारण्यैः ।
एवं तृतीयभागे तटाककूपप्रपाताद्वा ॥
करभाश्वखरोष्ट्रेभ्यो मृत्युर्ज्ञेयो वृषस्याद्ये ।
पित्ताग्निवातचोराद्द्वितीयभागे वृषस्यैव ॥
विद्यात्तृतीयभागे यानासनवाजिपातकृतम् ।
पुंसां भवति हि मरणं रणशिरसि महास्त्रकृतमेव ॥
आद्ये मिथुनत्र्यंशे काशश्वासोद्भवो भवति मृत्युः ।
मृत्युर्महिषविषाद्याद् द्वितीयभागे च सन्निपाताद्वा ॥
वनवासिचतुश्चरणात्पर्वतनागाद्गणात्तथारण्यात् ।

---

( १ ) 'क्रिमि' इत्यप्युपलभ्यते ।

भवति हि मृत्युः पुंसामन्ते भागे तु जुतुमस्य[1] ॥
ग्राहेण मद्यपानात्कण्टकदोषेण वा तथा स्वभ्रात् ।
भवति हि कर्कटकाद्ये मृत्युर्नृणां तृतीयभागे तु ॥
अभिघाताद्विषपानान्मध्ये त्र्यंशे भयं समादिष्टम् ।
विहगप्रमेहगुल्म सृक्तन्द्रादोषेण च तथान्त्ये ॥
सलिलविषपादरोगात्सिंहाद्ये त्र्यंशके भवेत्पुंसात् ।
मध्ये तृतीयभागे जलामयकृतो वनोद्देशे ॥
विषशस्त्रयोगदोषैरभिशापाद्वा तथा च पाताद्वा ।
अन्त्ये सिंहत्र्यंशे भवति हि मृत्यु र्न सन्देहः ॥
आद्ये कन्यात्र्यंशे मस्तकरोगात्तथाऽनिलान्मृत्युः ।
व्यालगिरिदुर्गवनजो मध्ये भूपात्मजादथ वा ॥
करभखरशस्त्रतोयादतिघातास्त्रीकृतान्नपानाद्वा ।
अन्त्ये कन्यात्र्यंशे नृणां मृत्युः सदा दृष्टः ॥
आद्ये वणिक् विभागे युवतिचतुष्पान्निपातदोषेण ।
मध्ये तु जठररोगैरन्त्ये „व्यालाम्बुजातेभ्यः ॥
आद्येऽलिनस्त्रिभागे विषशास्त्रस्त्रीकृतान्नपानभवः ।
मध्ये तु वस्त्रभारस्त्रंसनरोगभवति मृत्युः ॥
अन्त्ये तृतीयभागे लोष्टकपाषाणजनितवेदनया ।
भवति हि मरणं ह्यथवा नृणां जङ्घास्तिभङ्गकृतम् ॥
चापस्याद्ये त्र्यंशे गुदानिलसमुद्भवैर्विविधरोगैः ।
मध्ये विषगुरुदोषरनिलकृतैर्वा भवेन्मृत्युः ॥
अन्त्ये तृतीयभागे जलमध्ये तत्समुत्थितैर्वापि ।
मृत्युर्नृणां दृष्टो जठरामयदोषसम्भूतः ॥
मकराद्ये दृक्काणे नृपसिंहव्याघ्रकारणान्मृत्युः ।
ऊरुविनाशादथवा जलचरसत्त्वाद्विशैकशफसर्पात् ॥

---

(१) 'जितुमस्ये' इत्यपि पाठो दृश्यते ।

दहनास्त्रतस्करेभ्यो ज्वरादमानुषविभेदनान्मध्ये ।
अन्त्ये मकरत्र्यंशे स्त्रीणां मृत्युः सदा दृष्टः ॥
कुम्भे प्रथमत्र्यंशे स्त्रीभ्यस्तोयैस्तथा जठररोगः ।
ज्ञेयो मृत्युर्नृणां पर्वतगहनद्विपादैर्वा ॥
मध्ये स्त्रीकृतदुःखैर्गुह्यजरोगैर्भवेन्मृत्युः ;
अन्त्ये मिथुनचतुष्पदमुखरोगकृतैर्भवेत्पुंसाम् ॥
अंशे मीनयुगाद्ये गुल्मग्रहणीप्रमेहयुवतीभ्यः ।
जङ्घाजलजैः रोगैश्च हगजकृतैः समादिशेन्मृत्युम् ॥
नौभदाज्जलमध्ये झषे दृकाणद्वितीयजातानाम् ।
अन्त्ये भवति हि मरणं कुत्सितरोगैर्न सन्देहः ॥ इति ॥ २ ॥

यदि अष्टमस्थान में कोई ग्रह न पड़ा हो किन्तु सूर्य अष्टम भावको देखता हो तो पित्त के प्रकोप से, चन्द्रमा अष्टम भाव को देखता हो तो कफ और वातके दोषसे,भौम अष्टम भावको देखता हो तो पित्त के बिगड़ने से, बुध की अष्टम भाव पर दृष्टि हो तो वात पित्त कफ तीनों के विकारों [ त्रिदोष=सन्निपात ] से, बृहस्पति की अष्टमभाव पर दृष्टि हो तो कफ के प्रकोप से, शुक्र की अष्टम भाव पर दृष्टि हो तो कफ और वात से उत्पन्न दोष से,एवं शनैश्चर की अष्टम स्थान पर दृष्टि हो तो वात के प्रकोप से मनुष्य की मृत्यु होती है। यदि बहुत से ग्रह अष्टम भाव को देखते हों तो उनमें जो ग्रह सबों में अधिक बलशाली हो उसके धातुके बिगड़ने से मनुष्य की मृत्यु होतीहै। यदि कई ग्रह बलवान् होकर अष्टम भाव को देखते हों तो उतने ग्रहों के धातुकोप से उस पुरुष की मृत्यु जानना। यदि कोई ग्रह अष्टम भाव को न देखते हों और न अष्टम भाव पर स्थित हों तो लग्न में स्थित द्रेष्काण से २२ वें द्रेष्काण के अथवा उस द्रेष्काण के स्वामी के धातु के प्रकोप से मनुष्य के मृत्यु का ज्ञान करना ॥ २ ॥

## देवलोकादिगतिज्ञानम्।

**सुरपितृतिर्यङ्नरकान् गुरुरिन्दुसितावसृग्रवी ज्ञयमौ।**
**रिपुरन्ध्रत्र्यंशकपा नयन्ति चास्तारिनिधनस्थाः ॥३॥**

भट्टोत्पलः—लग्नात्स्वषष्ठस्थानस्थो ग्रहः स्वपठितां गतिं नयति। सप्तमस्थोऽष्टमस्थश्च। यदैते त्रिष्वपि तदा तेषां यो बलवान् स्वस्वपठितां गतिं नयति। अथ त्रीण्येतानि शून्यानि भवन्ति तदा पुरुषजन्मलग्नात्षष्ठे स्थाने यो द्रेष्काणस्तथाऽष्टमे तयोर्यावधिपती तयोर्यो बलवान् स स्वपठितां गतिं नयति। तत्र जन्म लग्ने प्रथमद्रेष्काणस्तदा षष्ठेऽपि राशौ प्रथमो भवति। अथ जन्म लग्ने द्वितीयस्तदा षष्ठेऽपि राशौ द्वितीयो भवति। अथ जन्म लग्ने तृतीयः षष्ठेऽतृतीयः। एवं सप्तमाष्टमयोरपि न केवलं यावत्सर्वेष्वेव एवमपि नवांशकल्पना तत्र बृहस्पतिर्यदा गतिदायको भवति तदा देवलोके गतिं प्रयच्छति। चंद्रशुक्रयोरन्यतमः पितृलोके गतिं प्रयच्छति। आदित्यभौमयोरन्यतमस्तिर्यङ्लोके गतिं प्रयच्छति। बुधशनैश्चरयोरन्यतमो नरके प्रयच्छति॥३॥

मि० प्र०—अथ ग्रहाणां लोकास्तत्प्राप्तिज्ञानञ्चाह—**सुर** इति। गुरुरिन्दुसितावसृग्रवी ज्ञयमौ क्रमेण सुरपितृतिर्यङ्नरकान् क्रमेण प्रापयन्ति। गुरुः सुरलोकं, इन्दुसितौ चन्द्रशुक्रौ पितृलोकं, असृग्रवी भौमसूर्यौ तिर्यङ्लोकं, ज्ञयमौ बुधशनी नरकं नयतः। जन्मलग्नात् षष्ठसप्तमाष्टस्थानेषु रिक्तेषु सत्सु रिपुरन्ध्रत्र्यंशकपाः जन्मलग्ने तात्कालिको यो द्रेष्काण स्तस्मात्षष्ठाष्टमद्रेष्काणयोरन्यतरस्याधिपतिः स्वीयेलोके नयति। तत्र षष्ठाष्टमद्रेष्काणपयोर्यो बलवान्स एवेति। यदि च जन्मलग्नात्षष्ठसप्तमाष्टमस्थानेषु तेषामेकतमस्थाने वा ग्रहा व्यवस्थिताः सन्ति तदा तेषां मध्ये बलवान्ग्रहः स्वलोकं नयति॥ ३॥

बृहस्पति देवलोक को देता है। चन्द्रमा और शुक्र पितृलोक के देने वाले होते हैं। सूर्य और मङ्गल तिर्यग्योनि [ हाथी, घोडा, ऊट, बैल इत्यादि ] में पैदा कराता है । बुध और शनैश्चर ये दोनों नरक में पहुँचाने वाले हैं। जन्मकालिक लग्न के द्रेष्काण से छठवें अथवा आठवें द्रेष्काण के, स्वामियों में जो बलवान् हो वह अपनी गति को मरने के बाद ले जाता है। अथवा लग्न से छठवें, सातवें या आठवें स्थान में बैठा हुआ ग्रह अपनी गति को मरणानन्तर प्राप्त कराता है। यदि एकही स्थान में कई ग्रह हों तो उनमें जो बलवान् हो वह अपनी गति को देता है। विशेष योग के लिये बृहज्जातकादि देखिये ॥३॥

### मोक्षगतिज्ञानम् ।

षष्ठाष्टमकराटकगो गुरूरुच्चो भवति मीनलग्ने वा ।
मेषैरबलैर्जन्मनि मरणे वा मोक्षगतिमाहुः ॥ ४ ॥

भट्टोत्पलः—मोक्षयोगज्ञानमाह । यस्य जन्मनि लग्नात् षष्ठे स्थानेऽष्टमे वा केन्द्राणामन्यतमे वा बृहस्पतिर्भवति स चोच्चस्थो भवति तदा मोक्षो भवति । अथवा लग्नं मीनो भवति तत्र बृहस्पतिवर्ज्यमन्ये ग्रहा बलवर्जिता भवंति तदा जातस्य मोक्षो भवति । एवंविधे योगे मरणकाले मोक्षो भवति। तत्र जन्ममरणं तत्सर्वेषामपि गतियोगानां ज्ञातव्यम् ॥ ४ ॥

वि० प्र०—अथ मोक्षगतियोगमाह—**षष्ठ इति**। जन्मलग्नात्षष्ठाष्टमकएटकगः षष्ठाष्टमलग्नचतुर्थसप्तमदशमस्थानानामन्यतमस्थाने स्वोच्चराशिगतो गुरु स्थितस्तदा तस्य मोक्षगतिर्वाच्या । एवं जन्मनि मीनराशि लग्ने तत्र च शेषैगुरुवर्जमन्यैरबलैर्बलरहितैः मोक्षगतिर्वाच्या । वा मरणे मरण समये वा एवं विधे योगे मोक्षगतिर्मृतकस्य कथनीयेति ॥ ४ ॥

(१) बृहस्पति अपने उच्चराशिका होकर जन्मलग्नसे छठवें, आठवें या केन्द्र ( १।४।७।१० ) में पड़ा हो, अथ वा ( २ ) मीनलग्न हो और बृहस्पति के अतिरिक्त शेष सब ग्रह निर्बल हों तो मनुष्य मरने के बाद मोक्षगति को पाता है। इसी प्रकार मरणकालिकग्रह की स्थिति हो तो भी मोक्षगति को पाता है ॥ ४ ॥

जातो जन्तुः कस्माल्लोकादागत इति ज्ञानम् ।

गुरुरुडुपतिशुक्रौ सूर्यभौमौ यमज्ञौ
विबुधपितृतिरश्चो नारकीयाँश्च कुर्युः ।
दिनकरशशिवीर्योऽधिष्ठितत्र्यंशनाथाः
प्रवरसमनिकृष्टास्तुङ्गह्रासादनूके ॥ ५ ॥

इति श्रीवराहमिहिरकृते लघुजातके निर्याणाध्यायः पञ्चदशः ॥ १५ ॥

भट्टोत्पलः—यो जातो जंतुः स कस्माल्लोकादागत इति ज्ञानार्थमाह। आदित्यचन्द्रयोर्यो बलवान्स यस्मिन्द्रेष्काणे व्यवस्थितः तस्य द्रेष्काणस्य योऽधिपस्तस्य यो लोकस्तस्मादागत इति वक्तव्यम्। स यदि द्रेष्काणो गुरुसंबन्धी भवति तदा देवलोकादागत इति वाच्यम् । चंद्रशुक्रयोरन्यतरसंबन्धी चेद्भवति तदा पितृलोकादागतः। आदित्यभौमयोरन्यतरसंबन्धी चेद्भवति तदा तिर्यग्लोकात्। बुधसौरयोरन्यतरसंबंधी चेद्भवति तदा नरकलोकादागतः। यस्माल्लोकादागतः तत्रापि श्रेष्ठमध्यहीनत्वमाह । यद्ग्रहदर्शितलोकाद्यस्य जन्म स चेद् ग्रहः स्वोच्चराशिस्थः तत्रासौ श्रेष्ठ

आसीदिति ज्ञेयम् । अथोच्चराशिच्युतो नीचराशिमप्राप्यावस्थित-स्तदासौ मध्यम आसीदिति ज्ञेयम् । अथ नीचराशिस्थितस्तदाधम आसीदिति ज्ञेयम् ॥ ५ ॥

इति भट्टोत्पलविरचितायां लघुजातकटीकायां शिष्यहितायां नैर्याणिकाऽध्यायः पञ्चदशः समाप्तः ॥१५॥

वि० प्र०—स्फुटार्थः ॥ ५ ॥

इत्याजमगढमण्डलान्तर्गतब्रह्मपुरग्रामाभिजन श्रीपं० धर्मदत्तद्विवेदिसूनु-ज्यौ० श्रा० विन्ध्येश्वरीप्रसादद्विवेदिविरचितायां बालबोधिनी-टीकायां निर्याणाध्यायः पञ्चदशः समाप्तः ॥ १५ ॥

सूर्य और चन्द्रमा इन दोनों में यो बलवान् होकर जिस द्रेष्काण में पड़ा हो उस द्रेष्काण का जो स्वामी हो उस ग्रह का जो लोक उसलोक से मनुष्य आया है, ऐसा कहना। यदि वह द्रेष्काण बृहस्पति का हो तो देवलोक से, चन्द्रमा या शुक्र का द्रेष्काण हो तो मनुष्य पितृलोक से, सूर्य या मङ्गल का द्रेष्काण हो तो तिर्यग्योनि से, बुध या शनि का द्रेष्काण हो तो नरक से आया हुआ मनुष्य है, ऐसा जानना। तत्तल्लोक से आये हुए का ज्ञान कराने वाला जो ग्रह, वह यदि अपनी उच्चराशि में पड़ा हो तो मनुष्य वहाँ श्रेष्ठ श्रेणी में था, उच्च और नीच के बीच में ग्रह व्यवस्थित हो तो मध्यम श्रेणी में था, एवं नीचराशि में ग्रह के रहने पर मनुष्य नीच कोटि में था ऐसा कहना चाहिये ॥ ५ ॥

इति विन्ध्येश्वरीप्रसादद्विवेदिकृतायां लघुजातकस्य हिन्दी-टीकायां नैर्याणिकाऽध्यायः पञ्चदशः समाप्तः ॥ १५ ॥

## अथ नष्टजातकाध्यायः ॥ १६ ॥

### राशीनां ग्रहाणां च गुणाकाङ्काः ।

गोसिंहौ जितुमष्टमौ क्रियतुले कन्यामृगौ च क्रमात्,
संवर्ग्या दशकाष्टसप्तविषयैः शेषाः स्वसंख्यागुणाः ।
जीवारास्फुजिदैन्दवाः प्रथमवच्छेषा ग्रहाः सौम्यव-
द्राशीनां नियतो विधिर्ग्रहयुतैः कार्या च तद्वर्गपे ॥१॥

भट्टोत्पलः–तत्र प्रश्नकाले तात्कालिकलग्नं कृत्वा लिप्तापिंडीकार्यं । तत्र तस्य लिप्तापिण्डीकृतस्य गुणाकारविज्ञानार्थमाह। वृषलग्नगतं दशभिर्गुणयेत् सिंहं च दशभिरेवं मिथुनमष्टभिर्वृश्चिकमप्यष्टभिः मेषं सप्तभिस्तुलामपि सप्तभिर्गुणयेत । कन्यां पञ्चभिः मकरमपि पञ्चभिः कर्कटलग्नगतं चतुर्भिर्गुणयेत् । धनुर्नवभिः कुंभमेकादशभिः मीनं द्वादशभिरेवं तावल्लग्नं स्वगुणाकारेणावश्यमेव गुणयेत् । लग्ने यदि ग्रहो भवति तत्र गुणाकारविधिः गुरौ लग्नगते दशभिर्गुणयेत् । भौमे लग्नगते अष्टभिः शुक्रे सप्तभिः बुधे पंचभिः शेषा आदित्यचंद्रशनयस्तेषां प्रत्येकं पंचभिर्गुणाकारःएवं तात्काललिप्तापिंडीकृतं लग्नमवश्यं राशिगुणकारेण गुणयेत् । ततो ग्रहसंभवे सति ग्रहोक्तगुणकारैरपि एवं गुणितमेकांते स्थापयेत् ॥ १ ॥

प्रश्नसमयमें तात्कालिकलग्न राश्यादि स्पष्ट करके कला बनाना उसको यदि वृष और सिंह प्रश्नलग्न हो तो १० से, मिथुन और वृश्चिक प्रश्नलग्न हो तो ८ से, मेष और तुला प्रश्न लग्न हो तो ७ से, कन्या और मकर प्रश्नलग्न हो तो ५ से, और शेष राशि [ कर्क, धनु कुम्भ, मीन ] का प्रश्नलग्न हो तो राशि संख्या से अर्थात् कर्क हो तो ४ से, धनुहो तो ९ से, कुम्भ हो तो ११, से मीन हो तो १२ से गुणा करें । और यदि प्रश्न लग्न में कोई ग्रह भी पडा

हो तो उस ग्रह के गुणक से भी उसको गुणा करे । जैसे बृहस्पति प्रश्नलग्न में स्थित हों तो १० से, मङ्गल प्रश्नलग्न में पड़े हों तो ७ से, बुध हों तो ८ से, और बाकी ग्रह ( सूर्य, चन्द्रमा, शनि ) स्थित हों तो ५ से गुणा करे । यदि कई ग्रह प्रश्नलग्नमें पड़े हों तो सबों के गुणक से पुनः पुनः गुणा करे उस गुणन फल को अलग रख दे ॥१॥

'नक्षत्रानयनम् ।

सप्ताहतं त्रिघनभाजितशेषमृक्षं
दत्वाऽथवा नव विशोध्य नवाऽथवा स्यात् ।
एवं कलत्रसहजात्मजशत्रुभेभ्यः
प्रष्टुर्वदेदुदयराशिवशेन तेषाम् ॥ २ ॥

भट्टोत्पलः—अथ नक्षत्रानयनमाह । प्राक् योऽसौ राशिः पृथक् स्थापितस्ततः सप्तभिर्गुणयेत् ततस्तत्र नव देयाः शोध्या वा न किंचिद्वा कदोच्यते । यदा प्रश्नलग्ने प्रथमद्रेष्काणो भवति तदा नव देया । अथ द्वितीयस्तदा न देया न शोध्याः।अथ तृतीयस्तदा नव शोध्याः । एवं कृत्वा तस्य राशेः सप्तविंशत्या भागमाहरेत् ततो यावत्संख्याकोंकोऽवशेषो भवति तावत्संख्यमाश्विन्यादितो यन्नक्षत्रं भवति तन्नक्षत्रं तस्य वाच्यम् । अथ पुरुषः स्वपत्न्या नक्षत्रं पृच्छति तदा तात्कालिके लग्ने राशिषट्कं दत्वा तस्य लग्नस्य लिप्तापिंडीकृत्वाऽऽगतं राशिं गुणकारेण गुणयेत् । लग्ने ग्रहश्चेत्तद्गुणकारेण गुणयेत् । ततस्तस्य सप्तगुणस्य प्राग्वन्नवांकविशोधनं कर्तव्यम् । ततस्तस्य सप्तविंशत्या भागमपहृत्यावशेषांकसमं तत्पत्न्या नक्षत्रं वाच्यम् । अथ भ्रातुः पृच्छति तदा तत्काललग्ने राशिद्वयं दत्वा एतदेव कर्म कृत्वा तत् भ्रातुः नक्षत्रं वाच्य । अथ पुत्रस्य पृच्छति तदा तत्काललग्ने

राशिचतुष्टयं दत्वा तदेव कर्म कृत्वा तत्पुत्रनक्षत्रं वाच्यम् । अथ शत्रोः पृच्छति तदा तत्काललग्ने राशिपंचकं दत्वा तदेव कर्म कृत्वा तच्छत्रुनक्षत्रं वाच्यम्। अथ शत्रोः पृच्छति तदा तत्काललग्ने राशिपञ्चकं दत्वा तदेव कर्मकृत्वा तच्छत्रोर्नक्षत्रं वाच्यम्।एतदुपलक्षणार्थं त्रिराशिसहितात्तात्कालिकाल्लग्नात् तन्मित्रस्यापि वाच्यम्। नक्षत्रानयनं उपलक्षणार्थमेवं सकलमपि नष्टजातकं वाच्यम् ॥ २ ॥

अब अलग रखे हुए गुणनफलको सातसे गुण कर गुणन फलमें यदि लग्नमें [1]प्रथम द्रेष्काण हो तो नव६ जोड कर, दूसरा द्रेष्काण हो तो [न घटा कर, न जोड़ कर अर्थात्] वैसाही रख कर, तीसरा द्रेष्काण हो तो नव घटा कर तीन के घन [ $3^3=27$ ] का भाग देना जो शेष हो वही अश्विनी आदि नक्षत्रों की गणना क्रमसे प्रश्नकर्ता की नक्षत्र होती है । इसी तरह प्रश्न कर्ता यदि अपनी स्त्री का, भाई का, पुत्र का, शत्रु का नक्षत्र पूछे तो उस के [७।३।५।६] भावों पर से उक्त प्रकार से क्रमसे स्त्री, भाई, पुत्र, शत्रु इनके नक्षत्रों का आनयन करै। यदि स्त्री का नक्षत्र पूछै तो राश्यादि प्रश्न लग्नमें ६ राशि जोड़ कर, भाई का नक्षत्र पूछै तो राश्यादि प्रश्नलग्न में २ राशि जोड़ कर, माता का पूछे तो ३ राशि जोड़ कर, पुत्र का पूछे तो ४ राशि जोड कर, शत्रु का पूछे तो ५ राशि जोड़ कर, पिता का पूछे तो ६ राशि राश्यादिस्फुटलग्न में जोड़ कर पूर्वोक्त विधिसे नक्षत्रानयन करै ॥ २ ॥

## वर्षर्तुमासाद्यानयनम् ।

वर्षर्तुमासतिथयो द्युनिशं ह्युडूनि
वेलोदयर्क्षनवभागविकल्पनाः स्युः ।

( १ ) किसी आचार्य के मत से प्रश्नलग्न में चरराशि स्थित हो तो नव जोड़ कर, द्विस्वभाव राशि हो तो नव घटा कर एवं स्थिर राशि होतो विना घटाये, जोड़े २७ का भाग देकर जो शेष बचे वह अश्विन्यादि नक्षत्र होता है ।

भूयो दशादिगुणिताः स्वविकल्पभक्ता
वर्षादयो नवकदानविशोधनाभ्याम् ॥ ३ ॥

भट्टोत्पलः—अथ वर्षाद्यानयनम् । लग्नं तावत्तात्कालिकं लिप्तापिण्डीकृतं राशिगुणकारहतं संभवात्तु ग्रहगुणकारहतमपि एकांते स्थापितं तद्दशादिगुणं कारयेत् । एतदुक्तं स राशिस्थान-चतुष्टये कार्यः । एकत्र दशगुणः कार्यः, द्वितीये स्थानेऽष्टगुणः, तृतीये सप्तगुण, चतुर्थे पंचगुणः । ततस्तेषां प्राग्वत् नवकदान-विशोधनं कृत्वा स्वविकल्पैर्भागमपहृत्यावशेषं वर्षादयो ज्ञेयाः॥३॥

वर्ष, ऋतु मास, तिथि पक्ष, अहोरात्र, नक्षत्र, वेला [ समय ] उदय [ लग्न,] नवमांश, इन भेद की कल्पना करै । अलग रखे हुए गुणनफल को ४ स्थानों में रख कर क्रमसे पहली जगह १० से, दूसरे स्थान में ८ से, तीसरे स्थानमें ७ से और चौथे स्थान में ५ से गुण के और कहे हुए विधि से ९ जोड़ वा घटा के अपने २ भाजकों से भाग देकर जो शेष बचै उस पर से आगे के श्लोकों में कहे गये प्रकार से वर्ष,ऋतु इत्यादि का ज्ञान करै ॥ ३ ॥

विज्ञेया दशकेष्वब्दा ऋतुमासास्थैव च ।
अष्टकेष्वपि मासार्द्धं तिथयश्च तथा स्मृताः ॥ ४ ॥

भट्टोत्पलः—तत्र ज्ञातं कस्माद्राशेः कस्यानयनं तत्र ज्ञानार्थ-माह । एते चत्वारो राशयः स्थापितास्तेषां मध्ये यो दशगुणो राशिः तत्र प्राग्वदेव नवकदानविशोधनं कर्तव्यं एवं कृत्वा दश-गुण कर्म योग्यं स्थापयेत् एवं पृथक्कर्मभूमिं स्थाप्य तस्य विंशत्या-धिकेन शतेन भागमपहृत्य योंऽकोऽवशिष्यते तदङ्कसमवर्षाणि जातानि इति वक्तव्यम्। तस्यैव षड्भिर्भागमपहृत्य तत्र योंऽकोव-शिष्यते तदंकसमे शिशिरादारभ्यर्तौ जात इति वक्तव्यम्। तस्यैव

कर्मयोग्यस्य राशेर्द्वाभ्यां भागमपहृत्य यदैकोऽवशिष्यते तदा ज्ञाततौ प्रथमे मासि जन्म इति वाच्यम् । शून्यमवशिष्यते तदा तद्द्वितीये मासि जातः । एवं कृत्वा दशहतः कर्मयोग्यो राशिरपास्यः । यस्य विंशत्यधिकवर्षशतादप्यधिकं जन्मतो व्यतीतं भवति तस्य नष्टजातकज्ञानोपायो नास्ति । योऽसावष्टहतो राशी स्तत्र प्राग्वदेव नवकदानविशोधनविधानं कृत्वा कर्मयोग्यराशिं स्थापयेत् । ततस्तस्य द्वाभ्यां भागमपहृत्य यद्येकोऽवशिष्यते तदा शुक्लपक्षे जात इति वक्तव्यम् । न किंचिदवशिष्यते तदा कृष्णपक्षे जात इति वक्तव्यम्। तस्यैव कर्मयोग्यस्य राशेः पंचदशाभिर्भागमपहृत्य योऽवशिष्यते तदंकसमसंख्यातिथौ जात इति वाच्यम् । एवं कृत्वाऽष्टगुणकर्मयोग्यो राशिरपास्यः ।। ४ ।।

(१)प्रथम अलगरखे हुए गुण न फलको१०से गुणाकर ६जोड़ वा घटा कर जो हुआ उस पर सें वर्ष,ऋतु, मास का ज्ञान करे। जैसे दश से गुण के ६ जोड़ वा घटा कर जो संख्या हो उस में १२० का भागदेने पर जो शेष बचै वह प्रश्न पूछने वाले का गत वर्ष होता है। ६ का भाग देने पर जो शेष बचै वह जन्मकालिक शिशिरादि [ १ शिशिर, २ वसन्त, ३ ग्रीष्म, ४ वर्षा, ५ शरद् ६ हेमन्त ] ऋतु होता है। उसी १० से गुणित अङ्क में २ का भाग देने से यदि १ शेष बचै तो आये हुए ऋतु में पहला मास, शून्य शेष बचै तो दूसरा मास जानना। जिस मनुष्यकी अवस्था १२० वर्षसे अधिक हो गई हो उसकी नष्ट कुण्डली बनाने का कोई उपाय [ प्रकार ] नहीं है। (२) दूसरी जगह में ८ से गुण के नव जोड़ या घटा कर जो पिण्ड हो उस पर से पक्ष और तिथि का ज्ञान करे। जैसे आठ से गुणा कर के जो पिण्ड हो उस में २ का भाग देने पर यदि १ शेष बचै तो शुक्ल पक्ष. शून्य शेष बचै तो कृष्ण पक्ष जानना। एवं उसी पिण्डमें १५ का भाग देने पर जो शेष बचै वह आये हुए पक्ष की वर्तमान तिथि होती है॥ ४॥

## जन्मकालादिज्ञानम् ।

दिवसरात्रिप्रसूतिं च नक्षत्रानयनं तथा ।
सप्तसङ्ख्येऽपि वर्गे तु नित्यमेवोपलक्षयेत् ॥ ५ ॥

भट्टोत्पलः—योऽसौ सप्तहतो राशिस्तत्र प्राग्वदेव नवकदान-विशोधनं कृत्वा ततः कर्मयोग्यं राशिं स्थापयेत । तस्य द्वाभ्यां भागमपहृत्य यद्येकोऽवशिष्यते तदा दिने जात इति वाच्यम्। अथ न किंचिदवशिष्यते तदा रात्रौ इति वक्तव्यम्। तस्यैव कर्मयोग्य-राशेः सप्तविंशत्या भागपमहृत्य योंऽकोऽवशिष्यते तदंकसमसंख्यके नक्षत्रे अश्विन्यादित आरभ्य जात इति वाच्यम् । अस्य कर्मणः पुनरपि विधानं नक्षत्रानयनस्य बाहुल्येनोपयोगित्वात् ॥ ५ ॥

(३)एवं जहाँ अलग रखे हुए गुणनफल को७ से गुण ६ जोड या घटा उस पर से दिनरात्रि और नक्षत्र का ज्ञान करना। जैसे तीसरी जगह अलग रखे हुए गुणन फल को ७ से गुण कर ६ जोड या घटाय के जो पिण्ड हो उसमें २ का भाग देने पर यदि १ शेष रहै तो दिन का जन्म, शून्य शेष बचै तो रात्रिका जन्म जानना। एवं उसी पिण्ड में २७ का भाग देने पर जो शेष बचै वह अश्वि न्यादि जन्मनक्षत्र होगा। [ इस को प्रसङ्ग वश आचार्यने फिर कह दिया है। ] ॥ ५ ॥

वेलामथ विलग्नं च होरामंशकमेव च ।
पञ्चकेषु विजानीयान्नष्टजातकसिद्धये ॥ ६ ॥

इति श्रीवराहमिहिराचार्यकृते लघुजातके
नष्टजातकाऽध्यायःषोडशः ॥ १६ ॥

भट्टोत्पलः—यस्मिन्दिनं पुरुषजन्म जातं तस्य दिनस्य प्रमाणं घटिकादिकं कार्यं अथ रात्रौ जन्म जातं तदा रात्रिप्रमाणं ततो योऽसौ पंचगुणो राशिः स्थापितः तस्य प्राग्वदेव नवकदान-विशोधनं कृत्वा ततो दिनप्रमाणेन रात्रिप्रमाणेन च भागमपहृत्य यदवशिष्यते तस्मिन् काले दिनगते रात्रिगते च तस्य जन्म वाच्यम् । अथ विलग्नमिति काले ज्ञाते राश्यादिलग्नं कार्यम् तत्र तस्य लग्नस्य होराद्रेष्काणनवांशद्वादशांशत्रिंशांशकभागाः कार्याः। ततस्तस्य तात्कालिका ग्रहाश्च कर्तव्याः । ततो यथाभिहितेन विधिना दशान्तर्दशाष्टकवर्गादेरभिहितस्य फलानां निर्देशः कार्यः। एवं नष्टजातकं साधयेत् ॥ ६ ॥

इति श्रीभट्टोत्पलविरचितायां लघुजातकटीकायां शिष्यहिताभि-धानायां नष्टजातकाध्यायः षोडशः ॥ १६ ॥

विन्ध्येश्वरीप्रसादः—

अथ प्रश्नकालान्नष्टजातकोदाहरणम्—

तत्रादौ प्रश्नलग्नस्यं राशिगुणाकाङ्कबोधकचक्रम् ।

| राशयः | मेष | वृष | मि. | कर्क | सि. | क. | तु. | वृ. | धन | म. | कुं. | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| गुणाकाङ्काः | ७ | १० | ८ | ४ | १० | ५ | ७ | ८ | ६ | ५ | ११ | १२ |

प्रश्नाङ्के सग्रहे सति ग्रहाणां गुणाकाङ्काः—

| ग्रहाः | सूर्यः | चन्द्रः | भौमः | बुधः | गुरुः | शुक्रः | शनिः |
|---|---|---|---|---|---|---|---|
| गुणाकाङ्काः | ५ | ५ | ८ | ५ | १० | ७ | ५ |

## प्रश्नकालिकी ग्रहस्थितिः ।




श्रीविक्रमसंवत् १९८७ पौषकृष्णादशम्यां ९।३१ चन्द्रे चित्रा-नक्षत्रे ३९।५२ प्रातः( ८ घण्टा ४ मि० ) वादनसमये कस्य-चिन्नष्टजातकविषयकः प्रश्नः । तत्र वाराणस्यां घटिकादिकं सावनेष्टं ४।३८।५० दिनमानम् २५।५८ स्पष्टसूर्यः ७।२९।१८।३६ अयनांशाः २१।२८।३० स्फुटलग्नम् ८।२५।३८।५३ अस्य कलापिण्डम् १५९३८।५३।लग्नस्य गुणकाङ्काः९,लग्नस्थयोः शनिबुधयोर्गुणकौ५,५। सर्वेषां गुणकाङ्कानां घातः=९×५×५=२२५ अनेन लग्नस्य कलापिण्डं गुणितं जातं गुणनफलं=३५८६४६५।१५ इदं चतुःस्थानेषु संस्थाप्य क्रमेण १० । ८ । ७ । ५ एभिर्गुणिते प्रश्नाङ्गस्य तृतीय द्रेष्काण गतत्त्वात्सर्वत्र ९ विशोधिते जातानि कर्मयोग्य फलानि ( १ ) ३५८६४६४३।३० । ( २ ) २८६९१७१३। ( ३ ) २५१०५२४७।४५ ( ४ ) १७९३२३१७।१५ । तत्रादौ ( १ ) दशगुणितकर्मयोग्यकलापिण्डे ३५८६४६४३।३० अस्मिन् १२० भक्ते शेषं १२।३० अतो गताब्दाः १२। वर्तमानाब्दाः=१३ । अत्र गताब्दांकैर्हीनाः प्रश्नकालिकसंवत् १९८७ जाता जन्मसंवत्सराः १९७४ । तस्मिन्नेव दशगुणितकर्मयोगकलापिण्डे ६ भक्तेशेषं शिशिरा-दारभ्य जन्मकालिकर्तुः=१ शिशिरः । पुनरस्मिन्नेव३५८६४६४३।३० दशगुणितकर्म योग्यकलापिण्डे२ भक्ते शेषं गतमासः१(२) अथाष्टगुणित-

कर्मयोग्यकलापिण्डे २८६९१७१३ ऽस्मिन् २ भक्ते जातं शेषं१ तेना-सिते पक्षे जन्म । पुनस्तस्मिन्नेव कलापिण्डे १५ भक्ते जात शेषं=१३ तेन गततिथिः १३ जन्मतिथिः=१४।

## अथ दिवारात्रिजन्म-नक्षत्रज्ञानम् ।

(३) पूर्वोक्तसप्तगुणितकर्मयोग्यकलापिण्डे २५१०५२४७।४५ ऽस्मिन् २भक्ते शेषं १।४५तेन रात्रौ जन्म। भूयस्तस्मिन्नेव २५१०५-२४७।४५ सप्तगुणितकर्मयोग्यकलापिण्डे २७ भिर्भक्ते शेषं ७।४५ तेन जन्मनक्षत्रं पुष्यः ।

## इष्टकालज्ञानम् ।

(४) पञ्चगुणितकर्मयोग्यकलापिण्डेमाने१७९३२३१७।१५ प्रश्न दिनस्य दिनमानेना २५।५८ नेन भक्ते शेषं०।५९ तेन रात्रौ जन्मेष्टम् ०।५९ अतः सूर्योदयादिष्टं २६।५७ अस्माज्जन्मकालिकाःसर्वे सोदया ग्रहा भावा अष्टकवर्गा दशाद्या साध्या इतिदिक् ॥ १–६ ॥

इत्याजमगढमण्डलान्तर्गतब्रह्मपुरग्रामाभिजनश्रीपं० धर्मदत्त-
द्विवेदिसूनु-ज्यौ०आ०विन्ध्येश्वरीप्रसादद्विवेदि-
कृतायां लघुजातकस्य बालबोधिनीटीकायां
नष्टजातकाध्यायः षोडशः समाप्तः॥१६॥



(४)पाँचसे गुणित नव युक्त या वियुक्त जो चौथे जगह पिण्डहै उस पर से समय ( इष्टकाल ) जन्म लग्न, होरा, नवमांश, द्वादशांश इत्यादि का ज्ञान करना । अर्थात् ५ से गुणित ९ से युक्त वियुक्त पिण्डमें दिनमान या रात्रिमान से भाग देने पर जो शेष रहे वहदिन का अथवा रात्रि का इष्टकाल होता है। अब उस इष्ट काल पर से

जन्म लग्न, उस पर से होरा, नवमांश, द्वादशांश, इत्यादि का ज्ञान करै। तथा उसी इष्ट काल पर से सब ग्रहों का ज्ञान करके कुण्डली बनावै॥ ६ ॥

इति विन्ध्येश्वरीप्रसादद्विवेदिकृतायां लघुजातकस्य हिन्दी-टीकायां नष्टजातकाध्यायः षोडशः समाप्तः ॥ १६ ॥



संवत् नगसिधिनिधिविधू १६८७ पौष वदी विधु वार।
दशमी महँ पूरित करी टीका ग्रन्थ विचार॥
या महँ जो भ्रमदोष से होई खोरि कछु मोरि।
वुधजन! ताहि सुधारि कै लीजै तत्व पछोरि॥

शुभमस्तु।



# अथ विंशोत्तरीयदशाद्यानयनम् ।

'दशा विंशोत्तरी चात्र ग्राह्ये' तिवृद्धवचनमनुसृत्येदानीन्तना जन्मकुण्डल्यां विंशोत्तरीयामेव दशां संरचन्ति तेन बालानवबोधार्थं सैव ग्रन्थान्तरात्संगृह्येहोपन्यस्यते—

तत्र तावत्तद्भेदाः—

दशा चान्तर्दशा चैव विदशोपदशा तथा ।
प्राणाख्या च फलं तासां वदेच्छास्त्राऽनुसारतः ॥ १ ॥

दशान्तर्गता सर्वेषामन्तर्दशा भवन्ति । तत सर्वासामन्तर्दशानां मध्ये समेषां पृथक् २ विदशाः ( प्रत्यन्तर्दशाः ), एवं प्रत्यन्तराणां मध्ये उपदशास्तासां मध्ये प्राणाख्या दशा भवन्ति । एतासां फलानि पाराशरोक्तादिशास्त्रानुसारेण वक्तव्यानि ॥ १ ॥

दशाज्ञानम्—

कृत्तिकादिनवकत्रिके क्रमात्सूर्यचन्द्रकुजराहुमन्त्रिणः ।
सौरिसोमसुतकेतुभार्गवाः भप्रवर्तितदशाब्दनायकः ॥ २ ॥

कृत्तिकादिनवकत्रिके, कृत्तिकादिनवके, उत्तरफल्गुन्यादिनवके, उत्तराषाढादिनवके च क्रमेण सूर्यादिग्रहा दशानायकाः भवन्ति ॥ २ ॥

ग्रहाणां दशवर्षाणि—

तनु६नय१०सित७जाया१८तोपि१६धन्या१९सटा१७सा७
नख २० इति गदिता सा भास्करादिक्रमेण ॥ ३ ॥

सूर्यादिग्रहाणामेते क्रमेण दशाब्दाः भवन्ति इति ॥ ३ ॥

दशाया भुक्तभोग्यवर्षाद्यानयनम्—

निजजन्मनि आदिमा दशा जनिभस्येतघटीसमाहता ।
सकलर्क्षघटीविभाजिता जनि भुक्ता हि दशा भवेत्ततः ।
अवशिष्टदशाफलं वदेत्परिशेषस्य यथोक्तवर्षकैः ॥ ४ ॥

अस्योदाहरणम्—कस्यचिज्जन्मनक्षत्रं चित्रा तेन भौमदशायां जन्म । चित्राया भयातम् २० । ५०=१२५० भभोगः ६१ । ५०=३७१० ततो भयातम् पलात्मकं १२५० भौमदशावर्षमानेन ७ गुणितं ८७५० पलात्मकभभोगमानेन ३७१० भक्तं लब्धं २ गतवर्षमानं । शेषं २३३० द्वादशभिर्गुणितं भभोगेन ३७१० भक्तं लब्धं ७ गतमासाः । मासशेषं १६६० त्रिंशता संगुण्य ४९८०० तेनैव भभोग३७१०मानेन भक्ते लब्धं १६ गतदिनानि । ततो दिनशेषं ३४० षष्ठ्या

गुणयित्वा २०४०० तेनैव भभोगेन ३७१० भक्ते लब्धं ५ घटिकाः । ततो घटीशेषं १८५० षष्ट्या संगुण्य १११००० भभोगेन३७१०भक्ते लब्धं २९पलानि एवं भौमस्य भुक्तदशा वर्षमासादिका २ । ७ । १६ । ५ । २९ दशावर्षेषु शोधिता जाता भोग्या ४ । ४ । १३ । ५४ । ३१ । भौमदशा ॥४॥

अन्तर्दशानयनम्—

दशादशाघातभवस्य योऽङ्क आद्यः स धीरैस्त्रिगुणो विधेयः ।
तावन्मिताः स्युर्दिवसाश्च मासाः शेषाङ्कतुल्याः सुधियावगम्याः ॥ ५ ॥

दशेशवर्षान्तर्दशेशवर्षसंख्ययोगु णनफलस्य य आद्योऽङ्कस्तस्त्रिगुणतुल्या अन्तर्दशाया दिवसा अवशिष्टांकसमा मासा श्चभवन्ति ॥ ५ ॥

अथवाऽन्तर्दशाप्रत्यन्तर्दशाद्यानयनम्—

स्वैः स्वैर्दशाब्दगु णितं दशादि—
वर्षादिकं विंशतियुक्शतेन ।
भजेच्च लब्धं तु निजान्तरान्त—
र्दशादिमानं कथितं ग्रहाणाम् ॥ ६ ॥

उदाहरणम्—राहुदशायां राहोरन्तर्दशा नेया तदा दशेशवर्षाणि १८ अन्तर्दशेश १८ वर्षमानेन संगुण्य ३२० विंशत्युत्तरशतेन १२० भक्तानि लब्धमब्दाः २ ततो वर्षशेषं ८४ द्वादशभिः संगुण्य१००८तेनैव भाजकेन भक्ते लब्धं मासाः ८ । मासशेषं ४८ त्रिंशता संगुण्य १४४० तेनैव भागहारेण भक्ते लब्धं १२ दिनानि । एवं वर्षादिकं २ । ८ । १२ राहुदशायां राह्वन्तरं जातमिति । एवं प्रत्यन्तरादिकमानेयम् ॥ ६ ॥

श्रीशंकरः शरणम् ।

# परिचयः

उत्तरदिशि काशीतः षट्त्रिंशत्क्रोशदूरे यत् ।
आजमगढमण्डलगं 'ब्रह्मपुरं' विद्यते सुपुरम् ॥ १ ॥
तत्राऽभूद् द्विजवर्यो रामहिताख्यः सतां मान्यः ।
तत्तनयेष्वनुजन्मा विद्याविनयादिना युक्तः ॥ २ ॥
अजनिष्ट धर्मदत्तः पुत्रं श्रीरामदेव्यां यम् ।
काश्यां तेनाधीत्य ज्योतिःशास्त्रप्रवीणेभ्यः ॥ ३ ॥
मिश्रोपनामकेभ्यः श्रीयुक्तरिसालदत्तेभ्यः ।
मैथिलपण्डितवर्य श्रीमच्चन्द्रशेखरेभ्यश्च ॥ ४ ॥
पण्डितमान्यसुधाकरतनयश्रीपूज्यपादेभ्यः ।
पद्माकरेभ्य इंग्लिश् गणितविताने़ऽपि निपुणेभ्यः ॥ ५ ॥
महामहोपाध्यायश्रीयुतदेवीप्रसादेभ्यः ।
ज्योतिःशास्त्रं क्रमशः काँश्चित्काव्यस्य ग्रन्थाँश्च ॥ ६ ॥
वाराणसेयसंस्कृतराजकीयपाठशालायां ।
तीर्त्वाऽऽचार्यपरीक्षासिन्धुं श्रीपूज्यपादानाम् ॥ ७ ॥
कविराड्महोदयानामाशत्व उदारचरितानाम् ।
लब्धज्ञानलवेन श्रीविन्ध्येश्वरीप्रसादेन ॥ ८ ॥
रचिता समाप्तिमगमच्छ्रीमच्छम्भोः प्रसादेन ।
श्रीबालबोधिनीयं टीका लघुजातकाख्यस्य ॥ ९ ॥
नगवसुनिधिविधुवर्षे श्रीविक्रमराजराजस्य ।
पौषे बहुलदलेश्रीपरे तपतिथौ विधोर्वारे ॥ १० ॥
या भ्रमदोषवशान्मे त्रुटयः सन्तीह शोधने चापि ।
ताः शोधयन्तु सुधियः परकृतितुष्टा दयालेशैः ॥ ११ ॥
दोषैकदृग्धुरीणोऽप्येषा बद्धाञ्जलिर्याञ्च्या ।
भावान्स्वभावसिद्धान्स्वीयान् तेपि प्रकटयन्तु ॥ १२ ॥

इति शम् ।

